श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# तत्वसङ्ख्यानम्

स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्वमिष्यते ।
स्वतन्त्रो भगवान् विष्णुर्भावाभावौ द्विधेरत् ।
प्राक्प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते ।
चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः ।
दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनम् ।
नित्यादुःखा रमाऽन्ये तु स्पृष्टदुःखाः समस्तशः ।
स्पृष्टदुःखा विमुक्ताश्च दुःखसंस्था इति द्विधा ।
दुःखसंस्था मुक्तियोग्या अयोग्या इति च द्विधा ।
देवर्षिपितृपनरा इति मुक्तास्तु पञ्चधा ।
एवं विमुक्तियोग्याश्च तमोगाः सृतिसंस्थिताः ।
इति द्विधामुक्त्ययोग्या दैत्यरक्षःपिशाचकाः ।
मर्त्याधमाश्चतुर्धैव तमोयोग्याः प्रकीर्तिताः ।
ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा ।
नित्यानित्यविभागेन द्विधैवाचेतनं मतम् ।
नित्या वेदाः पुराणाद्याः कालः प्रकृतिरेव च ।
नित्यानित्यं त्रिधा प्रोक्तमनित्यं द्विविधं मतम् ।
असंसृष्टं च संसृष्टमसंसृष्टं महानहम् ।
बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च ।
संसृष्टमण्डं तद्गं च समस्तं सम्प्रकीर्तितम् ।

सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ।
बन्धो मोक्षः सुखं दुःखमावृत्तिर्ज्योतिरेव च ।
विष्णुनाऽस्य समस्तस्य समासव्यासयोगतः ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं तत्वसङ्ख्यानम्

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# तत्वसङ्ख्यानम्

श्रीजयतीर्थभिक्षुविरचितया टीकया समलङ्कृतम्

## टीका

### मङ्गलाचरणम्

लक्ष्मीपतेः पदाम्भोजयुगं नत्वा गुरोरपि ।
करिष्ये तत्वसङ्ख्यानव्याख्यानं नातिविस्तरम् ॥ १ ॥

### श्री राघवेन्द्रतीर्थविरचितः तत्वसङ्ख्यानटीकाभावदीपः

प्रणम्यागण्यकल्याणगुणं श्रीप्राणनायकम् ।
विवृणोमि यथाबोधं तत्वसङ्ख्यानपञ्चिकाम् ॥ १ ॥

ग्रन्थादौ देवतागुरुनतिरूपमङ्गलमाचरंश्चिकीर्षितं प्रतिजानीते ॥ **लक्ष्मी-पतेरिति** ॥ एतेन सकलवाङ्मनसदेवताया देव्या अपि भगवदुपसर्जनतया नतिरुक्ता भवति । विशिष्टविषयक्रियाया विशेषणेऽपि 'दण्डिनमानय' इत्यादावन्वयदर्शनात् । विद्यारम्भसमये देवतावन्दनवद्गुरुवन्दनस्यापि कर्तव्य-त्वादाह ॥ **गुरोरपीति** ॥ गुरोरपि पदाम्भोजयुगं नत्वेत्यन्वयः । शिष्यमन-स्समाधानायाह ॥ **नातिविस्तरमिति** ॥ न विद्यते अतिविस्तरो यस्मिन् तद्व्याख्यानं करिष्य इत्यन्वयः । 'प्रथने वावशब्दे' इति सूत्रे शब्दविषय-विस्तृतिविवक्षायां स्तृ दातोर्घञ् न भवति, 'ऋदोरप्' इति अप्प्रत्यय एव भवतीत्युक्त्या शब्दबाहुल्यहीनं अर्थबाहुल्योपेतमिति भावः ।

## बिदरहळ्ळी श्रीनिवासतीर्थविरचितं तत्वसङ्ख्यानविवरणं

**वन्दे सत्यवतीसूनुं सच्चिदानन्दविग्रहम् ।**
**श्रीमध्वमुनिसंसेव्यपादपङ्कजमन्वहम् ॥ १ ॥**
**भजेऽहं श्रीमदानन्दतीर्थार्यान् देवसेवितान् ।**
**जयराजमुनींश्चापि वेदेशाभिधयोगिनः ॥ २ ॥**
**प्रणम्य यादवाचार्यगुरूणां पादपङ्कजे ।**
**तत्वसङ्ख्यानसद्व्याख्याविवृतिः क्रियते मया ॥ ३ ॥**

इह परमकारुणिकः सर्वज्ञकल्पष्टीकाकारो जयतीर्थश्रीमच्चरणस्तत्वसङ्ख्यान व्याख्याङ्कर्तुकामः स्वचिकीर्षितग्रन्थस्य निर्विघ्नेन परिसमाप्त्यादि प्रयोजनतया शिष्टाचारपरंपरावगतं स्वेष्टदेवतायाः आदिगुरूणां च नमनरूप मङ्गलं मनसिकृत्वा शिष्यशिक्षायै ग्रन्थादावुपनिबध्नन् श्रोतृबुध्यनुकूलनाय स्वचिकीर्षितं प्रतिजानीते ॥ **लक्ष्मीपतेरिति** । लक्ष्मीपतेर्नारायणस्य सव्यदक्षिणपादयोः क्रमेणानन्दज्ञानप्रदत्वात्तदुभयप्रार्थनाय पदांभोजयुगमित्युक्तम् । युगं द्वयमित्यर्थः । युगं तु युगलं द्वन्द्वमित्यभिधानात् । यथोक्तं बृहद्भाष्ये । सुवरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षर इत्यत्र

**"स्वित्यानन्दः समुद्दिष्टो वरिति ज्ञानमुच्यते ।**
**मोक्षदानेन तज्ज्ञानात्सुवरस्य पदद्वयम् ।"**

दक्षिणश्चैव सव्यश्चेति । गुरोरित्येकवचनं समुदायापेक्षम् । गुरूणामित्यर्थः । आदिगुरवः श्रीमदानन्दतीर्थाचार्याः । परमगुरवः पद्मनाभतीर्थाः । साक्षाद्गुरवः अक्षोभ्यतीर्थाश्च गुरुशब्देन सङ्गृहीता इति ज्ञातव्यम् । अपिशब्दः समुच्चयार्थः । पदांभोजयुगं नत्वेत्यस्यानुकर्षणार्थश्च । नत्वेति क्त्वाप्रत्ययेन नमस्कारस्य ग्रन्थकरणात्पूर्वभावकथनेन तयोरङ्गाङ्गिभावः सूचितो ज्ञातव्यः । नन्वस्य ग्रन्थस्य शब्दबाहुल्योपेतत्वेन विद्वदुपादित्सागोचरत्वं न स्यादित्याशङ्कापरिहारायोक्तम् ॥ **नातिविस्तरमिति** ।

अत्यन्तविस्तरो यथा न भवति तथेत्यर्थः । ''प्रथनेवावशब्द'' इति सूत्रात्स चशब्दस्य विस्तर इत्यभिधानाच्च शब्दमात्रस्यैवात्र प्रपञ्चो निषिध्यते नार्थस्येति विस्तरशब्दं प्रयुञ्जानस्याभिप्रायो द्रष्टव्यः ।

## श्रीसत्यधर्मतीर्थविरचितं तत्वसङ्ख्यानटिप्पणम्

**रामं सत्यवतीसूनुं प्रणम्य श्रीगुरूनपि ।**
**तत्वसंख्यानटीकाया व्याख्यां कुर्वे यथामति ।।**

प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्त्याद्यर्थं शिष्टाचारपरंपराप्राप्तं स्वेष्ट-देवतानमनरूपं मङ्गलमाचरितं व्यवहितावहितमानसशिष्यशिक्षायै ग्रन्थादा-वुपग्रन्थयंश्चिकीर्षितं प्रतिजानीते ।। लक्ष्मीपतेरिति ।। करिष्य इत्युत्तमपुरुष-प्रयोगादहमिति लभ्यते । अहं तत्वसंख्यानव्याख्यानं करिष्य इत्यन्वयः । लक्ष्मीपतेः लक्ष्म्याः रमायाः पतिः भर्ता तस्य रमारमणस्य । पदाम्भोज-युगम्–अम्भसि उदके जायेते इति ते तथा । सप्तम्यां जनेर्डः । पदे पादौ अम्भोजे इव पदाम्भोजे । तयोर्युगं युग्मं पादकमलद्वयम् । **गुरोः** साक्षात् अक्षोभ्यतीर्थस्य । यद्वा एकवचनं बहुवचनार्थे । अक्षोभ्यतीर्थपद्मनाभतीर्थ सर्वज्ञाचार्याणाम् । यद्वा त्रिरावर्तितगुरुपदेन त्रयाणां लाभ इति मन्तव्यम् । **पदांभोजयुगमपि** । **नत्वा** नमस्कृत्य । **तत्वसंख्यानव्याख्यानं** तत्वसंख्यानस्य तन्नामकग्रन्थस्य व्याख्यानं विवृतिम् । **नातिविस्तरं** अति अत्यन्तं विस्तरः शब्दप्रपञ्चो यथा न भवेत्तथेति क्रियाविशेषणम् । तथा **करिष्ये इति योजना ।** शब्दप्रपञ्चे विवक्षिते स्तृणातेः ''प्रथनेवावशब्द'' इति घञो निषेधात् ''ऋदोर'' बित्यपि प्रत्यये विस्तर इति रूपम् । स च शब्दस्य विस्तर इत्यमरः । ग्रन्थारम्भसमये सकलवाङ्मनसदेवतायामङ्गल-देव्या नमनस्य मनोवृत्तेस्तत्प्रवणता हि वन्दनमिति सुधोदितस्य चित्तासक्ति रूपस्यावश्यकत्वात् तत्पृथगभिवंदनस्यातिसुष्ठ्वाचारादि सापेक्षस्य विलम्बेन भगवत्प्रसादासादकत्वेनायोगाद्भगवदुपसर्जनतयैव सा वन्दनीयेति बोधयितुं

लक्ष्मीपतेरित्युक्तम् । तथैव च वचोगीताभाष्ये द्वादशेऽध्याये ''क्लेशोधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यत'' इति श्लोकव्याख्यावसरे अव्यक्ता गतिर्दुःखं ह्यवाप्यते'' । गतिर्मार्गः । अव्यक्तोपासनद्वारको मत्प्राप्तिमार्गो दुःखमाप्यत इत्यर्थः । अतिशयोपासनसर्वेन्द्रियातिनियमनसर्वत्रसमबुद्धित्वसर्वभूतहितेरतत्वातिसुष्ठ्वाचारसम्यग्विष्णुभक्त्यादिसाधनसन्दर्भमृते नाव्यक्तापरोक्ष्यम् । तदृते च न विष्णुप्रसादः । सत्यपि तस्मिन्न सम्यग्भगवदुपासनमृते । नर्ते च तं मोक्षः । विनाऽव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इति क्लेशिष्टोऽयं मार्ग'' इत्यादि यदभियुक्तैर्बहुभिः ''क्लेशोधिकतरस्तेषा''मित्याद्युदाहृत्य ''पृथग्रमा वंदनस्य निषिद्धत्वा''दित्याद्युक्तं तत्तदसौलभ्यविवक्षयैवेति नैतद्भाष्याननुगुणमिति गुणवद्भिः सन्तोष्टव्यम् । नत्वेति त्वाप्रत्ययेन पूर्वकालीनत्वं नमनस्य, तथोत्तरकालिकत्वं ग्रन्थकरणस्य च बोध्यत इत्येककर्तृकयोर्नमनकरणयोः ''स्नात्वा भुङ्क्ते'' इतिवदङ्गाङ्गिभावो ज्ञेयः । तत्रापि मुख्यामुख्योभयनमनस्य करणप्राग्भावोऽपि ज्ञेयः । लक्ष्मीपतित्वेन प्रथमं ग्रन्थनेन नम्यपादाम्भोजस्य भगवतो विशिष्टेष्टत्वाधिकृतत्वादि सूचितमिति मन्तव्यम् ।

ननु पदाम्भोजयुगमिति कथं समासः । समर्थः पदविधिः । पदसम्बन्धी यो विधिः समासादिरूपः ससमर्थाश्रितो बोध्य इति सूत्रार्थः । असमर्थभिन्नं यत्पदं तत्समर्थमित्युच्यते । असमर्थं च तत् यत्सापेक्षम् । सापेक्षमसमर्थमित्युक्तेः । यदितरसापेक्षं तदसमर्थमिति तदर्थः । तथा च पदे इत्युक्ते कस्य पदे इत्यपेक्षा जायते । तदर्थं लक्ष्मीपतेरिति वक्तव्यम् । एवं च पदपदस्य लक्ष्मीपतिपदसापेक्षत्वेनासमर्थत्वान्न तस्यांभोजशब्देन समासः सम्भवतीति चेन्न । यथा पिता पुत्र इत्यादि शब्दश्रवणसमनन्तरं कस्य पिता कस्य पुत्र इति नियमेनाकाङ्क्षा जायते । तथा पदे इत्युक्ते कस्य पदे इति स्वारसिकाकांक्षाया जायमानत्वेन अस्य ''देवदत्तस्य गुरुकुलं चैत्रस्य दासभार्या शरैः शातितपत्र'' इत्यत्रेव नित्यसापेक्षत्वात्समासः साधुः । सापेक्षमित्यस्य

तूत्थाप्याकाङ्क्षावद्विषयत्वान्न दोषः । यद्वा लक्ष्मीपतेः पदाम्भोजयुगमित्येकं पदम् । न च निश्चितभेदस्य दर्शनेऽस्ति पुराणगमित्येतदनुव्याख्या-व्याख्यानसुधायां ''द्वितीयाभिप्रायेण तु भेदस्य दर्शन इति समासः । षष्ठ्या आक्रोश इत्यलुक् । निश्चितं परीक्षितं च तद्भेदस्य दर्शनं चेति तथोक्तम् । तत्र स्वाभिप्रायेणाक्रोशः पराभिप्रायेण निश्चितत्वमित्यविरोध'' इत्युक्तेः । एवं च तत्र यथा रामकृष्णादिरूपभेदस्य निन्दितत्वेन स्वाभिप्रायेणाक्रोशविषयत्वात् ''षष्ठ्या आक्रोश'' इत्यनेन ''चोरस्य कुल''मित्यत्रेवालुक्समासः तथा-त्रापि भगवतस्तदवयवानां च भेदः ''देवदत्तस्य कम्बल'' इत्यत्रेव षष्ठ्या प्रतीतोऽप्यानन्दमयाधिकरणीय ''न चावयवत्वविरोधः । नेह्नानास्तीति श्रुतेरवयवाद्यभेदा''दिति न्यायविवरणोदीरित ''नेह्नानास्ति किंचने''त्यादि श्रुत्या, तथा सर्वतःपाणिपादं तदित्यादिश्लोकव्याख्यावसरे त्रयोदशाध्याय-गीतातात्पर्योदाहृत ''सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुख''मित्यारभ्य ''केशादिष्वपि सर्वत्र यतः पाण्यादिशक्तिमा''नित्यन्तप्रमाणेन, ''स शिरः स दक्षिणः पक्ष'' इत्यादिश्रुत्या च निन्दित इत्याक्रोशविवक्षयोक्तसूत्रेणा-लुक्समासोपपत्तेः ।

पदाम्भोजमित्यनुक्त्वा युगमिति वचनेन द्वयोरपि ''सुवरिति प्रतिष्ठे द्वे प्रतिष्ठे द्वे एते अक्षरे'' इत्येतद्बृहदारण्यकोपनिषद्भाष्ये ''स्वित्यानन्दः समुद्दिष्टो वरिति ज्ञानमुच्यते । मोक्षदानेन तद्दानात्सुवरस्य पदद्वयम् । दक्षिणश्चैवसव्यश्चे''त्यत्र भगवद्दक्षिणसव्यपादयोः क्रमेणानन्दज्ञान-प्रदत्वोक्तेरानन्दादिप्रदत्वेनानन्दादिकामानां तच्चरणद्वन्द्वनमस्याया आवश्य-कत्वेन तत्कर्तव्यतां द्योतयामासेति तात्पर्यं ज्ञेयम् । यथा देव इति प्रमाणाद्देवतानतिं विधाय तथागुरावित्यंशशासितां गुरुनतिमभिनयेन दर्शयति ॥ **गुरोरिति** ॥ अपिशब्दः समुच्चये ।

## श्रीपाण्डुरङ्गीकेशवभट्टारकविरचिता भावचन्द्रिका

**लक्ष्मीपतेः पदद्वन्द्वं सम्प्रणम्य गुरोरपि ।**
**व्याकरिष्ये यथाबोधं तत्त्वसङ्ख्यानपञ्चिकाम् ॥ १ ॥**

तत्त्वसङ्ख्यानं व्याचिख्यासुः जयतीर्थाचार्यवर्यः, चीकीर्षितकर्मणो निर्विघ्नेन परिसमाप्त्यर्थं कृतमिष्टदेवतानतिरूपमङ्गलं शिष्यशिक्षायै ग्रन्थादौ उपनिबध्नन्नेव शिष्यावधानाय चिकीर्षितं प्रतिजानीते ॥ **लक्ष्मीपतेरिति ।**

ग्रन्थारम्भे सकलवाङ्मनसदेवतया रमया युतस्यैव हरेर्नतिरुचितेति भावेन लक्ष्मीपतेः इत्युक्तम् । अनेनैव भगवत एव नम्यत्वप्रयोजकं विशिष्टत्वं इष्टत्वं च सूचितं भवति । लक्ष्म्याः ब्रह्मादिपददातृत्वेन तदुत्तमत्वस्य, सकल-पुरुषार्थप्रदत्वेनेष्टत्वस्य च 'यं कामये तं तमुग्रं कृणोमि' इत्यादिप्रमाणेन सिध्द्या तत्पतित्वेन परमेश्वरस्य सुतरां तदुभयरूपत्वात् । पदे अम्भोज इव ते, तथोक्तम् । तयोर्युगम् । अत्र पदयोरम्भोजसाम्यमभिदधता उपलक्षण-त्वेन सुकुमारत्वरूपगुणाभिधानमुखेन वन्द्यत्वप्रयोजकं विशिष्टत्वम्, 'स्वित्यानन्दः समुद्दिष्टो वरिति ज्ञानमुच्यते । मुक्तिदानेन तद्दानात्सुवरस्य पदद्वयम् ॥ दक्षिणश्चैव सव्यश्च' इत्यन्यत्रोक्तत्वात् भगवद्दक्षिणसव्यपाद-योरानन्दज्ञानप्रदत्वेन परमेष्टत्वादिष्टत्वं च सूचितं भवति । नमनस्यारब्ध-कर्माङ्गत्वं सूचयितुम् नत्वेति 'क्त्वा' प्रयोगः । 'स्नात्वा भुञ्जीत' इत्यादौ तद्दर्शनात्, क्त्वाश्रुतेरङ्गत्वसाधकत्वस्यौत्सर्गिकत्वाच्च नातिप्रसङ्गः ।

देवतावन्दनस्येव गुरुवन्दनस्याप्यभिमतफलसाधनतया 'यस्य देवे परा भक्तिः' इत्यादिप्रमाणसिद्धत्वेनावश्यानुष्ठेयत्वात् देवतानतिसमनन्तरं गुरु-मपि नमति गुरोरपीति । अपिपदं 'पदाम्भोजयुगं नत्वा' इत्यनुकर्षणार्थम् । 'गुरोर्नाम न गृह्णीयात् शिष्यो भार्या पतेरपि' इति स्मरणान्न तन्नाम जग्राह । साक्षात्परम्परासाधारणसकलगुरुसङ्ग्रहार्थं गुरोः इति सामान्येन निर्देश इति वा । करिष्ये इत्युत्तमपुरुषप्रयोगादेव स्वमात्रकत्वस्यापि लाभात् न तत्

समर्पकाहम् पदाभावो दोषाय । तत्त्वं-परं अपरं च । सम्यक्=उद्देशतो, लक्षणतो विभागपरीक्षातश्च; ख्यायते=प्रतिपाद्यते अनेनेति तत्त्वसङ्ख्यान-प्रकरणं इति । तस्य व्याख्यानं=विशिष्टसङ्गतिनिरूपणेन, अक्षरार्थकथनेन, अपेक्षितशेषपूरणेन, अभिप्रायकथनेन च विशिष्टम् इति यावत् । आख्यानम् =विवरणमिति यावत् । तत् करिष्ये इति सम्बन्धः । 'नातिविस्तरमिति' शब्दप्रपञ्चस्यैव निषेधो नार्थप्रपञ्चस्यापीति द्रष्टव्यम् ।

## श्री काशीतिम्मण्णाचार्यविरचिता टिप्पणी

**जन्माद्यस्य यतः शास्त्रगम्यमन्वयतः पृथक् ।**
**परमं ब्रह्म विष्ण्वाख्यमधिकं तदुपास्महे ॥ १ ॥**

तत्वसङ्ख्यानं व्याचिख्यासुः श्रीमज्जयतीर्थमुनिः मङ्गलाचरणपुरःसरं प्रतिजानीते ॥ **लक्ष्मीपतेरिति ॥**

अत्र सकलवाङ्मनसदेवतायाः श्रियोऽपि नतत्वलाभाय परमात्मनश्च नम्यत्वप्रयोजकविशिष्टत्वादिसूचनाय लक्ष्मीपतित्वेन तदुत्कीर्तनम् । तस्य च पररीत्या निराकारत्वशङ्कानिरासाय पदाम्भोजग्रहणम् । अस्य च गुरोरित्य-नेनापि सम्बन्धार्थं **लक्ष्मीपते**रिति व्यासः । एवं च पदपदस्य नित्यसापेक्ष-त्वात्समासः । अम्भोजपदेन पदयोः स्वात्मादेरादरातिशयः सूचितः । युग-ग्रहणं च तन्नतेर्ज्ञानानन्दादिविशिष्टफलकत्वज्ञापनार्थम् । यथोक्तं बृहद्भाष्ये

**स्वित्यानन्दः समुद्दिष्टो वरिति ज्ञानमुच्यते ।**
**मुक्तिदानेन तद्दानात्सुवरस्य पदद्वयम् ॥** इति ।

यद्यप्यत्र **पदाम्भोजे** इत्यपि सम्यक् तथापि **गुरो**रिति समुदायैक-वचनान्तेन तदन्वयानुपपत्तिः । द्वयोः पादयोः श्रीमदाचार्यादिबहुगुरु-सम्बन्धित्वाभावात् । अतः समुदायैकवचनान्तयुगपदोपादानम् । देवतानति समनन्तरं गुरूनपि नमति ॥ **गुरोरपीति ॥** पदाम्भोजयुगं नत्वा । तत्त्वानि सङ्ख्यायन्ते अत्रेति **तत्वसङ्ख्यानाख्यस्य** प्रकरणस्य **व्याख्यानं** विशिष्टार्थ-प्रकाशकग्रन्थम् । **करिष्ये** इत्यनेन नमनव्याख्यानयोरङ्गाङ्गिभावः सूचितः ।

नन्वाचार्यवचनस्यातिबह्वर्थतया यावदर्थव्याख्याने मन्दानुपादेयत्वं, किञ्चिदर्थव्याख्याने च प्रेक्षावदुपेक्षणीयत्वं स्यादिति । अतो **नातिविस्तर**मिति व्याख्यानविशेषणम् । विस्तरशब्दस्य शब्दविस्तृत्यर्थतया तद्राहित्यकथनादर्थविस्तारोऽस्तीति सूच्यते । तथा चैतद्ग्रन्थस्य यथायोग्यमर्थावबोधकत्वाच्छब्दबाहुल्याभावाच्च सर्वोपादेयत्वोपपत्तिरिति भावः । **नातिविस्तर**मित्येतत्क्रियाविशेषणमित्यप्याहुः । अत्र गुरुदेवताप्रीतिविशेषविषयत्व रूपक्रियाफलस्यात्मगामित्वात् स्वस्यातिदयालुतया परप्रयोजनमप्यात्मगामीव मन्यमानत्वाच्च करिष्य इत्यात्मनेपदप्रयोग इति ज्ञातव्यम् ।

**ग्रन्थारम्भणीयत्वप्रयोजकविषयादिसमर्थनम्**

**(टी.) 'मुमुक्षुणा खलु परमात्मा जगदुदयादिनिमित्तत्वेन अवश्यमवगन्तव्यः' इति सकलसच्छास्त्राणामविप्रतिपन्नोऽर्थः । इदं च अवान्तरानेक भेदभिन्नस्य जगतो विज्ञानमपेक्षत इति जगदपि तथा अवगन्तव्यम् । तदिदं प्रधानाङ्गभूतं तत्वद्वयं शास्त्रे विक्षिप्य प्रतिपादितं शिष्यहिततया सङ्गृह्य 'प्रतिपादयितुं प्रकरणमिदमारभते भगवानाचार्यः ।**

**(रा.टि.)** ननु स्वव्याख्येयतत्वसङ्ख्यानस्य फलाभावात् प्रेक्षावदनुपादेयत्वमिति शङ्कावारणाय प्रयोजनमाह ।। **मुमुक्षुणेति ।।** ब्रह्मज्ञानादेव मुक्तिसिध्या जगत्तत्वोक्तिर्व्यर्था । शास्त्रे तत्वानामुक्तत्वाच्चैतदारम्भो व्यर्थ इति अत आह ।। मुमु**क्षुणेति ।। जगदुदयादिनिमित्तत्वेनेति ।।** चेतनाचेतनात्मकविश्वोत्पत्तिस्थितिलयादिकर्तृत्वेनेत्यर्थः । 'नान्यः पन्थाः अयनाय विद्यते' इत्यादिना मुक्तेरुपायान्तरस्य निषेधात् **अवश्यं** इत्युक्तम् । 'तमेवं विद्वानमृतः' इत्यादौ **एवं** 'तस्माद्विराळजायत' इत्यादिनोक्तजगज्जन्मादिकर्तृत्वादिप्रकारेण **विद्वानेवामृतः**

**सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।**
**मोक्षं च विष्णुतश्चैव ज्ञात्वा मुक्तिर्न चान्यथा ।।**

इत्यादिवचनप्रसिद्धिद्योतनाय अवगन्तव्यः खल्वित्युक्तम् ।। सकल-**सच्छास्त्राणामिति ।।**

**ग्रन्थारम्भणीयत्वप्रयोजकविषयादिसमर्थनम्**

**ऋग्यजुस्सामाथर्वाश्च भारतं पञ्चरात्रकम् ।**
**मूलरामायणं चैव शास्त्रमित्यभिधीयते ।।**

इत्युक्तऋगादिशास्त्राणामुक्तरूपपरमात्माज्ञानद्वारा प्राणिनां मुक्त्यर्थं प्रवृत्तत्वस्य

**तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते ।**

इत्यादौ श्रवणात् **अविप्रतिपन्नोऽर्थः** इत्युक्तम् ।

अस्त्वेवं, ततः किं? इति । अत आह ।। **इदं चेति ।।** उक्तरूपेण परमात्म ज्ञानं चेत्यर्थः । परमात्मना क्रियमाणा जगतो जन्मादयो व्यापारा बहवः । तत्र चेतनेषु योग्यानां ज्ञानभक्त्यादिदानं, ज्ञानादिमतां मोक्षदानं, मुक्तानां सौख्यदानं, अयोग्यानां मिथ्याज्ञानद्वेषादिदानं, तद्योग्यमुक्तिदानं, दुःख-भयादिदानं, मिश्राणां सुखदुःखाद्युभयदानं, जडेषु भावकार्यपदार्थानां वृद्धिक्षयादिदानं, अभावेषु प्रागभावस्य नाशदानं, ध्वंसस्य जन्मदानं, त्रैकालिकाभावस्य शश्वदेकप्रकारतादानमित्यादयः । चेतनाचेतनभावा-भावाद्यवान्तरभेदोपेतनानाचेतनादिसमुदायरूपजगतो ज्ञानं विना 'जग-दुदयादिकर्ता हरिः' इति ज्ञानासम्भवात् **अवान्तरानेके**त्याद्युक्तम् ।। **तथेति** ।। अवान्तरानेकभेदभिन्नत्वेनेत्यर्थः । भगवदवतारकपिलादिकृतसाङ्ख्य-तत्वविवेकपञ्चरात्रादिशास्त्रादेव अस्तु तज्ज्ञानमित्यतो वा, स्वोत्प्रेक्षित-ममूलमिदं तत्वसङ्ख्यानं किमर्थमुच्यते? इत्यतो वा, विषयादिमत्त्वप्रदर्शनाय वा आह ।। **तदिदमिति ।।** परमात्मजगदाख्यतत्वद्वयमित्यर्थः । तथैव वाच्ये प्रधानाङ्गभूतेत्युक्तिर्द्वयोः साम्यव्युदासाय ।। **सङ्गृह्यप्रतिपादयितुमिति ।।** एतेनास्य शास्त्रविषयादिनैव विषयादिमत्ता सिद्धेत्युक्तं भवति । परापरतत्वे

प्रधानाङ्गभावेन विषयः । तज्ज्ञानद्वारा मुक्तिः फलम् । यथायोगं सम्बन्ध इति ।

**(श्री. टि.)** ननु इदं प्रकरणमनारम्भणीयं विषयाद्यभावात् । न च परापरतत्वयोर्विषयता । तज्ज्ञानमोक्षयोरवान्तरमुख्यप्रयोजनता । तदर्थं तज्जिज्ञासुरधिकारी । यथायोग्यं सम्बन्धश्चेति वाच्यम् । परतत्वज्ञानमेव मुमुक्षुणा संपाद्यमिति सर्वशास्त्रार्थो नापरतत्वज्ञानमपि । तथाचात्र-क्रियमाणमपरतत्वसङ्ख्यानं गङ्गावालुकपरिगणनवदिदमपार्थकमेवेत्याशङ्क्या परतत्वस्याप्यवान्तरानेक भेदभिन्नस्य मोक्षजनकपरतत्वज्ञानोपयोगिज्ञान-विषयतयावश्यं ज्ञातव्यत्वात्तत्सङ्ख्यानमत्र सार्थकमेवेत्याह ॥ **मुमुक्षुणेत्यादिना ।** खलुशब्दो वाक्यालङ्कारे ॥ **अविप्रतिपन्नोऽर्थ इति ।** संमतोऽर्थ इत्यर्थः ॥ **इदं चेति ।** जगदुदयादिनिमित्तत्वेन परमात्मज्ञानमित्यर्थः । अतोऽर्थशब्दस्य पुल्लिङ्गत्वात्कथमिदमित्यनेन परामर्श इति चोद्यानवकाशः । भेदभिन्नस्येत्यत्र भेदशब्दो विशेषपरः । तथा च अवान्तरानेकविशेषभिन्नस्य अवान्तरानेकप्रभेदवत इत्यर्थः ॥ **विज्ञानमपेक्षत इति ।** जगत एवाज्ञाने तदुदयादिनिमित्तकारणत्वेन परमात्मनो ज्ञातुमशक्यत्वादिति भावः ॥ **तथाऽवगन्तव्यमिति ।** अवान्तरानेकभेदभिन्नत्वेन ज्ञातव्यमित्यर्थः । तथा-शब्द उपमायाम् । यथा परमात्माऽवश्यमवगन्तव्यस्तथा जगदपि ज्ञातव्य-मित्यर्थः । ननु तत्वप्रतिपादनस्य शास्त्र एव कृतत्वाद्व्यर्थमेतत्प्रकरणमित्यत आह ॥ **तदिदमिति । प्रधानाङ्गभूतमिति ।** प्रधानभूतमङ्गभूतं चेत्यर्थः ॥ **विक्षिप्येति ।** क्रमेण एकत्र सङ्ग्रहमकृत्वेत्यर्थः ॥ **संगृह्येति ।** क्रमेणैकत्र सङ्गृह्येत्यर्थः । तथा च संकलय्य तत्वनिरूपणं प्रकरणावान्तरप्रयोजनमिति न तद्व्यर्थमिति भावः ।

**(स.टि.)** ब्रह्ममीमांसादिशास्त्रेणैवाभीष्टसिद्धेरिदं प्रकरणं व्यर्थमित्या-शङ्कां परिहरन्नुपोद्घातमाह ॥ **मुमुक्षुणेति** ॥ मुचेरिच्छायां सनि, द्वित्वे, अभ्यासे कृते हलादिशेषे च ''सनाशंसभिक्ष उ''रित्युप्रत्यये मुमुक्षुरिति

रूपम् । मोक्षापेक्षावतेत्यर्थः । **परमात्मा** नारायणः । **जगदुदयादि-निमित्तत्वेन** जगतो रमाब्रह्मादिचेतनाचेतनात्मकस्य प्रपञ्चस्य । उदयः वियदधिकरणव्युत्पादितन्यायेन पराधीनविशेषावाप्त्यादिरूपोत्पत्तिः । आदि-शब्दघटितबहुव्रीहिणा स्थित्यादीनां सङ्ग्रहः । तद्गुणसंविज्ञानो बहुव्रीहिः । मूले प्रान्ते वक्ष्यमाणरीत्या, प्रमाणैश्च तत्र तत्र विशिष्टाष्टकस्याध्यवसाया-त्तदनुरोधो विनैतं बहुव्रीहिं न सम्भवतीति मन्तव्यम् । निमित्तत्वेने-त्युपादानत्वं व्यावर्तयति । अवगन्तव्यः ज्ञातव्यः । इति एतत्प्रमेयम् । **सकल सच्छास्त्राणामविप्रतिपन्नोऽर्थः** अविरुद्धार्थः । इदमिति अवगन्तव्येत्येतत् प्रकृत्यर्थावगमनं परामृशति । तेनार्थशब्दस्य पुल्लिङ्गत्वादयमिति परामर्शे कर्तव्ये कथमिदमिति नपुंसकलिङ्गेन परामर्श इति शङ्कानवकाशः । एतेन परापरतत्वे मुख्यामुख्यविषयौ । मोक्षः परमप्रयोजनम् । अवान्तरं परापर-तत्वज्ञानम् । मुमुक्षुरधिकारी । यथायोग्यं सम्बन्धः । इत्यारम्भणीयत्व-प्रयोजकानुबन्धचतुष्टयमुक्तं भवति । इदं च जगदुदयादिनिमित्तत्वेन भगवज्ज्ञानं च । अवान्तरानेकभेदभिन्नस्य अवान्तराः प्रत्येकं विद्यमानाः अनेके बहवः, भिद्यंत एभिरिति भेदाः । भिनत्तेर्बाहुलकात्करणे घञ् । भावत्वाभावत्वनित्यत्वानित्यत्वादयः । तैर्भिन्नस्य विभक्तस्य । **जगतः** परतन्त्रतत्वस्य विज्ञानमपेक्षते । उत्पत्त्यादेश्चभावत्वाभावत्वादिनाविभक्ते जगति ज्ञातव्यतया तन्निमित्तत्वज्ञानस्य तज्ज्ञानाधीनत्वादिति भावः । इतिशब्दो हेत्वर्थे । इदं च जगतो विज्ञानमपेक्षत इति हेतोः । जगदपि तथा परमात्मवत् अवगन्तव्यम् । भावत्वाभावत्वादिनाऽवगन्तव्यमिति वा । तदिति भगवत्परामर्शः । इदमिति जगत्परामर्शः । **प्रधानाङ्गभूतं** मुख्यामुख्य रूपम् । तत्वद्वयम् । शास्त्रे वेदादौ । **विक्षिप्य प्रतिपादितं** तत्र तत्र प्रतिपादितम् । शिष्यहिततया शिष्येभ्यो हितमिष्टं शिष्यहितं तस्य भावः शिष्यहितता तया । वैशिष्ट्यं तृतीयार्थः । तथा च शिष्येष्टत्वविशिष्टं यत्सङ्गृह्य प्रतिपादनमिति तृतीयान्तार्थस्य प्रतिपादनलक्षणतुमुन्प्रकृत्यर्थेऽन्वयः ।

सङ्गृह्यप्रतिपादनस्य शिष्यहितत्वात् । प्रतिपादयितुं तादृशप्रतिपादनं कर्तुम् । इदं प्रकरणमारभते भगवान् स्वोचितैश्वर्यादिषड्गुणशाली श्रीमदाचार्यः । शिष्यहिततयेत्यस्यारभत इत्यारम्भणे वाऽन्वयः ।

**(पां.टि.)** ननु इदं प्रकरणं न व्याख्येयं, प्रेक्षावदनुपादेयत्वात्, प्रेक्षावदुपादेयस्यैव च व्याख्येयत्वात् । तदनुपादेयत्वञ्च तद्व्यापकविषयादिमत्त्वाभावसिद्धम् । न चास्य प्रकरणतया शास्त्रैकदेशसम्बद्धत्वात्, शास्त्रीयविषयादिकमेवात्र विषयादिकमिति वाच्यम् । शास्त्रस्यापि तच्छून्यत्वात् इत्यतोऽस्य प्रकरणतासिद्धये शास्त्रैकदेशसम्बन्धित्वं दर्शयितुम् शास्त्रार्थं तावदनुवदति **मुमुक्षुणेत्यादिना अविप्रतिपन्नोऽर्थः इत्यन्तेन** । खलु शब्दो वाक्यालङ्कारे प्रसिद्धौ वा ॥

अनेन उपलक्षणत्वेन 'मुमुक्षुणा'रूपमधिकारिविशेषणमभिदधतासाधनचतुष्टयसम्पन्नः शास्त्रे अधिकारी, परमात्मा विषयः, तज्ज्ञानम् अवान्तरप्रयोजनम्, मोक्षश्च मुख्यप्रयोजनम्, यथायोग्यं सम्बन्धः इति शास्त्रीयमनुबन्धचतुष्टयं प्रदर्शितं भवति ।

ननु परमात्मपदेन ईश्वरस्य ज्ञातत्वात् न तस्य शास्त्रविषयत्वमित्यतः स्वरूपमात्रावगमेऽपि तन्मात्रस्य मोक्षासाधनत्वात्, जगदुदयादिनिमित्तत्वेन तदवगमस्यैतत्साधनत्वात्, मोक्षसाधनीभूतजगदुदयादिनिमित्तत्त्वप्रकारकतज्ज्ञानस्य शास्त्रमात्रसाध्यत्वात्, युक्तं तस्य शास्त्रविषयत्वमित्याशयेनोक्तं 'जगदुदयादिनिमित्तत्वेनेति । अत्र 'जगच्छब्दो' भगवद्व्यतिरिक्तसर्वपरः । उदयादीत्यादिपदेन च स्थित्यादेः सङ्ग्रहः । जगदुदयादिहेतुत्वं च 'समास व्यासयोगतः' इति वक्ष्यमाणप्रकरणे द्रष्टव्यम् । यद्यप्यत्र सृष्टिसंहारप्रवाहस्यानादित्वेन दर्शपूर्णमासीतिथ्योरिव प्राथम्यानिर्णयेन प्राधान्यासिद्धेः, नोदयस्यैव प्रथमं निर्देशे निमित्तमस्ति; तथापि उत्पन्नस्य नाशवत् नष्टस्योत्पत्त्यभावेन एकव्यक्त्यपेक्षयोदयादेः प्राथम्यादिसम्भवात्, तत्प्रयुक्त-

प्राधान्यादिविवक्षयोदयस्य प्राथम्येन निर्देश इति द्रष्टव्यम् । कारणत्वेनेति सामान्यमनभिधाय निमित्तत्वेन इति तद्विशेषनिर्देशस्तु ''उपादानत्वे ब्रह्मणो निर्विकारत्वानुपपत्तिः, विवर्ताधिष्ठानत्वे तु श्रुतौ 'यतो वा इमानि भूतानि जायन्ते' इति निर्देशः, सूत्रे जगज्जन्मादिनिर्देशश्चासङ्गतः, न हि 'शुक्तितो रजतं जायते, इति निर्देशोऽस्ति'' इति परपक्षनिरासमूचनाय इति द्रष्टव्यम् ।

**अवश्यमिति** । तेन विना मोक्षाभावात् । कर्मणो मोक्षहेतुत्वेऽपि तत्त्वज्ञानद्वारैव तत्, न तु तत्त्वज्ञानसमकक्षतया इति भावेनावश्यपदप्रयोगः। सच्छास्त्राणां श्रुतितन्मीमांसादिसच्छास्त्राणामित्यर्थः । ननु यदि मोक्षार्थं जगदुदयादिनिमित्तत्वेन परमात्मज्ञानमावश्यकम्, तर्हि परतत्वमेव विषयीभूतं विविच्यतां किं शास्त्रे अपरतत्त्वनिरूपणेन? इत्यत आह ॥ **इदं चेति** । जगदुदयादिनिमित्तत्वेन परमात्मज्ञानमित्यर्थः । **अवान्तरेति** । उदयादीनां वक्ष्यमाणरीत्या प्रतिनियतत्वादिति भावः । **भेदभिन्नस्येति** । भिद्यन्ते एभिरिति भेदाः=असाधारणधर्माः, तैर्भिन्नस्य=भेदवत्तया प्रमितस्येत्येवार्थः । अतो न भेदशब्दस्य वैयर्थ्यमिति ध्येयम् । **अपेक्षत इति** । अननुसंहितोपाधेरुपहितप्रत्ययायोगादिति भावः । **तथेति** । अवान्तरानेकभेदभिन्नत्वेनेत्यर्थः । अतः शास्त्रे जगन्निरूपणमप्यावश्यकमिति भावः ॥ नन्वेवं शास्त्रादेव परापरतत्त्वप्रतिपत्तिसम्भवेन किमपूर्वप्रकरणनिर्माणेन? इत्यत उक्तं **तदिदमिति** । शास्त्रे तत्त्वद्वयस्य प्रतिपादितत्वेऽपि विक्षिप्य प्रतिपादितत्वात्सङ्गृह्य प्रतिपादनार्थमपूर्वनिर्माणमावश्यकमेवेति भावः । नन्वेवं परापरतत्त्वप्रतिपादकस्य शास्त्रस्यार्थैकत्वाभावात् कथं तन्निबन्धने स्वस्मिन्नेकवाक्यत्वम्? इत्यतः उभयप्रतिपादकत्वेऽपि साम्येन तदभावात्, साम्येनोभयप्रतिपादकत्वस्यैव वाक्यभेदापादकत्वात्, युक्तमेकवाक्यत्वं शास्त्रस्य इत्याशयेनोक्तं प्रधानेत्यादि । एकं प्रधानत्वेन, अपरं च तदङ्गत्वेनेत्यर्थः ।

अनन्तानां तत्त्वानां संग्रह एवाशक्य इत्यतोऽनन्तानामपि प्रधानत्व-तदङ्गत्वरूपधर्मद्वयावच्छिन्नत्वात्तेन रूपेण संग्रहो युक्त इति भावेन प्रधाने-त्याद्युक्तमित्यप्याहुः । **प्रकरणमिति ।** सर्वत्र प्रकरणस्य शास्त्रीयाधिकार्यादि-नाऽधिकार्यादिमत्त्वमन्यथा प्रकरणमात्रस्यैवानारम्भणीयत्वप्रसङ्गादिति भावः ।

प्रतिपादनफलीभूतायाः प्रतिपत्तेः विक्षिप्य प्रतिपादनेऽप्यविशिष्टत्वात् किं तत्संगृह्य प्रतिपादनेनेत्यत उक्तं **शिष्येति ।** अनेनैव बालबोधनमवान्तर-प्रयोजनं प्रकरणत्वसिध्यङ्गं च दर्शितं भवति ॥

**(का. टि.)** नन्विदं प्रकरणमनारम्भणीयं विषयाद्यभावात् । न च तत्वान्येवविषयः तेषां शास्त्रनिर्णीतत्वात् । अनिर्णीतस्य च विषयत्वात् । अत एवास्य न प्रयोजनादिकमपि । तथा च नेदं व्याख्येयमित्याशङ्कां परि-जिहीर्षुरेतत्प्रकरणस्य विषयादिमत्वं तावत्समर्थयते । **मुमुक्षुणेत्यादिना आचार्य इत्यन्तेन ॥** मुमुक्षुणेत्युपलक्षणम् । शमादिमतेत्यपि ग्राह्यम् । मोक्षस्य मुख्यप्रयोजनत्वलाभाय मुमुक्षुग्रहणम् । खलुशब्दः प्रसिध्यर्थः । जगतो भावाभावाद्यनेकविधपरतन्त्रप्रपञ्चस्य । यथासम्भवमुत्पत्तिस्थिति-लयनियमनादिनिमित्तत्वेन । न तु तदुपादानत्वेन । **अवश्यमवगन्तव्य-**तद्विज्ञानमेव मोक्षहेतुः, न तु कर्मादीति यावत् । अस्यार्थस्य दुःशास्त्र-विप्रतिपन्नत्वात् **सदिति । इदं च उक्तप्रकारेण** परमात्मावगमनं च । अवान्तरानेकभावाभावप्रभेदैर्गृहीतभेदस्य जगतोऽवधारणमपेक्षत इत्यर्थः । यद्यपि सामान्यतो जगदुदयादिनिमित्तत्वज्ञाने नावान्तरज्ञानापेक्षा । तथापि सर्वेषामेकविधोत्पत्याद्यभावाद्वक्ष्यमाणरीत्या यथाः सम्भवमुद्भावादि-निमित्तत्वेन विशिष्यैव हरेरवगन्तव्यत्वात् जगदपि अवान्तरानेकभेदवत्त्वेना-वश्यमवगन्तव्यम् । **तदिदं** उक्तप्रकारेणावगन्तव्यं निरूप्यत्वेन बुद्धिसन्निहितं च तत्वद्वयम् । वेदतन्मीमांसादौ विक्षिप्य निरूपितं, शिष्येष्टत्वेनैकीकृत्यय निरूपयितुं शिष्याणामपेक्षितम् । उक्तविधतत्वगोचरैकाकारज्ञानमुत्पाद-

यितुमिति यावत् । नन्वेवमर्थैक्याभावादेकप्रकरणत्वानुपपत्तिरतः **प्रधानाङ्गभूत**मित्युक्तम् । प्रधानभूतार्थस्यैकत्वादेकप्रकरणत्वमिति भावः । प्राधान्यं च अन्यजिज्ञासानधीनजिज्ञासाविषयत्वं साक्षान्मुख्यप्रयोजनसाधनत्वं वा । तदङ्गत्वं च तज्जिज्ञासाधीनजिज्ञासाविषयत्वं तद्द्वारा मुख्यप्रयोजनहेतुत्वं वा । अपरतत्वं हि साक्षान्मोक्षहेतुपरतत्वजिज्ञासया जिज्ञास्यते न परतत्वमन्यजिज्ञासयेति तयोरङ्गप्रधानभावः । भगवानित्याचार्यस्यैवैतादृशप्रकरणनिर्माणशक्तिरस्तीति सूचयति ।

अयमाशयः, न तावन्निर्विषयमिदं प्रकरणम् । शास्त्रे विक्षिप्य प्रतिपादितयावदर्थधारणासमर्थानां तत्र तत्राज्ञानसंशयादिसम्भवेन तान् प्रति तत्वानां विषयत्वोपपत्तेः । नापि निष्प्रयोजनं मोक्षसाधनशास्त्राधीनपरतत्वावधारणस्य अनायासेन सम्पादनरूपप्रयोजनवत्वात् । अत एवाधिकार्यादिसम्भवादारम्भणीयम् । ततश्च गहनार्थत्वाद्व्याख्येयम् । यद्यपि **तत्वविवेके** विक्षिप्तसङ्ग्रहः कृतस्तथापि अस्य तद्व्याख्यानरूपत्वान्न वैयर्थ्यम् । यथा **परतन्त्रं** इत्यादेः **अस्वतन्त्रं** इत्यादि व्याख्यानमिति

### ग्रन्थादौ मङ्गलाचरणाभावशङ्का तन्निरासश्च

**(टी.) ननु प्रकरणादौ मङ्गलं किमपि कस्मान्नानुष्ठितं? न तावत्तदफलमेव प्रेक्षावद्भिरनुष्ठितत्वात् । नापि प्रारिप्सितपरिसमाप्त्यादिव्यतिरिक्तफलं नियमेन प्रारम्भे अनुष्ठितत्वात् । उच्यते, अनुष्ठितमेव भगवता मङ्गलम् । मानसादेरपि तस्य सम्भवात् । तच्च परमास्तिकत्वादनुमीयते । यच्चायं स्वातन्त्र्यादिविशिष्टस्य विष्णोरादित एव सङ्कीर्तनं करोति किं ततोऽन्यन्मङ्गलं नाम? अन्यपरमपि तत् भक्त्या अनुष्ठितं स्वभावात् सम्पादयत्येवाखिलमङ्गलानीति ।**

(रा. टि.) नैष्फल्यादिना अननुष्ठानमिति भ्रान्तिं शङ्काव्याजेन निरस्यन्यूनतादोषं परिहरति ॥ **नन्वित्यादिना** ॥ प्रकरणस्यादावित्यर्थः ।

प्रेक्षावद्भिः व्यासजैमिनिप्रभृतिभिः । 'अथातो ब्रह्मजिज्ञासा' इत्यादाविति भावः ।। **मानसादेरिति ।।** हरिस्मृतिनमउक्तिदण्डवत्प्रणामादेरित्यर्थः । परबुद्धेरप्रत्यक्षत्वादाह ।। **तच्चेति ।।** मानसाद्यनुष्ठानमित्यर्थः । किं च मङ्गलानुष्ठानसाधकं ग्रन्थे निवेशनमप्यस्तीत्याह ।। **यच्चेति ।।** किञ्चेति चार्थः। यत् करोतीत्यन्वयः । आदिपदेन भगवत्त्वग्रहः । एतेन शिष्यशिक्षार्थं निबन्धनस्याप्यावश्यकत्वान्न्यूनतेत्यपास्तम् । ननु विभागेनोद्दिश्य विशिष्य निर्देशपरमिदं कथं मङ्गलार्थं स्यात्? इति । अत आह ।। **अन्यपरमपीति ।।**

**(श्री. टि.)** मङ्गलं नानुष्ठेयं निष्फलत्वादिति वा समाप्त्यादीतर-फलकत्वाद्वेति विकल्प्याद्यमनूद्य दूषयति ।। **नतावत्तदिति ।। प्रेक्षावद्भि-रिति ।** तथा च मङ्गलं सफलं प्रेक्षावद्भिरनुष्ठितत्वात्कृष्यादिवदिति अनुमानादित्यर्थः । अत्र कदाचित्केनचित्प्रेक्षावता कृते निष्फले जलताडनादौ व्यभिचारवारणाय प्रेक्षावद्भिरिति बहुवचनप्रयोग इति द्रष्टव्यम् । द्वितीयमनूद्य दूषयति ।। **नापीति ।** समाप्त्यादीत्यादिपदेन विघ्नाभावप्रचययोर्ग्रहणम् ।। **अनुष्ठितत्वादिति ।** समाप्तिकामैरिति शेषः । प्रेक्षावद्भिरिति वर्तते । तथाच न मङ्गलं समाप्त्यादीतरफलकं ग्रन्थादौ निर्विघ्नेन तत्परिसमाप्त्यादिकामैः प्रेक्षावद्भिर्नियमेनानुष्ठीयमानत्वात् । यत् यत्कामैःप्रेक्षावद्भिर्नियमेनानुष्ठीयते तत् तत्फलकम् । यथा तृप्तिकामैरनुष्ठीयमानं भोजतत्फलकमिति प्रयोगो द्रष्टव्यः । ननु कथं भगवता मङ्गलमनुष्ठितमित्युच्यते । ग्रन्थे निवेशनाभावस्य प्रत्यक्षसिद्धत्वादिति चेत् न । नहि ग्रन्थेनिवेशनमेव मङ्गलम् । नापि मङ्गल-व्यापकम् । मानसादेरनेकमङ्गलस्य सत्वात् । अतो न ग्रन्थे निवेशनाभावेन मङ्गलानुष्ठानाभावो मन्तव्य इत्याशयवानाह ।। **मानसादेरपीति ।** मनो-वाक्कायकृतस्येत्यर्थः । ननु भगवतामङ्गलं नानुष्ठितमेवेत्यवधारयितुं शक्यत एव । मानसादिनमस्काररूपमङ्गलस्य सम्भावितत्वेऽपि तन्निश्चायक-प्रमाणाभावादित्यत आह ।। **तच्चेति ।** मानसादिनमस्काररूपमङ्गलमित्यर्थः । अनुमीयते चेति सम्बन्धः । तथा च न केवलं सम्भावितं किन्तु भगवतः

परमास्तिकत्वाद्धेतोर्मङ्गलं भगवता कृतमित्यनुमीयते चेत्यनुमा प्रमाणमस्तीत्यर्थः । (प्रयोगप्रकारस्तु अयं ग्रन्थः मङ्गलोपेतः परमास्तिकेन कृतत्वात् । प्रमाणलक्षणादिवदिति द्रष्टव्यः ।)

किञ्च ग्रन्थनिवेशनाभावोप्यसिद्ध इत्याह ।। **यच्चायमिति ।। किं ततोऽन्यदिति ।** विष्णोस्संकीर्तनादन्यदित्यर्थः ।। **मङ्गलं नामेति ।** पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलमिति वचनेन विष्णोःपरममङ्गलत्वावगमात्तत्सङ्कीर्तनमेव परममङ्गलमित्यर्थः । ननु स्वातन्त्र्यादिविशिष्टस्य विष्णोरादितस्सङ्कीर्तनस्य सामान्यतस्तत्वविभागोद्देशपरत्वात्कथं मङ्गलपरत्वमित्यत आह ।। **अन्यपरमपीति ।** तत् स्वातन्त्र्यादिविशिष्टस्य विष्णोरादितस्सङ्कीर्तनम् ।। **अखिलमङ्गलानीति ।** मङ्गलकार्यसमाप्त्यादीनीत्यर्थः । यथा हिमनिवारणार्थमुत्पादितो दहनः स्वभावात्प्रकाशनमपि करोति तद्वदिति भावः ।।

**(स.टि.)** मूले मङ्गलप्रतिपादकश्लोकाद्यभावादाचार्यैर्न कृतमेव मङ्गलमिति मतिमान् शंकते ।। **नन्विति ।। प्रकरणादौ** स्वतन्त्रमस्वतन्त्रं चेत्यादि प्रकरणादिभागे । **किमपि** कायिकवाचिकमानसिकान्यतममपि । आचर्यते ज्ञाप्यतेऽनेनेत्याचरणम् । **मङ्गलाचरणं** वन्द इत्यादितच्चिह्नम् । कस्मान्नानुष्ठितं किं हेतुकमननुष्ठानमित्यर्थः । मङ्गलस्याननुष्ठाने हेतू उत्प्रेक्षयित्वाऽऽद्यं निराह ।। **न तावदिति ।।** तत् मङ्गलम् । अफलं न विद्यते फलमस्य तदफलम् । निष्फलं नैवेत्यर्थः । अन्यफलकत्वस्योत्तरत्र पराकरिष्यमाणत्वात्तावच्छब्दः । कुतो न निष्फलमित्यत आह ।। **प्रेक्षावद्भिरिति ।।** प्रेक्षा एष्वस्तिते तथा । तैर्ज्ञानिभिः । अनुष्ठितत्वात् कृतत्वात् । न ह्येकदैव सर्वेषां विपश्चितां निष्फले कर्मणि सचेतनः प्रवृत्तिं सम्भावयेदिति भावः । द्वितीयं निराकरोति ।। **नापीति ।।** प्रारब्धुमिष्टं प्रारिप्सितम् । तस्य या परिसमाप्तिः सैवादिर्येषां प्रचयमुखानां ते प्रारिप्सितपरिसमाप्त्यादयः । तेभ्यो व्यतिरिक्तमन्यत्फलं यस्य तत् प्रारिप्सितपरिसमाप्त्यादिव्यतिरिक्तफलम् । तत्र हेतुः **नियमेनेति ।।**

अत्रेमौ प्रयोगौ भवतः । मङ्गलं न निष्फलम् । प्रेक्षावद्भिर्नियमेनानुष्ठीयमानत्वात् । यागादिवत् । मङ्गलं न समाप्तीतरफलकम् । ग्रन्थारम्भे नियमेनानुष्ठीयमानत्वात् । यद्यदारम्भे नियमेनानुष्ठीयते न तत्तत्समाप्त्यादीतर फलकम् । यथा विवाहोत्सवाद्यारम्भेऽनुष्ठीयमानविघ्नराजार्चनमिति । अत्राद्ये प्रयोगे ईक्षावदनुष्ठितत्वादित्येवोक्तौ बौद्धकृतचैत्यवंदनादौ व्यभिचारः । तद्वारणाय प्रेति व्यशिंषन्नीक्षाम् । तेन चेक्षायाः प्रकृतकर्मणि प्रकृतेष्टसाधनत्वप्रकारकप्रमारूपत्वद्योतनात् । प्रेक्षावद्भिरिति बहुवचनं स्पष्टार्थम् । यदि प्रेक्षावच्छब्दोऽखण्डः तदा केनचित्प्रेक्षावतैव कृते जलताडनादौ व्यभिचारः । तत्परिहाराय प्रेक्षावद्भिरिति बहुवचनम् । अनुष्ठितत्वं कृतिविषयत्वम् । तच्च साध्यतया विवक्षितम् । तेन नोद्देश्यत्वेन कृतिविषये फले व्यभिचारः । द्वितीयप्रयोगे ग्रन्थारम्भेऽनुष्ठीयमानत्वादित्येवोक्ते तत्समय एव दैवात्कृते कण्डूयनादिके कर्मणि व्यभिचारः । तद्वारणाय नियमेनेत्युक्तम् । अत्रारम्भे नियमेनानुष्ठीयमानत्वादित्ये तन्मात्रादाने दर्शारम्भे नियमेनानुष्ठीय मानायामन्वारम्भणेष्टौ व्यभिचारः । तद्वारणाय प्रारम्भे नियमेनानुष्ठीयमानत्वादिति । अस्य प्रारिप्सितपरिसमाप्त्यादिव्यतिरिक्तोद्देशेनाननुष्ठीयमानत्वादित्यत्र तात्पर्यं बोध्यम् । एतेन यथा श्रुते ग्रन्थे चोक्तस्थले व्यभिचार वारणाय समाप्तिकामैरिति विशेषणे तेनैव हेतुना समाप्तिफलकत्वसिद्धेः परिशेषवैयर्थ्यमिति शङ्कानवकाशः । अनेन मङ्गलं समाप्तिफलकम् । समाप्त्यन्याफलकत्वे सति सफलत्वादिति परिशेषो बोध्यः । ग्रन्थे निवेशनस्य मङ्गलरूपत्वस्य मङ्गलव्यापकत्वस्य वाऽभावेन न मङ्गलाभावः शक्याङ्गीकारः । मङ्गलस्यानेकविधत्वेन मानसादेरपि सम्भवादिति समाधत्ते ॥ **उच्यत इति** ॥ समाधानमिति शेषः । भगवता आचार्येण । अनेन पूर्वोक्तानुमानानां सिद्धसाधनतोक्ता भवति । **तस्य** मङ्गलस्य ।

नन्वनुष्ठितमेवेति कथं निश्चयः । मानसादेः सम्भावितत्वेऽपि विना प्रमाणं निष्कर्षस्य दुष्करत्वादित्यत आह ॥ **तच्चेति** ॥ तत् मङ्गलानुष्ठानम् ।

न केवलं सम्भावितं किं त्वनुमीयते चेत्यर्थः । अनुमानप्रकारस्तु विमतो ग्रन्थारम्भः कृतमङ्गलः । परमास्तिककृतग्रन्थत्वात् । यदेवं तदेवम् । यथा सम्प्रतिपन्नम् । यद्वा भगवान्भवति ग्रन्थारम्भे कृतमङ्गलः । कृतप्रकरणत्वे सति परमास्तिकत्वात् । मन्वादिवदिति वा । नास्तिकग्रन्थारम्भे व्यभिचार-वारणायाद्यहेतौ आस्तिकेति विशेषणम् । आस्तिकानामपि केषाञ्चिदाल-स्यादिना मङ्गलानुष्ठानादृष्टेः परमेति । आस्तिकानामपि केषांचित्प्रकरणादि-करणादर्शनादनैकांत्यवारणाय द्वितीयानुमाने हेतौ सत्यन्तं विशेषणम् । मङ्गलानुष्ठानमनुमीयत इत्युक्तावनत्यन्तसमाहितमनस्कं पूर्वपक्षिणमिदानीं तन्मङ्गलस्य ग्रन्थे निवेशनमपि प्रात्यक्षिकमित्युक्त्या तोषयति ॥ **यच्चायमिति** ॥ अयं परमास्तिकः श्रीमदाचार्यः । **स्वातन्त्र्यादिविशिष्टस्य** स्वतन्त्रस्य भावः स्वातन्त्र्यं तदेवादिर्येषां भगवदादिशब्दार्थभूतानामैश्वर्यादीनां व्याप्त्या-दीनां ते स्वातन्त्र्यादयः । यद्वा आदिशब्देन तत्वतापरिग्रहः । मूले ''स्वतन्त्र''मिति स्वतन्त्रशब्दो गुणसर्वस्वोपलक्षक इति कृत्वा उप-लक्षितानां गुणानां ग्रहणार्थमादिशब्दप्रयोग इति वा । तैर्विशिष्टस्य विष्णोः । **आदितः** आदौ । आद्यादित्वात्तसिः सप्तम्यर्थे । प्रथमभाग इत्यर्थः । **सङ्कीर्तनं** स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्वमिष्यते । स्वतन्त्रो भगवान्विष्णु-रित्येवंरूपं शब्दप्रयोगं करोतीति यत् **ततः** तादृशशब्दप्रयोगात् । **अन्यत्** अपरम् । **मङ्गलं** मङ्गलनिवेशनं नाम **किम्** । न किमपीत्यर्थः । अन्यथा तत्वस्य सामान्यतो विभागेनोद्देशस्य कर्तव्यतया तत्वं द्विविधमित्यभिधाय तच्च स्वतन्त्रमस्वतन्त्रं चेत्यभिधातव्यं स्यादिति वाक्यशेषः । उद्देश्य-विधेयभावस्थल उद्देश्यप्राथम्यस्यौचित्यात् ।

**यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।**
**तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ॥** इत्युक्तेः ।

अत एव ''वृद्धिरादै''जित्यादौ चोद्देश्यप्राथम्यस्य वैहित्यात् आदैज्वृद्धि-रित्यादिनिर्देश एव पाणिनिना कर्तव्यः तथापि पूर्वनिबद्धो वृद्धिशब्दः संज्ञां

विदधदपि मङ्गलार्थोऽपि भवतीति मया मङ्गलमपि कृतं निबद्धं चेति सूचयितुमादौ निबबन्धेति निबन्धकाराः समादधिरे। न च वाच्यम् ''अपृक्त एकाल्प्रत्ययः परमपरं चेति द्विविधं सामान्य''मित्यादि प्रयोगदर्शनात्तस्या- नित्यत्वमिति । उक्तलक्षणबलात्सर्वत्रोद्देश्यस्य प्राथम्यमावश्यकमेव । यत्पुनर्यत्र क्वापि वैपरीत्यदर्शनं तत्र विशेषप्रयोजनसूचनार्थं तदिति। यत्र च पुनर्विनाऽपि प्रयोजनं तथोपलभ्यते तत्र स्वतन्त्रस्यर्षेः नियंतुमशक्यत्वा- द्योजनायामुद्देश्यस्य प्राथम्यं सम्पाद्यमेवेति तान्त्रिकलेखायास्तत्प्राथम्य- स्यानुन्मथनात्। अत एव टीकायां ''आदित'' इत्युक्तम्। तत्वविभाग- कथनपरस्य कथं मङ्गलपरतेत्यत आह ॥ **अन्यपरमपीति** ॥ **तत्** स्वातन्त्र्यादिविशिष्टस्य विष्णोः सङ्कीर्तनम् । अन्यपरमपि अन्यत् निरन्तरायपरिसमाप्त्यादिव्यतिरिक्तं परमुद्देश्यं यस्य सङ्कीर्तनस्य तत्तथेत्यर्थः। **भक्त्या** माहात्म्यज्ञानपूर्वकसुदृढस्नेहेन । स्वभावादेव सहजसामर्थ्यादेव । **अखिलमङ्गलानि** । प्रयोजनप्रापकत्वेन मङ्गलानामखिलता । खिलानि अफलपर्यवसायित्वाददृढान्युच्यन्ते तथाविधानि न भवन्तीत्यखिलानि । फलपर्यवसायीनीति यावत्। बहुवचनेन विघ्नानां बाहुविध्यात्तत्समसंख्यत्वेन तदुत्पाटनपाटवं प्रकटीचकारेति ज्ञेयम् । **सम्पादयति** सम्यगुपार्जयति । अन्यार्थं नीयमानस्याप्यम्भःकुम्भादेरन्येषां मङ्गलसूचकत्वदर्शनादिति भावः। ''वृद्धिरादैच् अथातो ब्रह्मजिज्ञासा अथातो धर्मजिज्ञासा अथ शब्दानुशासनं सिद्धे शब्दार्थसम्बन्ध'' इत्येवमादिबहुस्थलेषु संज्ञानन्तर्याद्यभिधायकानामपि वृद्धादिशब्दानां मङ्गलार्थताया अपि चिरन्तनव्याख्यातृभिर्व्याख्यातत्वान्नेयं व्याख्याऽदृष्टचरीति कौतुकिभिर्भाव्यमिति इतिशब्देन शङ्कापरिहारसमाप्ति- सूचकेन सूचयामासेति ध्येयम्।

(पां. टि.) 'ननु तथापि इदं न व्याकर्तव्यम्, अनुपादेयत्वात्; न हि विषयादिसत्तामात्रेण उपादेयत्वम्, किन्नाम स्वरूपालाभेनापि । न चास्य स्वरूपालाभोऽस्ति, मङ्गलाचरणरहितत्वेन तत्साध्यनिरन्तरायपरिसमाप्त्य-

सम्भवेन असमाप्तत्वात् ।' इति मनसि निधाय मङ्गलसमाप्त्योः मानाभावेन साध्यसाधनभावासिद्धेः कथं मङ्गलाभावेन असमाप्तत्ववर्णनम्? इत्याशङ्का-परिहाराय, 'परिशेषानुमानेन मङ्गलस्य समाप्तिसाधनत्वं सिध्यति' इत्यभि-प्रेत्य गूढाभिसन्धिः पृच्छति **नन्विति ॥ नानुष्ठितमिति ॥** ननु च कथ-मवगतमेतत्, यत् आचार्येण मङ्गलं नानुष्ठितम् इति ? अनुपलब्धत्वात् इति चेत् न, तत्कालीनस्य इदानीं उपलब्धुमशक्यत्वात् । इति चेन्न, ग्रन्थे निवेशनाभावस्य प्रत्यक्षत्वेन तत एव तत्सिद्धेः; इति भावः ॥ अननुष्ठानं किं निष्फलत्वप्रयुक्तमुत समाप्त्यन्यफलकत्वप्रयुक्तम्? 'मङ्गलम् अभीष्टफलकम् शिष्टाचारविषयत्वात् दर्शादिवत्' इत्यनुमानेन सफलत्वसिद्धेः नाद्यः इत्याह **न तावदिति ।**

**प्रेक्षावद्भिरिति** । प्रेक्षावत्कृतिविषयत्वात् इत्यर्थः । प्रेक्षावत्त्वं च अभ्रान्तत्वमेव, न वेदप्रामाण्याभ्युपगन्तृत्वम् । वैदिककर्तृके निष्फले कर्मणि व्यभिचारात् । ननु च अभ्रान्तत्वं न सर्वथा सम्भवति, भ्रान्तेः पुरुषधर्मत्वेन असिद्धिप्रसङ्गात् । नापि यत्र क्वचित् अभ्रान्तत्वम्, बौद्धस्यापि तत्कर्तृके मण्डलीकरणादौ व्यभिचारात्; प्रकृतकर्मण्यभ्रान्तत्वोक्तौ च 'मङ्गलम् समाप्तिस्वर्गयोः साधनम्' इति स्वर्गसाधनत्वांशे भ्राम्यतः अशिष्टत्वा-पातात् । प्रकृतेष्टसाधनत्वांशे भ्रमराहित्यविवक्षायामपि 'मङ्गलघटौ समाप्ति-साधने' इति घटांशे भ्राम्यतः शिष्टत्वभावप्रसङ्गात् । इति चेन्न, प्रकृतकर्मणि प्रकृतेष्ट साधनत्वांशे भ्रमराहित्यस्यैव शिष्टपदार्थत्वात् ॥ न च फलस्यापि शिष्टकृतिविषयत्वात् तत्र व्यभिचारः इति वाच्यम्, साध्यत्वेन कृतिविषयत्व-स्यैव हेतुत्वेन विवक्षितत्वात् । फलस्य च कृतिविषयत्वेऽपि न साध्यत्वेन कृतिविषयत्वम्, किन्तु उद्देश्यतया इति न व्यभिचारः ।

तदनेन विवक्षितपरिशेषानुमाने विशेष्यासिद्धिश्च परिहृता भवति ।

विशेषणासिद्धिमुद्धरन्नेव द्वितीयं दूषयति **नापीति ॥** तत्र हेतुमाह **नियमेनेति ।** प्रारम्भे प्रारम्भात्पूर्वसमये । अनेन मङ्गलम् न समाप्त्यन्यफलकं

प्रारम्भात्पूर्वसमये नियमेनानुष्ठीयमानत्वात् दर्शादिवत् इत्यनुमानम् उक्तं भवति । अत्र च भ्रान्तकर्मणि व्यभिचारपरिहाराय नियमेनेति । न च आरम्भणीयायां व्यभिचारः, तस्याः प्रारिप्सितपरिसमाप्तिव्यतिरिक्तस्वर्ग-प्रयोजनकत्वात्; दर्शारम्भे नियमेनानुष्ठीयमानस्य 'अग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारिप्समानः' इति श्रुतिसिद्धत्वेन विवक्षितहेतोस्तत्र सिद्धेः । प्रारिप्सितसमाप्त्युद्देशेन वा अनुष्ठानविवक्षया तत्परिहारे च तत एव समाप्तिफलकत्वसिद्धेः परिशेषवैयर्थ्यम् इति वाच्यम् । 'प्रारिप्सित-समाप्त्यादिव्यतिरिक्तोद्देशेन अनुष्ठानात्' इत्यत्र तात्पर्यात् । आरम्भणीयायाश्च अतथात्वात् ॥

ततश्च ''मङ्गलम्, समाप्तिफलकम्, समाप्तीतराफलकत्वे सति सफल-त्वात्, यत् यदितराफलकत्वे सति सफलम् तत् तत्फलकम्, यथा सम्प्रति-पन्नम्'' इतिसामान्यव्याप्तिमूलकपरिशेषानुमानेन मङ्गलसमाप्त्योः साध्य-साधनभावबोधात् । असति साधने, साध्यनिष्पत्तेः असमाप्तत्वेन स्वरूपा-लाभात् न विषयादिमतोऽप्यस्य उपादेयत्वम् इति अव्याख्येयत्वमेव इति-सङ्ग्रहार्थः ॥ समङ्गलत्वेन निरन्तरायपरिसमाप्तिसम्भवेन, समाप्तस्य च प्रकरणस्य स्वरूपलाभसम्भवेन, न तदभावप्रयुक्तमपि अनुपादेयत्वम्; इति प्रेक्षावदुपादेयत्वात् व्याख्येयत्वमेव इत्यभिप्रेत्य समङ्गलत्वं व्यवस्थापयति उच्यते इति । अननुष्ठानासिद्धेः न उक्ताक्षेपावकाशः इति भावः । अनुपलब्धत्वादेव तत्सिद्धिः इत्यतो नानुपलम्भमात्रमभावसाधकम् किन्तु योग्यानुपलम्भ एव । ग्रन्थारम्भकालीनमाचार्यीयमङ्गलानुष्ठानञ्च इदानी-मयोग्यम्; इति तत एव अनुपलम्भोपपत्तेः न तेन अननुष्ठानसिद्धिः; इत्याह **मानसादेरपीति** ॥ ग्रन्थे निवेशनातिरिक्तस्यापि मानसादिमङ्गलस्य सम्भवात् इत्यर्थः । आदिपदेन कायिकस्य परिग्रहः ।

ननु ग्रन्थे निवेशनाभावस्य प्रत्यक्षत्वात् तत एव अननुष्ठानसिद्धिरस्तु इत्यतः किं निवेशनव्यतिरेकेण अनुष्ठानस्याभावात्, निवेशनाभावस्य च

प्रत्यक्षेणैव सिद्धत्वात् अनुष्ठानाभावसिद्धिः अभिप्रेता ? किं वा निवेशनस्य तद्व्यापकत्वात्, व्यापकाभावे व्याप्याभावनियमात्, प्रत्यक्षसिद्धेन निवेशनाभावेन अनुष्ठानाभावानुमानम् अभिप्रेतम् ? किं वा निवेशनस्य अनुष्ठान व्याप्तत्वात्, तदेकसमधिगम्यस्य अनुष्ठानस्य तदभावनिश्चयेन व्यतिरेकसिद्धिः ? इति विकल्पान्मनसि निधाय । आद्यं दूषयति **मानसादेरिति ।** 'तथा च ग्रन्थे निवेशनमेव तदनुष्ठानम्' इत्यसिद्धेः न अनुष्ठानाभावस्य प्रत्यक्षेण सिद्धिः इति भावः । ग्रन्थे निवेशनस्य अनुष्ठानव्यापकत्वासिद्धेः न तन्निवृत्त्या अनुष्ठानाभावानुमानमपि । इत्यभिप्रेत्य द्वितीयमपि दूषयति **मानसादेरिति ।** 'निवेशितस्यापि' इति शेषः । ननु अनिवेशितस्यापि मानसादेः मङ्गलत्वेन, निवेशनस्य तद्व्यापकत्वाभावेऽपि निवेशितस्यापि नमस्कारादेः मङ्गलत्वात्, निवेशनम् अनुष्ठानव्याप्यं स्यादेव । ततश्च ग्रन्थे निवेशनस्य अनुष्ठानव्याप्यत्वात् तत्कालीने आचार्यीयमङ्गलानुष्ठानेऽपि तदेव प्रमाणं वाच्यम्, व्याप्यान्तरादर्शनेन अनुष्ठानस्य निवेशनैकप्रमाणकत्वात् ॥ तथा च रूपाद्युपलब्ध्येकप्रमाणकस्य चक्षुरादेः रूपाद्युपलब्ध्यभावे व्यतिरेक निश्चयसन्देहौ यथा, एवं ग्रन्थे निवेशनैकप्रमाणकस्य मङ्गलानुष्ठानस्य तदभावेन व्यतिरेकनिर्णयसन्देहावेव स्यातामिति कथं अनुष्ठाननिर्णयः? इति तृतीयं पक्षं दूषयति **तच्चेति ।** स्यादेव रूपाद्यनुपलब्ध्या चक्षुरादेरभावनिर्णयः, मानान्तराभावेन तस्य चक्षुराद्युपलब्ध्येकप्रमाणकत्वात्; न चैवम् अनुष्ठानस्य निवेशनैकप्रमाणकत्वमस्ति ग्रन्थकर्तुराचार्यस्य परमास्तिकत्वादिरूपलिङ्गान्तरेण अनुष्ठानसिद्धेः । ततश्च अनुष्ठानस्य निवेशनैकप्रमाणकत्वासिद्धेः, न निवेशनव्यतिरेकेण तदभावनिश्चयः इत्यर्थः ॥ **अनुमीयत इति ।** 'अयं ग्रन्थारम्भः, अनुष्ठितमङ्गलकः, परमास्तिककर्तृकत्वात् भगवत्कतृकत्वाद्वा, सम्मतवत् इत्यनुमीयते इत्यर्थः ॥ इत्यप्याहुः ।

असिद्धश्च ग्रन्थे निवेशनम्, अतोऽपि न तेन तदनुष्ठानाभावसिद्धिः इत्याह **यच्चेति** ॥ तथा हि न तावत् मङ्गलवाचकशब्दानिवेशोऽननुष्ठानम्,

मायावादखण्डनादौ 'स्तौमि' इत्येतदनुत्क्त्वाऽपि नृसिंहस्तुत्यात्मक-मङ्गलानुष्ठानस्य ज्ञानात् । नापि मङ्गलात्मकशब्दानिवेशः । तस्यैवासिद्धेः । सूत्रादौ 'अथ'शब्दादेरिव अत्रापि पद्ये स्वातन्त्र्यादिशब्दस्यैव तथात्वोपपत्तेः ॥ 'स्वातन्त्र्यादि' इति 'आदि'पदेन तत्त्वतापरिग्रहः । तत्त्वतायाः तत्त्वान्तर साधारण्यात् स्वातन्त्र्यस्य आदित्वेन ग्रहणमिति बोध्यम् । ननु 'स्वातन्त्र्यादिसङ्कीर्तनं मङ्गलम्' इति नाश्रयितुम् युक्तम्, तथा सति एतस्य विघ्नविघातादिहेतुत्वेन समग्रप्रकरणाङ्गतया प्रथमपद्यावयवत्वाभावप्रसङ्गात् । तथात्वे च प्रथमपद्यं न्यूनमापद्येत । विधाप्रतिपादकस्य अन्यस्य अभावात् । तत्प्रतिपादनस्य च आवश्यकत्वात् । अन्यथा 'के ते द्वे विधे?' इत्याशङ्का न निराकृता स्यात् । तत्कथं स्वातत्र्यादिसङ्कीर्तनं मङ्गलम्? इत्यतः न मङ्गलत्वोक्त्या प्रथमपद्यावयवत्वाभावः 'स्वतन्त्र'पदस्य अभिप्रेयते किन्तु प्रतिज्ञातविधाप्रतिपादकत्वेन उपात्तस्य 'स्वतन्त्र'पदस्य न तन्मात्र-प्रयोजकत्वम् । किन्नाम अन्यार्थ आनीयमानपूर्णकलशदर्शनवत् प्रयोजनान्तर साधकत्वमपि, इत्येतावदेव इति न प्रथमपद्यस्य न्यूनत्वम् नापि मङ्गलत्वा-भावः इत्याशयेनाह **अन्यपरमपीति** । विभाजकोपाधिप्रदर्शनपरमित्यर्थः ॥

**(का.टि)** नमस्कारादिनिबन्धनमेव मङ्गलमिति मन्वानः शङ्कते ॥ **नन्विति ॥ मङ्गलाचरणं** आचारप्राप्तमङ्गलम् ॥ **कस्मान्नानुष्ठितमिति ॥** तस्याफलत्वाद्यभिमानं विना न कस्मादपीत्यर्थः । ननु वस्तुतोऽफलत्वात् अप्रकृतफलत्वाद्वा तदननुष्ठानं किं न स्यात् इत्याशङ्क्य आद्यं निराचष्टे ॥ **न तावदिति ॥** अनुष्ठितत्वमात्रस्य चैत्यवन्दनादावनैकान्त्यात् **प्रेक्षावद्भिरिति** । अभ्रान्तैरित्यर्थः अभ्रान्तत्वं च मङ्गलानुष्ठातॄणां महर्षीणामागमसिद्धम् । द्वितीयं निराकरोति ॥ **नापीति ॥ समास्यादिव्यतिरिक्तफलं** समाप्तिप्रचय-व्यतिरिक्तमात्रफलकं समाप्त्याद्यफलकमिति यावत् । तेन तत्तदन्योभय-फलकस्यानुष्ठानसम्भवेऽपि नासङ्गतिः । अनुष्ठीयमानत्वमात्रस्य भोजनादौ व्यभिचरितत्वात् **आरम्भ** इति । अवान्तरारम्भव्यावृत्तये ग्रन्थारम्भलाभार्थः

प्रशब्दः । करचेष्टादौ व्यभिचारवारणाय **नियमेनेति ।** चैत्यवन्दनादेरपि कैश्चिन्नियमेनानुष्ठानात् **प्रेक्षावद्भिरित्यनुवर्तनीयम् ।** तथा च 'मङ्गलं न समाप्त्याद्यफलकं प्रेक्षावत्कर्तृकग्रन्थारम्भनियतानुष्ठानविषयत्वात् व्यतिरेकेण यागादिवत्' इत्युक्तं भवति ।

यद्वा समाप्त्याद्युद्देशेन प्रेक्षावदनुष्ठितत्वस्य हेतुत्वे तात्पर्यम् । अत्र च 'यत् यदुद्देशेन प्रेक्षावदनुष्ठितं तत् तदफलकं न भवति' इति सामान्यव्याप्तौ स्वर्गफलयागादिकं दृष्टान्तः । एवं चात्र मङ्गलाननुष्ठानेन प्रामाणिकार्थानङ्गीकारमूलकत्वात् शिष्टाचारविरुद्धत्वात् प्रचयानर्हत्वाच्चैतत्प्रकरणस्य व्याख्यानमयुक्तम् । न च मङ्गलाभावे समाप्त्यनुपपत्तिः कारणान्तरेणापि समाप्तिसम्भवादिति शङ्काभिप्रायः ।

**केचित्तु,** मङ्गलस्य समाप्तिहेतुतया तदभावेनासमाप्तत्वादव्याख्येयमेतत्प्रकरणमित्याशयेन शङ्कते ॥ **नन्विति ॥** मङ्गलस्य समाप्तिहेतुत्वे किं मानं? इति चेत्, 'मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वात्' इति परिशेषानुमानमेवेत्यभिप्रेत्य तत्र विशेष्यविशेषणासिद्धी परिहरति ॥ **न तावदिति ॥** न च 'नियमेन प्रारम्भे अनुष्ठीयमानत्वात्' इत्यनेन समाप्तिफलकत्वसाधनसम्भवात्परिशेषवैयर्थ्यमिति वाच्यम् । समाप्त्यादिव्यतिरिक्तोद्देशेनाननुष्ठीयमानत्वस्यैव तत्र विवक्षितत्वात् तस्य च सुखादिसाधारणस्य समाप्तिफलकत्वासाधकत्वेन परिशेषसार्थक्यात् । अत एव दर्शपूर्णमासारम्भे अनुष्ठीयमानारम्भणीयेष्ट्यादौ न व्यभिचार इति व्याचक्षते ।

प्रकरणादौ मङ्गलाननुष्ठानस्यैवासिद्धत्वादव्याख्येयत्वशङ्कनमनुपपन्नमिति भावेन समाधत्ते ॥ **उच्यत इति ॥** इति चेत् अनुष्ठितमेव मङ्गलमित्युच्यत इत्यध्याहारेणान्वयः । तर्हि उपलभ्येतेत्यत आह ॥ **मानसादेरपीति ॥** स्यादेवं, यदि नमस्कारादिनिबन्धनमेव मङ्गलं स्यात् । न त्वेवम् । भगवदुत्कर्षविषयीकारिज्ञानकर्मशब्दात्मकतया तस्य त्रैविध्यात् । प्रकृते च

अस्मदादिप्रत्यक्षायोग्यज्ञानादिरूपमङ्गलसत्वान्नोक्तदोष इति भावः । अत्र मानसस्यैव मुख्यत्वान्मुखतो ग्रहणम् ।

ननु तस्य सत्वे किं मानं? अत आह ।। **तच्चेति** ।। मानसादिरूपं चेत्यर्थः ।। **परमास्तिकत्वात्** सकलसिद्धान्ताभ्युपगन्तृत्वात् । तच्च बलित्थेत्यागम-सिद्धमिति भावः । ननु 'आचार्यः कृतमङ्गलः परमास्तिकत्वात्' इत्यनुमानं सिद्धसाधनम् । ग्रन्थान्तरे कृतमङ्गलत्वात् । एतद्ग्रन्थादौ कृतमङ्गलत्वसाधने मन्वादौ व्यभिचारः । एतद्ग्रन्थकृत्त्वे सतीति हेतुविशेषणे सपक्षाभावो विशेष्यवैयर्थ्यं चेति चेन्न । 'यो यद्ग्रन्थकृत्त्वे सति परमास्तिकः स तदादौ कृतमङ्गलः' इति सामान्यव्याप्तौ मन्वादिस्मृतिकर्तृः सपक्षत्वात् । नास्तिकादौ व्यभिचारवारकतया विशेष्यसार्थक्याच्च ।

'एतद्ग्रन्थो मङ्गलाचरणपुरःसरः परपास्तिककर्तृकत्वात् ग्रन्थान्तरवत्' इत्यनुमाने तात्पर्यमित्यप्याहुः । एवं च परिशेषान्मानसादिरूपमेव मङ्गलं सिद्ध्यतीत्यभिप्रायः ।

ननु ग्रन्थादौ मङ्गलनिबन्धनस्य शिष्यशिक्षार्थत्वेन शिष्टाचारप्राप्तत्वात्त-द्विरोध इति । अत आह **यच्चेति** ।। निबन्धनस्यैव मङ्गलत्वमभ्युपेत्याह **यच्चेती**त्येके । निबन्धनाभावेन मङ्गलाभावानुमाने हेत्वसिद्धिरित्याह **यच्चेती**-त्यन्ये । यस्त्वाचार्यस्य परमास्तिकत्वे विप्रतिपन्नस्तं प्रत्यप्याह **यच्चेती**त्य-प्याहुः । **अयं** आचार्यः । स्वातन्त्र्यादीत्यादिना **स्वतन्त्र**मित्येकवचनार्थस्य सजातीयद्वितीयराहित्यरूपैकत्वस्य, अस्वातन्त्र्यघटकपरत्वस्य च परि ग्रहः। **आदितः** आदावेव । अन्यथा तत्वं द्विविधं स्वतन्त्रमस्वतन्त्रञ्च इत्यवक्ष्यदिति भावः ।

तत्वत्वमादिपदग्राह्यमित्यन्ये । भगवत्वं तथेत्यप्याहुः । अत्र च **आदितः** इत्यस्यादिम श्लोक इत्यर्थो बोध्यः ।

ननु तत्वविभागादिपरस्यास्य कथमनन्तरायपरिसमाप्त्यादिसाधकत्वं? अन्यथा चार्वाकोच्चरितेश्वरादिशब्दस्यापि तथात्वापत्तेरिति । अत आह ।।

**अन्यपरमपीति** ॥ अन्योद्देश्यकमपि । **तत्** सङ्कीर्तनं । **भक्त्येति** चार्वाकादि-निरासः । आचार्यस्य प्रमाणान्तरात्, आदित एव सङ्कीर्तनाच्च भक्ति-रवसीयत इति भावः । **स्वभावात्** सामर्थ्यात् । **मङ्गलानि** निर्विघ्नपरि-समाप्त्यादिमङ्गलफलानि ॥ **सम्पादयतीति** ॥ भक्तिपूर्वकभगवत्कीर्तनस्यैव मङ्गलत्वात् अन्यपरत्वाविशेषितस्य च समाप्त्यादिसाधनत्वादिति भावः । अनेन मङ्गलस्य पृथगनिबन्धनमन्यपरस्यापि तस्य समाप्त्यादिहेतुत्व-ज्ञापनायेत्युक्तं भवति । इतिशब्दः प्रकृतशङ्कानिरासससमाप्त्यर्थः ।

**तत्वसामान्योद्देशविभागौ तत्वसामान्यलक्षणं च**

**(टी.) तत्र तावत् तत्वं सामान्यतो विभागेनोद्दिशति**

**स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्वमिष्यते ।**

**तत्वमनारोपितम् । प्रमितिविषय इति यावत् । तेन 'तस्य भावस्तत्त्वं इत्यादिखण्डनानवकाशः ।**

**(रा. टि.) ॥ तत्रेति ॥** मुमुक्षुणा अङ्गाङ्गिभावेन ज्ञातव्यतया तत्वद्वये अवश्यं वाच्ये सतीति वा, शास्त्रविषयादिना विषयादिमत्त्वे सिद्धे सतीति वा, समङ्गलत्वेन प्रकरणस्यारम्भणीयत्वे सिद्धे सतीति वा, सामान्य-विशेषविभागोद्देशादिषु मध्य इति वा अर्थः । विशेषविभागादिः पश्चादिति तावच्छब्दः । **तत्वं द्विविधमिति** सामान्यतो विभागः । **स्वतन्त्रमस्वतन्त्रं चेति** सामान्यत उद्देश इति विवेकः । विभागेनेति हेतौ तृतीया । ननु किं तत्वपदेन विवक्षितं? तस्य भावस्तत्वमिति चेत् तच्छब्दार्थानिरुक्तिः । तच्छब्दपरामर्शविषयस्य प्रकृतस्य कस्यचिदभावात् । भावपदोक्तधर्मस्यैव प्राप्त्या धर्मिणोऽप्राप्तिश्चेति । अत आह ॥ **तत्वमनारोपितमिति** ॥ एवं तर्हि कूर्मरोमादेः प्रधानस्याप्रसिद्ध्या काप्यारोपाभावेन तदपि तत्वमिति प्रसज्येतेति । अत उक्तं **प्रमितिविषय इति यावदिति** । साक्षात्प्रमितिविषय इति वा, विधिप्रमितिविषय इति वा अस्यार्थो ध्येयः । 'कूर्मरोमादि नास्ति'

इतिनिषेधप्रतीतिविषयत्वेऽपि 'कूर्मरोम अस्ति' इति वाक्याभासजन्यविधि-प्रत्ययविषयत्वेऽपि वा न दोषो भवति ॥ **इत्यादीति ॥** इत्यादिविकल्प-पूर्वकखण्डनानवकाश इत्यर्थः ।

(श्री. टि.) **तत्रेति ।** बुद्धिस्थानां सामान्यविशेषविषयाणामुद्देश-विभागलक्षणपरीक्षाणां मध्य इत्यर्थः । यद्वा तत्वे सङ्गृह्य निरूपणीय इत्यर्थः। विभागेन सङ्गृह्य तत्वनिरूपणस्य प्रकरणावान्तरप्रयोजनत्वेन प्रागुक्तत्वात्। निरूपणस्य चोद्देशात्मकत्वेन तादृशे तत्वस्य निरूपणे कर्तव्ये आदौ तावत्सामान्यतो विभागोद्देशावाहेति भावः । ननु तत्वसामान्यलक्षण-मनभिधाय विभागःक्रियत इति न्यूनतेत्यत आह ॥ **तत्वमनारोपितमिति ।** तथाच तत्वमित्यनुवादेनैव लक्षणमपि सूचितमिति भावः । नन्वारोपा-विषयत्वं प्रधानाभावेनानारोपिते कूर्मरोमाद्यसद्विशेषे अतिव्याप्तमित्यत आह ॥ **प्रमितिविषय इति ।** ननु कूर्मरोमादिकं ज्ञातं वा नवा। नचेत्कातिव्याप्तिः। ज्ञातं चेत् आरोपविषयत्वमेवेति नातिव्याप्तिः । यदि च नारोपविषयः अथच ज्ञातं तदा प्रमितमेवेत्यतिव्याप्तितादवस्थ्यमिति चेन्न । यस्यासद्विशेषस्य कदाचिदपि नारोपः किंत्वसत्त्वेनैव ज्ञानम् । तत्रारोपाविषयत्वसत्त्वेनाति-व्याप्तिसम्भवात् । न च तत्र प्रमिति विषयत्वमपि प्राप्तमिति वाच्यम् । असत्त्वप्रकारकप्रमिति विषयत्वेऽपि सत्त्वप्रकारकप्रमिति विषयत्वस्य तत्रा-भावात्। लक्षणस्य तथाविवक्षितत्वात्। अत्र साक्षादित्यपिविशेषणीयम्। अतो न भ्रमविषयकानुव्यवसायादिविषये रजतादावतिव्याप्तिः । ननु धर्म्यंशे-प्रमात्वेन तद्विषये प्रकारत्वांशेऽतिव्याप्तिरिति चेन्न। यदंशे ज्ञानस्य प्रमितत्वं तदंशविषयकत्वस्यैव विवक्षितत्वात्। भ्रमप्रकारे च तदंशविषयत्वाभावादिति दिक्। तत्वशब्दस्योक्तार्थत्वेन न खण्डनदूषणावकाश इत्याह ॥ **तेनेति ।** तस्य भावस्त्वतलाविति सूत्रात्तत्वमित्यत्र तस्य भावस्तत्वमित्यर्थः । तत्वं स्वतन्त्रास्वतन्त्रभेदेन द्विविधमित्यसङ्गतम् । धर्मिभूते तत्वे घटादाव-व्याप्तिश्चेति दूषणानवकाशः । अनारोपितं तत्वमित्यभिप्रेतत्वेन त्वदीय-दूषणस्य छलत्वादिति भावः ।

**(स. टि.)** तत्र वक्तव्यतया बुद्धिसंनिहितेषूद्देशलक्षणविभागेषु । तावत् पूर्वम् । तत्वम् । सामान्यतः सामान्येन । विभागेनोद्दिशति नाम्ना सङ्कीर्तनं करोतीत्यर्थः । नन्वनुद्दिष्टस्य लक्षणकथनासम्भवेन, अलक्षितस्य च विभाग कथनायोगेन च उद्देशानन्तरं विभागात्पूर्वं सामान्यलक्षणस्यावश्य वक्तव्य-स्यानुक्तेर्न्यूनता स्यादित्यतः मूलउद्देशेनैव तत्वसामान्यलक्षणमपि सूचित-मित्याशयेनाह ॥ **तत्वमनारोपितमिति** ॥ अत्र यदनारोपितं तत्तत्वमित्यर्थः । अत्र प्रतीतत्वे सतीति विशेषणं देयम् । तेनारोपाविषये कूर्मरोमशश-विषाणादौ नातिव्याप्तिः ।

ननु कूर्मरोम्ण आरोपाविषयत्वं कथमिति चेत् शृणु । सर्वत्रारोपे

**अधिष्ठानं च सदृशं तथ्यवस्तुद्वयं विना ।**
**न भ्रान्तिर्भवति क्वापि स्वप्नमायादिकेष्वपि ॥**

इत्युक्तरीत्याऽधिष्ठानसदृशप्रधानस्यावश्यकत्वेन रोमान्तराद्यधिष्ठानक कूर्मरोमारोपेप्रधानभूतकूर्मरोम्णः कुत्राप्यभावेनारोपासम्भवेनातद्विषयत्व सम्भवात् । ''यदि नाम कूर्मरोमादिकमनारोपित''मिति तत्वविवेकटीकाया अप्येष एवार्थो बोध्यः । यस्यासद्विशेषस्य कदापि नारोप इति टिप्पण्यन्तर-भावोऽप्येवमेव बोध्यम् ।

अस्य लक्षणस्य पर्यवसितमर्थमाह ॥ **प्रमितिविषय इति यावदिति** ॥ प्रमितिविषय इत्येतावद्यावदर्थजातं वक्ति तावदर्थजातं प्रतीतत्वे सति आरोपाविषयत्वमित्यस्यार्थ इत्यर्थः । नन्वसतोऽपि प्रमितिविषयत्वात्तत्राति-व्याप्तिरिति चेन्न । द्विविधं विषयत्वम् । ज्ञानासाधारणकारणसंनिकर्षा-श्रयत्वरूपं, उल्लेख्यत्वरूपं चेति । तत्राद्यं नासत्यस्तीति नातिव्याप्तिः । द्वितीये सत्वप्रकारकेति विशेषणान्न तत्रैवाति व्याप्तिः । एतेन असतोऽपि ज्ञानविषयत्वस्य भगवत्पादैस्तत्र तत्रोक्तत्वात्कथं प्रतीतत्वविशेषणेन तन्निरास इति शङ्कानिरासः । तत्वलक्षणकथनस्य फलमभिलपति ॥

**तेनेति ।।** तेन रूढतत्वशब्दस्य पारिभाषिक लक्षणकथनेनेत्यर्थः ।। **खण्डनानवकाश इति ।।** खण्डनकारेण श्रीहर्षेण स्वग्रन्थे ''तत्वानुभूतिः प्रमे''ति प्रमाणलक्षणकथनावसरे ''तस्य भावस्तत्वमित्युच्यते । प्रकृतं च तच्छब्दार्थः । न चात्र प्रकृतं किञ्चिदस्ति । यत्तच्छब्देन परामृश्येते''त्यादि यत्खण्डनं कृतं तदनवकाश इत्यर्थः । आदिशब्देन ''तत्स्वतन्त्रमस्वतन्त्रं चेत्येतावतैव पूर्तेर्भावप्रत्ययवैयर्थ्य''मित्यादिखण्डनग्रहः । यद्वा ''पराक्त्व-प्रत्यक्त्वविशिष्टवस्तुवाचिनोस्तत्वंपदयोरभेदविधानाय प्रयोक्तव्यत्वेन प्रकृते तयोर प्रकृतत्वात्कथमेत''दित्यादिखण्डनानवकाश इत्यर्थः । अथवा तस्य भावस्तत्वमित्यादि यत्खण्डनं विग्रहप्रदर्शनं तस्यानवकाशः । आदिपदेन स चासौ त्वं चेत्यादि विग्रहग्रहः । अखण्डपदत्वाभ्युपगमादिति भावः ।

**(पां. टि.)** तत्रेति । वक्तव्यत्वेन बुद्धिस्थानां सामान्यविशेषाणाम् उद्देशविभागपरीक्षाणां मध्ये इत्यर्थः । 'भावाभावौ द्विधेतरत्' इत्यादिना करिष्यमाणयोः उद्देशविभागयोः विशेषविषयकत्वात् अत्र च क्रियमाणयोः सामान्यविषयकत्वात् अपौनरुक्त्यमिति भावेनोक्तं **सामान्यत** इति ।

विशेषोद्देशादेः सामान्योद्देशादिपूर्वकत्वात् अयमेवादौ कर्तव्यः इति हृदयम् । न च न्यूनता । विशेषोद्देशादेरपि करिष्यमाणत्वादिति भावेन तावत् इत्युक्तम् ।। यद्यपि अत्र 'तत्त्वम्' इत्यनुवादेनैव तत्त्वसामान्यलक्षणम्, 'स्वतन्त्रम्' इत्यादिना च विशेषलक्षणञ्च अर्थात् उक्तमेव, तथा 'इष्यते' इत्यनेन प्रमाणं सूचयता परीक्षाऽपि अर्थात् कृतैव; तथापि उद्देशविभाग-योरिव लक्षणपरीक्षयोः साक्षादकृतत्वात् 'विभागेन उद्देशं करोति' इत्युक्तम् ।। 'विभागेन'इति सहभावे तृतीया । ततश्च विभागं उद्देशञ्च करोति इत्यर्थः । अत एव अन्यत्र समाहारद्वन्द्वविवक्षया 'विभागोद्देशं करोति' इत्युक्तम् ।। अत्र च 'तत्त्वम्' इत्यनेन सामान्योद्देशः, 'द्विविधम्' इत्यनेन विभागः 'स्वतन्त्रमस्वतन्त्रञ्च' इत्यनेन च तद्द्वैविध्यं दर्शितमिति द्रष्टव्यम् ।

ननु तत्त्वसामान्यलक्षणाभिधानेन विना कथं विभागोद्देशावसरः? अवच्छेदकैक्येन ऐक्यमापन्नं हि वस्तु विभज्य उद्देष्टव्यमित्यतः तत्त्वशब्द-रूढ्या 'तत्त्वम्'इत्यनुवदतैव सूचितं तल्लक्षणमाह **तत्त्वमनारोपितमिति ॥**

ननु तत्त्वपदसूचितं अनारोपितत्वं न तत्त्वसामान्यलक्षणमङ्गीकर्तुं युक्तम्। तत्त्वविवेकटीकाविरुद्धत्वात् । तत्र प्रमाविषयत्वरूपप्रमेयत्वस्य 'प्रमेयम्' इत्यनुवादेन सूचितस्य लक्षणत्वाभिधानादित्यतः प्रमिति-विषयोऽपि 'यथाश्रुते प्रमासम्बन्धात्प्राक् तत्त्वभावानुपपत्तिप्रसङ्गात् इति यावत्'एवमभिप्रायकः अनारोपितत्वरूपः एव, प्रमासम्बन्धात्प्रागपि अनारोपितत्वस्य सत्त्वेन तत्त्वभावोपपत्तेः । अतः तत्रोक्तप्रमेयत्वस्यापि अनारोपितत्वरूपत्वात् न तद्विरोधः इत्याह प्रमितिविषय इति यावदिति।

यद्वा ''ननु अनारोपितत्वं 'न आरोपितम्- अनारोपितम्' इति प्रसज्य-प्रतिषेधाश्रयणेन आरोपाविषयत्वं वा विवक्षितम् ? किं वा 'न आरोपः-अनारोपः । तं, इतम् प्राप्तम्; अनारोपितम्'इति पर्युदासाश्रयणेन प्रमा-विषयत्वं वा ? नाद्यः । कूर्मरोम्णः अपि आरोपितत्वाभावेन तत्त्वभाव प्रसङ्गात् । प्रधानीभूतसत्यकूर्मरोमाभावेन तदारोपस्य असम्भवात्, आरोपस्य आरोप्यसदृशसत्यप्रधानसापेक्षत्वस्य सिद्धान्तस्थितत्वात् । अत एवोक्तम्-

**'अधिष्ठानञ्च सदृशं तथ्यवस्तुद्वयं विना । न भ्रान्तिर्भवति ॥'** इत्यादि। न च यदि कूर्मरोमादिकं न प्रतीतं तदा अतिव्याप्तेः अज्ञानात्, यदि च प्रतीतं तर्हि असत्प्रतीतेः आरोपरूपत्वेन लक्षणाभावात्, न कोऽपि दोषः इति वाच्यम्; तथापि लक्षणस्यातिव्याप्तेः इतरभेदसाधने वास्तव-व्यभिचारपर्यवसानत्वेन दोषत्वावश्यंभावात् । नापि 'प्रमाविषयत्वम्' इतिद्वितीयः पक्षः । प्रमासम्बन्धात्प्राक् तत्त्वभावानुपपत्तिप्रसङ्गात् । तदिह पक्षद्वयेऽपि लक्षणवाक्यानिर्वाहात् न अनारोपितत्वं युक्तमित्यतः अभावार्थ-त्वपक्षे अनारोपितत्वमात्रस्य अतिप्रसक्ततया प्रतीयमानत्वविशेषितस्यैव

तस्य लक्षणत्वस्वीकारात्। प्रतीयमानत्वसामान्यस्य च अनारोपितपदनिषिद्ध भ्रान्तिविषयत्वरूपविशेषपर्यवसानायोगेन प्रमाविषयत्वरूपविशेषपर्यवसाना-वश्यंभावात् । तस्य च कूर्मरोमादौ अभावात् न तत्पक्षदोषः । पर्युदासा-श्रयेण च सुतरां तत्रानतिप्रसङ्गः । इत्याह **प्रमितिविषय इति यावदिति ॥**

न चैवमेतत्पक्षोक्तदोषावकाशः । अत्यन्ताभावाप्रतियोगित्वरूपप्रमा-विषयत्वयोग्यत्वात्मकस्यैव 'प्रमाविषय इति यावत्' इति तत्त्वलक्षणतया अभिमतत्वात्। तस्य च प्रमासम्बन्धात्प्रागपि सत्त्वात् तत्त्वभावो युक्त एव। न च एवमपि असन्मात्रस्य तत्त्वभावापत्तिः । तस्यापि नास्तित्वप्रकारक-प्रमाविषयत्वादिति वाच्यम् । अस्तित्वप्रकारकप्रमाविषयत्वस्य लक्षणत्वेन विवक्षणात् । कूर्मरोमादेर्नास्तीतिविषयस्यापि सत्त्वप्रकारकप्रमागोचरत्वा-भावात् न तत्र प्रसङ्गः । न च एवमपि अभावस्य अतीतादेर्वा नास्तित्व-प्रकारकप्रमागोचरत्वात् तत्र अव्याप्तिः इति वाच्यम् । 'नास्ति घटः' इति नास्तित्वप्रकारकप्रमागोचरस्यापि अभावस्य 'घटाभावोऽस्ति' इत्यादिसत्त्व प्रकारक प्रमागोचरस्यापि सत्त्वात्, अतीतादेः अतीततादशायां 'नास्ति' इति प्रमागोचरस्यापि वर्तमानदशायाम् 'अस्ति' इति प्रमागोचरत्वकस्य अकलङ्कत्वात् । न च 'अस्मदादीनां शुक्तिरजतादिविभ्रमस्य पारमार्थि-कत्वात्, तदज्ञत्वे परमार्थाशेषार्थाज्ञत्वेन सार्वज्ञहानिप्रसक्त्या, अवश्य-मीश्वरस्य तज्ज्ञत्वं वाच्यम् । तथा च भ्रमविषय-ईश्वरप्रमा-विषयावच्छिन्न-ज्ञानस्य अवगाहनात् तद्विषयीभूतवैशिष्ट्यस्यापि तत्त्वरूपत्वं स्यात्' इति वाच्यम् । यत्- प्रमया 'अस्ति' इत्यनेन प्रकारेण विधीयते - सत्ताऽऽ-विष्टतया बोध्यते, न तु 'नास्ति'इति निषिध्यते, न वा 'अन्येन एवं ज्ञातम्' इत्यनूद्यते तत् प्रमेयम्; इत्यङ्गीकारात्। न च ईश्वरप्रमा शुक्तिरजतस्य स्वयम् अस्तित्वग्रहणरूपा, 'शुक्तिरजतमस्ति' इत्यग्रहणात्; किन्तु 'भ्रान्तोऽयम् शुक्तिमेव रजततया जानाति' इति अनुवादरूपैव इति न तद्विषयत्वमात्रेण वैशिष्ट्यस्य तत्त्वभावप्रसक्तिः ॥ अत एव 'भ्रमोऽयमासीत्'इति-

अस्मदादिनिष्ठानुव्यवसायस्य प्रमात्वात् । तस्य च अर्थावच्छिन्नभ्रम-विषयत्वात्, 'भ्रमविषयवैशिष्टस्यापि तत्त्वभावप्रसङ्गः' इति निरस्तम् । तस्य वैशिष्ट्यांशे अतथात्वात् । न च- 'इदं रजतम्' इति ज्ञानस्यापि इदमंशे अबाधितत्वेन प्रमात्वात्, तेनैव-अस्तित्वाकारेणैव शुक्तिरजतस्य विषयी-करणात्, तत्र अतिव्याप्तिः स्यादिति वाच्यम्; भ्रमस्य धर्म्यंशे प्रमात्वेऽपि वैशिष्ट्यांशे प्रमात्वाभावेन, प्रमांशेन च 'इदम्'अंशमात्रं विषयीकुर्वता भ्रमप्रकारस्य अविषयीकरणेन, अतिव्याप्त्यनवकाशात् ।। इति सङ्क्षेपः ।।

'तत्त्व'शब्दस्य अनारोपिते रूढ्यङ्गीकारेण खण्डनकारोक्तं दूषणमपि परिहृतम् इत्याह **तेनेति** ।। 'तत्त्वानुभूतिः प्रमा'इत्युदयनोक्तप्रमालक्षणं खण्डयता श्रीहर्षेण ''किं तत्त्वमत्र विवक्षितम् ? यद्युच्यते 'तस्य भावः तत्त्वम्'इति तन्न, प्रकृतं हि तच्छब्दार्थः, न चात्र प्रकृतं किञ्चिदस्ति यत् 'तत्'शब्देन परामृश्येत'' इत्यादिना 'तत्त्व'शब्दस्य योगार्थमाश्रित्य यत् दूषणम् उक्तम् । 'तत्त्व'शब्दस्य अस्माभिः उक्तरीत्या यौगिकार्था-नाश्रयणात्, रूढ्यैव 'तत्त्व' शब्दस्य अनारोपितत्वाङ्गीकारात्, नावकाशं लभते इत्याशयः ।

स्वतन्त्रतत्त्वपदार्थस्य अन्यार्थतया तत्पदेनैव बोधसम्भवात् भावप्रत्यय-वैयर्थ्यादिदूषणानवकाशः इति भावः इत्यन्ये ।।

**(का. टि.) ।। तत्रेति ।।** तत्वे प्रतिपादनीये सतीत्यर्थः । यद्वा कर्तव्यत्वेन बुद्धिस्थानामुद्देशलक्षणविभागपरीक्षाणां मध्य इत्यर्थः । अथ वा तत्रेति निमित्तसप्तमी । तथा च विशेषतो जगदवगमार्थमित्यर्थः । समान्यतो ज्ञाते विशेषजिज्ञासोदयादिति भावः । विभागसहितोद्देशस्य चतुर्थपादेऽपि सत्त्वा-त्पुनरुक्तिरित्यत उक्तम् ।। **सामान्यत इति ।।** उत्तरत्र तु विशेषत एवोद्देशादि-रिति भावः । तदपेक्षयैव तावच्छब्दः । तेन सामान्योद्देशविभागादेर्विशेषोद्देश-विभागाद्यङ्गत्वात्प्राथम्यं युक्तमिति सूचितम् । अत्र **तत्व**मित्युद्देशः । **द्विविध**मिति विभागः । **स्वतन्त्रमस्वतन्त्रश्चे**ति द्वैविध्यप्रदर्शनम् ।

यद्यप्युद्देशेनैव लक्षणं, **इष्यते** इत्यनेन परीक्षा च लभ्यत एव तथाप्युद्देश-विभागयोरिव लक्षणपरीक्षयोः साक्षादलाभादुभयोरेव ग्रहणम्।

ननु तत्वसामान्यलक्षणमनभिधाय तद्विभजनमसङ्गतम्। लक्षणेन वस्तु-निर्धारणानन्तरमेव विभागाकाङ्क्षोदयादिति चेन्न। उद्देशेनैव लक्षणस्य लब्धत्वादित्याशयेनाह ॥ **तत्वमिति** ॥ आरोपो भ्रमः। तदविषयत्व-मनारोपितत्वम्।

### अनारोपितत्वलक्षणस्यासम्भवशङ्का तन्निरासश्च

नन्वेवमसम्भवः। 'सर्वं मिथ्या' इत्यादिभ्रमविषयत्वस्य सर्वत्रैव तत्त्वात्। न च 'भ्रमाप्रकारत्वमनारोपितत्वम्'। 'ब्रह्म सर्वं' इत्यादिभ्रमे तादात्म्येन सर्वस्यैव प्रकारत्वात्। न च शुक्तौ रजतस्येव ब्रह्मणि सर्वस्यासत एवारोप्यत्वान्न दोष इति वाच्यम्। 'असदेव रजतं प्रत्यभात्' इतिवत् 'असदेव सर्वं प्रत्यभात्' इत्यप्रतीते आरोप्यस्यासत्त्वनियमाभावात्। अत एव सुधायामुक्तं, यत्रारोप्यमधिष्ठानसन्निहितं तत्र तत्तादात्म्यमात्रमसत् इति। मैवं, सत्त्वारोपाविषयत्वस्य विवक्षितत्वात्। सत्त्ववति सत्त्वारोपा-सम्भवान्नोक्तदोषः। न चोक्तभ्रमस्य सर्वतादात्म्ये सत्त्वारोपरूपत्वादुक्त-दोषतादवस्थ्यमिति वाच्यम्। सत्त्वारोपत्वविशिष्टाविषयत्वस्य विवक्षितत्वात्। यत्र यस्यारोपस्तस्यैव तदारोपत्वविशिष्टविषयत्वात्।

नन्वेवमपि कूर्मरोमादावतिव्याप्तिः। तत्र रोममात्रस्यारोपितत्वेऽपि विशिष्टस्यानारोपितत्वात्। न च विशिष्टस्यापि 'कूर्मरोमास्ति' इत्यारोप-विषयत्वान्नातिव्याप्तिरिति वाच्यम्। 'कूर्मरोम नास्ति' इत्यसत्त्वेन प्रतीय-मानस्यानारोपितत्वादिति चेन्न। प्रतीतौ सत्यामनारोपितत्वस्य विवक्षि-तत्वात्। न च प्रतीतिविषयत्वमात्रं सम्यक्। तज्जनकसन्निकर्षादि-मत्त्वरूपतद्विषयत्वस्यासद्व्यावृत्तत्वादिति वाच्यम्। उल्लेख्यत्वरूपविषय-त्वस्यैव विवक्षितत्वेन शुक्तिरजतादावतिव्याप्तेः। न चैवं कूर्मरोमादावति-

व्याप्तिः । सत्त्वेनोल्लेख्यत्वस्य विवक्षितत्वात् । एवं च सत्त्वारोपानुल्लेख्यत्वे सति सत्त्वेनोल्लेख्यत्वं तत्त्वलक्षणमिति निष्कर्षः । न च सत्त्वारोपानुल्लेख्यत्वे सति' सत्त्वेनोल्लेख्यत्वस्य विशिष्टकूर्मरोमादावतिव्याप्तिः । विशिष्टस्य सत्त्वेन प्रतीतावनारोपितत्वासम्भवात् । अनारोपितत्वे च सत्त्वेनोल्लेख्यत्वासम्भवात् ।

नन्वेवं तत्वविवेकविरोधः । तत्र प्रमेयत्वस्यैव तत्वसामान्यलक्षणत्वावगमात् । न च तल्लक्षणान्तरमिति वाच्यम् । तस्यैव लघुत्वेनोपादेयत्वात् अस्य तदनुसारित्वानुपपत्तेश्च । मैवं, तल्लक्षणाधिगमार्थमेतल्लक्षणप्रणयनात् । अत एवास्य तत्रैव तात्पर्यमित्याह ।। **प्रमितिविषय इति ।। यावत्** पर्यवसितार्थः । प्रतीतौ सत्यामनारोपितत्वस्य प्रमितिविषयत्वव्याप्यतया तेन तल्लाभादिति भावः ।

यद्यपि कूर्मरोमादावसत्त्वप्रमितिविषयत्वमस्ति तथापि सत्त्वप्रकारकप्रमितिविषयत्वस्य विवक्षणान्नातिव्याप्तिः । न च कूर्मरोमाभावोऽस्तीत्यादिप्रमितिविषयत्वमादायातिव्याप्तिरिति शङ्क्यम् । सत्वप्रकारकत्वविशिष्यप्रमितिविषयत्वस्य विवक्षितत्वात् । तादृशस्य कूर्मरोमाद्यभाव एव सत्त्वात् । यद्यपि सत्त्वं लक्षणमित्यपि सुवचं तथापि तदुपपादकत्वादस्योक्तिः । न चैवं प्रमासम्बन्धात्पूर्वमव्याप्तिः । ईश्वरप्रमासम्बन्धस्य सर्वदैव सत्त्वात् । एवं चैतद्दोषवारणार्थं अत्यन्ताभावाप्रतियोगित्वरूपप्रमाविषयत्वयोग्यत्वविवक्षणं प्राचां तज्जनकसन्निकर्षादिमत्त्वरूपतद्विषयत्वविक्षया तदुल्लेख्यत्वविवक्षायामुक्तरीत्या दोषानवकाशादित्यवधेयम् ।

एवं च तत्वशब्दव्याख्यानेन तत्वानुभूतिः प्रमेत्युदयनोक्तलक्षणे खण्डनकारोक्तदूषणस्य प्रकृते नावकाश इत्याह ।। **तेनेति ।।** 'तस्य भावस्तत्वम् । प्रकृतं च तच्छब्दार्थः । न चात्र प्रकृतं किञ्चिदस्ति'' इत्यादिरूपं यत्खण्डनं तदनवकाश इत्यर्थः । अस्माभिस्तत्वशब्दस्य यौगिकार्थत्यागेन रूढ्यर्थाङ्गीकारादिति भावः ।

तस्य भावस्तत्त्वम् । आदिना, स चासौ त्त्वं चेति विग्रहान्तरपरिग्रहः । तस्य यत्खण्डनं ''प्रथमे स्वातन्त्र्यादिकमेव तत्त्वं स्यान्न तु स्वतन्त्रम् । द्वितीये तत्त्वम्पदार्थयोरीशजीवयोरभेदापत्तिः'' इत्यादिकं, तदनवकाशो रूढ्यर्थाङ्गीकारात् इत्यपि व्याचक्षते ।

**(टी.) ननु 'शुक्तिरजतादिकं कथं न तत्वं? न हि धर्मी वा रजतत्वं वा न प्रमेयम् । नापि तयोः सम्बन्धः । शुक्तिव्यक्तौ रजतत्वस्य स नास्तीति चेन्मा भूत् । न हि गृहे देवदत्तो नास्तीत्येतावता न प्रमेय इति । स्यादिदमारोपितस्यान्यत्र सत्तामभ्युपगच्छतां दूषणम् । अत्यन्तासदेव रजतं दोषवशाच्छुक्तिकायामारोप्यत इति वादे तु नायं दोषः ।**

(रा. टि.) न्यायमतावष्टम्भेन खण्डनकृदुक्तखण्डनं शङ्कित्वा सिद्धान्त-दिशोत्तरमाह ॥ **नन्वित्यादिना नायं दोष इत्यन्तेन ॥ धर्मी वेति ॥** रजतं वेत्यर्थः । पट्टणादौ रजतस्य तत्र रजतत्वस्य चानुभवात् तस्यैव सत्य-रजतस्यान्यत्रारोपादिति भावः । प्रमेयं प्रमाविषय इत्यर्थः । तादात्म्या-रोपाभिप्रायेण धर्मी वेति, संसर्गारोपाभिप्रायेण रजतत्वं वेत्युक्तम् ॥ **तयोरिति ॥** रजतरजतत्वयोस्सम्बन्धस्तादात्म्यरूपः संसर्गरूपो वा प्रमेय इत्यनुषङ्गः । सत्यरजते तस्य प्रमीयमाणत्वात् तस्यैव च शुक्तौ प्रतीत्यभ्युप-गमादिति भावः । शङ्कते ॥ **शुक्तीति ॥ स इति ॥** सम्बन्धः इत्यर्थः ॥ **नायं दोष इति ॥** आरोपितस्य प्रमेयत्वप्रसङ्गदोषो नेत्यर्थः ।

(श्री. टि.) ननु इदं रजतमिति भ्रमविषयस्य(सत्त्वे)सर्वस्य सत्वेन व्यावर्त्याभावात्प्रेतिपदं व्यर्थमिति भावेन शङ्कते ॥ **नन्विति ।** तदुपपादयति ॥ **नहीति ।** सम्बन्धः समवायरूपः । नप्रमेयमित्यनुवर्तते । आपणस्थे रजते रजतत्वादेः सत्वादिति भावः ॥ **सः** सम्बन्धः ॥ **नहि गृह इति ।** किंत्वन्यत्र सत्वात् प्रमिति विषय एवेत्यर्थः । तद्वत्प्रकृतेऽपीति भावः । भ्रमविषयस्य रजतस्यात्यन्तासत्त्वाङ्गीकारात्तद्व्यावृत्त्यै प्रेतिपदं सार्थकमित्याशयेनाह ॥

**स्यादिदमिति ।** अभ्युपगच्छतां तार्किकाणाम् । अन्यत्र विद्यमानमेवान्यत्रा-रोप्यत इति तैरङ्गीकृतत्वादिति भावः ।

**(स.टि.)** इदं रजतमित्याद्यन्यथाख्यातिविषये न्यायविदामस्माकं च समं समयं मन्वानः शङ्कते ॥ **नन्विति ॥** कथमित्याक्षेपे । कथं न तत्त्वं न कथ-मपीत्यर्थः । तत्वं भवत्येवेति यावत् । तदुपपादयति ॥ **न हीति ॥** इदं रजतमिति प्रतीतौ संसर्गारोपपक्षे धर्मी शुक्तिकादिः, प्रकारस्तु रजतत्वं, सम्बन्धः समवायः । तादात्म्यारोपपक्षे धर्मी तूक्त एव । प्रकारस्तु रजतम् तादात्म्यं सम्बन्धः । एवं च धर्मी शुक्तिशकलं न प्रमेयमिति न । किं तु प्रमेयमेवेत्यर्थः । तथा रजतत्वम् । न प्रमेयमिति न । किन्तु प्रमेयमेवेत्यर्थः । तयोः शुक्तिरजतत्वयोः । **सम्बन्धः** समवायलक्षणः । न प्रमेय इति विपरिणमितलिङ्गेन नञन्वेति । विशकलिततया तयोः सत्यत्वादिति भावः । विशकलिततया सत्यत्वेऽपि प्रकृतधर्मिधर्मसम्बन्धः सत्यो नास्तीति सिद्धान्तिन आशयमाशंक्य परिहरति ॥ **शुक्तिव्यक्ताविति ॥ सः** सम्बन्धः । इदमुपलक्षणम् । तादात्म्यारोपपक्षे रजततादात्म्ययोरन्यत्र सत्त्वमुपपाद-नीयम् । शुक्तिव्यक्तौ रजततादात्म्याभावोऽप्याशङ्कनीय इति बोध्यम् । किन्तावता नास्माकं क्षतिरित्याह ॥ **मा भूदिति ॥** रजतरजतत्वाभ्यां सम्बन्धः शुक्तौ मा भूत् । मा भूदिति च्छेदः । न माङ्योग इत्यडागम-निषेधात् । न ह्येकत्र सम्बन्धविशेषेणासतस्तदन्यत्र तेन सम्बन्धेन नास्तीति सम्भवतीत्युपपादनीयम् । एवं च शुक्तिरूप्यस्यापि तत्वतया न लक्षणे तद्वारकविषयत्वविशेषविवक्षाऽर्थवतीति शङ्काशयः । इतिशब्दः शङ्का-समाप्तौ । न वयन्तार्किकसमसमया इति नास्माकमिदं दूषणमिति भाषते ॥ **स्यादिदमिति ॥** आरोपितस्य आरोपे प्रकारीभूय भासमानस्य । अन्यत्र अधिष्ठानात् । **सत्तां** स्थितिम् । **इदं दूषणं** विषयत्वविशेषसत्वप्रकार कत्व-विवक्षानर्थक्यरूपम् । अत्यन्तासदेव सर्वदेशकालासम्बन्ध्येव रजतम् । दोषवशात् चाकचक्यादिरूपदोषवशात् । शुक्तिकायामारोप्यते सद्रजतत्वेन

ज्ञायते । इतिवादे एवं वदतामस्माकम् । अयं दोषः उक्तानर्थक्यरूपो नेत्यर्थः । अस्मन्मते शुक्तिरूप्यादेरत्यन्तासत्त्वेन तत्र ज्ञानासाधारणकारण संनिकर्षाश्रयत्वसत्त्वप्रकारकप्रमाविषयत्वयोरभावेनोक्तदोषाभावादिति भावः।

**(पां.टि.)** सिद्धान्तिनं नैयायिकं मत्वा शङ्कते **नन्विति** ॥ तथा च मितिविषयत्वमात्रमेव लक्षणम्, 'प्र'शब्दघटितमपीति । व्यावर्त्याभावात् इति भावः । **स्यादिदमिति** । तथा च नैयायिकमते उक्तरीत्या तद्वैयर्थ्य-प्रसक्तावपि नास्मत्पक्षे तत्, अत्यन्तासद्रजतव्यावृत्त्यै तस्य आवश्य-कत्वादिति भावः ।

यद्वा ननु 'तत्त्व'शब्दरूढ्या अनारोपितत्वार्थत्वाङ्गीकारेण, योगमाश्रित्य प्रसञ्जितश्रीहर्षोक्तदूषणानवकाशेऽपि, 'तत्त्व' शब्दस्य रूढिपक्षं खण्डयता तेनैवोक्तम्- ''अथोच्येत अवयवार्थचिन्तया दूषणाभिधानमिदं त्यज्यताम्, यतोऽयं 'तत्त्व'शब्दःस्वरूपमात्रवचनः''इति रूढिमाशङ्क्य, ''कथञ्च एवं सति निरासः? तथा हि- यो 'रजतम्' इति प्रत्ययः, सोऽपि स्वरूप-बुद्धिर्भवत्येव । न हि धर्मी वा रजतत्वं वा न स्वरूपम्; नापि तयोः प्रतिभासमानः सम्बन्धो न स्वरूपम् इति युक्तम् । समवायो हि तयोः सम्बन्धः प्रतिभाति । स तु स्वरूपमेव ॥ शुक्तिव्यक्तौ रजतत्वस्य स नास्ति इति चेत्; तत्र-नास्तित्वेऽपि स्वरूपतया अन्यत्र वृत्तेः । न हि गृहे देवदत्तो नास्ति इति स्वरूपं न स्यात् इति । तदेतत् अर्थतः अनूद्यः तुल्यन्यायतया प्रसक्तमिदं दूषणं नास्माकम् किन्तु वैशेषिकादीनामेव इत्याह **नन्वित्यादिना नायं दोष इत्यन्तेन** ॥ **सम्बन्ध इति** । 'न प्रमेयम्'इति वर्तते ।

यद्वा प्रमितिविषयत्वं तत्त्वलक्षणं भवत् भ्रमविषयाद्व्यावृत्तमेव तथा भवेत् । न च तत् तथा । भ्रमविषयशुक्तिरजतादावपि प्रमेयत्वसत्त्वात् । तथा च अतिव्याप्तेः नेदं लक्षणमित्याशयेन भ्रमविषयस्य सत्त्वमुपपादयति **नन्विति** ॥ 'रजतत्त्वम्'इति संसर्गारोपाभिप्रायेण । तादात्म्यारोपे 'रजतम्'

इत्यपि पठनीयम् । 'नापि तयोः सम्बन्धः' इत्युपलक्षणम्, 'पुरोवृत्ति रजत-तादात्म्यम्' इत्यपि द्रष्टव्यम् । **अत्यन्तासदिति** । तथा च प्रमितिविषयत्वस्य भ्रमविषयादधिष्ठानात् अव्यावृत्तत्वेऽपि तस्य तत्त्वतया इष्टत्वात्, तत्त्वतया अनभिमतात् भ्रमविशेषादारोपितात् व्यावृत्तत्वेन युक्तमेव अस्य तत्त्व-लक्षणत्वम् इत्याशयः । **दोषवशादिति** । करणदोषात् अर्थदोषाच्च इत्यर्थः ॥

ननु यद्धि यथा भासते तत्तथैव'इति औत्सर्गिकोऽयं न्यायः । अपवादस्तु बलवद्बाधकोपनिपातात् । तथा च- इदम्, रजतञ्च, तत्तादात्म्यञ्च त्रितयमिह अवभासते, इदञ्च रजतत्वञ्च तत्संसर्गश्चेति । तत्र रजतरजतत्वयोः 'इदं' कारास्पदस्य च बाधाभावात् संवादसद्भावाच्च न असत्त्वम् उपपद्यते । तत्तादात्म्यस्य तत्संसर्गस्य बाधात् विसंवादाच्च असत्त्वमेव । न च -'नेदं रजतम्'इति बाधबोधो रजतस्यापि असत्त्वमावेदयति इति युक्तम् । तस्य तादात्म्यमात्रगोचरत्वेन उपपत्तौ रजतगोचरत्वकल्पनायां गौरवप्रसङ्गात् । रजतस्य अत्यन्तासत्त्वे प्रतीत्यनुपपत्तिश्च तत्सामग्रीविरहात् इति । स्थिते चैवं सत्त्वे, बाधकसमये पुरोऽदर्शनात् देशान्तरे सत्त्वमास्थीयते; दोषसहकृतं चक्षुः शुक्तिमात्रसन्निकृष्टम् अविप्रकृष्टरजतात्मना तदा दर्शयति इति । ततश्च उक्तयुक्त्या प्रतीयमानरजतस्य अन्यत्रसत्त्वस्थितेः कथं 'अत्यन्तासदेव रजतं दोषवशात् शुक्तिकायामारोप्यते' इति समाधानम्? -इति चेत् । मैवम् । सत्त्वे सति रजतस्य 'असदेव रजतं प्रत्यभात्'इत्यनुभवविरोधो दुष्परिहर एव । अत्र-असत्त्वेऽपि अन्यत्र-सत्त्वात् तदुपपत्तिः इति चेत्; न, अत्र प्रतीतस्य देशान्तरे सत्त्वे प्रमाणाभावात् । न तावत् भ्रान्तिः तत्र मानम् । विरोधात् । अत्रैव सत्त्वावेदकत्वाच्च । नापि बाधः तत्र मानम् । तस्य इह रजतनिषेधात्मनः अन्यत्र-सत्त्वासत्त्वयोः औदासीन्यात् । नापि भ्रान्त्यनु-पपत्तिः तत्र मानम् । भ्रान्तेः पुरोवर्ति-इन्द्रिय-दोषादिभिर्विना अनुपपद्य-मानायाः तन्मात्राक्षेपकत्वात् ।

असत्त्वे कथं प्रतीतिः? इति चेत् सत्त्वेऽपि कथम्? न हि अन्यत्र सत्त्वम् अत्र प्रतीतेः उपकारि ॥ इन्द्रियार्थसन्निकर्षार्थं वा तदास्थेयम्, संस्कार-सिध्यर्थं वा । नाद्यः । विप्रकृष्टेन सन्निकर्षाभावात् । 'पुरोवर्तिसन्निकर्ष-मात्रेणैव भ्रान्त्युत्पादाङ्गीकारात् । नान्त्यः । संस्कारो हि रजतानुभवं आक्षिपेत् । अनुभवश्च यथार्थो रजतसत्ताम्, अत्र प्रतीतयैव अन्यत्र-सत्ता तु कुतः कल्प्या? किञ्च असतः प्रतिभासासम्भवे कथं तादात्म्यं प्रतिभासेत्, तस्य कुत्राप्यभावात् ।

नापि बाधानुपपत्तिः तत्र मानम् । बाधस्य अन्यत्र-सत्तया विना अनुपपत्त्यभावात् । अत्रैव रजतसत्तानिषेधान्यथाऽनुपपत्त्या अन्यत्र सत्त्वसिद्धिः । इति चेत् न, तस्य अत्रैव प्राप्तत्वेन उपपत्तेः ॥

तथा च प्रतीतस्य अन्यत्र-सत्तायाः विना प्रमाणमसिद्धेः नान्यत्र-सत्त्वमिति युक्तमुक्तम् ।

अत्यन्तासदेव रजतं दोषवशात् शुक्तिकायाम् आरोप्यते इति सङ्क्षेपः ॥

**(का. टि.)** रूढिपक्षे **खण्डनकारो**क्तरीत्या दूषणमाशङ्कते ॥ **नन्विति** ॥ **शुक्तिरजतं** शुक्तौ 'इदं रजतं' इति प्रतीयमानम् । तद्धि विशेष्य-विशेषणसम्बन्धरूपं प्रत्येकं प्रमेयमेवेत्याह ॥ **न हीति ॥ तयोः** शुक्ति-रजतत्वयोर्भासमानः सम्बन्धः समवायो न प्रमेय इत्यपि नेत्यर्थः । देश-कालान्तरे विद्यमानस्यैवारोप्यत्वेन भ्रमविषयस्यापि तत्वत्वात् तत्वानुभूतित्व रूपप्रमालक्षणस्य भ्रम इव प्रमेयत्वरूपतत्वलणस्य भ्रमविषयेऽतिव्याप्तिः । तस्यापि लक्ष्यत्वे प्रशब्दवैयर्थ्यम् । न च भ्रमविषयस्य प्रत्येकं प्रमेयत्वेऽपि विशिष्टस्यातथात्वात्तद्वारकतया तत्सार्थक्यमिति वाच्यम् ।

### शुक्तिरजतादौ तत्वलक्षणस्य खण्डनोक्तातिव्याप्तिशङ्का तत्परिहारश्च

विशिष्टस्य विशेष्यविशेषणसम्बन्धानतिरिक्तत्वादिति भावः । ननु शुक्ति-रजतत्वयोः प्रमेयत्वेऽपि तदुभयसम्बन्धस्य न तथात्वं शुक्तौ रजतत्व-

सम्बन्धाभावात्। तथा च तद्वारकतयैव प्रशब्दसार्थक्यमित्याशङ्क्य निषेधति ।। **शुक्तिव्यक्ताविति ।। मा भूदिति ।।** अन्यत्र सत एव रजतत्वसम्बन्धस्य शुक्तिव्यक्तौ भानेन देवदत्तादिवत्प्रमेयत्वोपपत्तेरिति भावः । समाधत्ते ।। **स्यादिदमिति ।।** इदं शुक्तिरजतादेस्तत्वत्वोपपादनम् । **सत्तां** सत्तानियमं **अभ्युपगच्छतां** तार्किकाणां मत एव दूषणं, उक्तातिव्याप्तिसम्पादकत्वात्। न तु सिद्धान्ते। आरोपितरजतादावतिव्याप्तिवारकतया प्रशब्दसार्थक्यादिति भावः ।

नन्वसतः कथं प्रतीतिः? सन्निकर्षाभावात्। न च कथमन्यत्र सतोऽपि प्रतीतिः? संयोगादिसन्निकर्षाभावादिति वाच्यम् । ज्ञानलक्षणसन्निकर्ष-स्वीकारात्। असतश्च पूर्वमनुपस्थितत्वेन तदयोगादित्याशङ्क्योक्तम्।। **दोष-वशादिति ।।** अयं भावः, अपूर्वसन्निकर्षकल्पनापेक्षया रजतसादृश्यादि-दोषसहकृतशुक्तिसन्निकर्षस्यैव रजतावभासकत्वं युक्तं न च आरोपि-तस्यान्यत्र सत्त्वमपि कल्प्यं मानाभावात्। न चासत्त्वेऽपि किं मानमिति वाच्यम्। 'असदेव रजतं प्रत्यभात्' इत्यनुभवस्यैव मानत्वात्। न च असत् इत्यस्य तत्र असत् इत्यर्थः । मानाभावात्। किं चोपस्थितमनुपस्थितं वा रजतमारोप्यम् । नाद्यः, आरोपितस्योपस्थितरजतवैलक्षण्यानुभवात् । नान्त्यः, अनुपस्थितस्य सन्निकर्षाभावेन भानायोगात्। किञ्च विनिगमका-भावेन बहूनां भ्रमविषयत्वकल्पनादसतस्तद्विषयत्वकल्पनमेव लघीयः । न चासतस्तज्ज्ञानजनकसन्निकर्षाश्रयत्वलक्षणविषयत्वायोगः । तदभावेऽ-प्युल्लेख्यत्वरूपविषयत्वोपपत्तेरिति । एवं च प्रशब्दाभावे भ्रमविषय-विशिष्टेऽप्यतिव्याप्तिर्बोध्या। सिद्धान्ते विशिष्टस्याप्यतिरिक्तत्वात्। अत एव **तत्वविवेकटीकायां 'उल्लिखितं विशिष्टमतत्वमेव''** इत्युक्तमिति दिक्।

### तत्वसामान्यलक्षणस्य खण्डनोक्तातिव्याप्तिनिरासः

**(टी.) एतेन भाविपाकरागः कुम्भः श्यामतादशायां रक्तपित्तिना रक्ततयोपलभ्यमानस्तत्वं स्यादित्यापि परास्तम्। भाविनः प्रमेयत्वेऽपि पूर्वस्यातथात्वात्। धर्मिणस्तत्वभावाङ्गीकारादिति।**

**(रा. टि.)** अन्यदपि **खण्डनोक्तं** निराह ॥ **एतेनेति** ॥ अत्यन्तासत एव भ्रान्तौ भानाभ्युपगमेनेत्यर्थः ॥ **तत्वं स्यादिति** ॥ तत्र रागसम्बन्धस्य सत्त्वादिति भावः ॥ **अतथात्वादिति** ॥ अत्यन्तासत्त्वेन तस्य प्रमाविषयत्वा भावादिति भावः । धर्मी घटोप्यप्रमेयः किं? इति । अत आह ॥ **धर्मिण इति** ॥

**(श्री. टि.)** **रक्तपित्तिर्नाम** कश्चिन्नेत्रदोषः । तेनेत्यर्थः ॥ **तत्त्वं स्यादिति** । रक्तत्वप्रकारकप्रमितिविषयत्वादित्यर्थः । कथं प्रमितिविषयत्व-मित्यतः तदुपपादनार्थमुक्तं **भाविपाकराग इति** । **पाकस्तेजस्संयोगः** । तथा च भावी यः पाकः तेन रागो रक्तरूपवानित्यर्थः । तथा च पाकेन रक्ततायाः उत्तरत्र जनिष्यमाणत्वेन सत्यत्वादिति भावः । भाविनः भाविपाकरागस्य कुम्भस्य । पूर्वस्य श्यामतादशायां रक्ततयोपलभ्यमानस्य । अतथात्वात् । प्रमित्यविषयत्वात् । कुत इत्यत आह ॥ **धर्मिणस्तथाभावादिति** । अत्राकारश्लेषःकार्यः । तथाच रक्तत्वेनाभावादित्यर्थः । तथा च श्यामता-दशायां रक्तत्वस्यात्यन्तासत्त्वान्न प्रमेयत्वमिति भावः । यद्वा श्यामतादशायां रक्तः कुम्भ इति ज्ञानस्यापि धर्म्यंशे प्रमात्वात्तदंशे प्रमाविषयत्वमस्तीत्यति-व्याप्तिरेवेति चेत्तत्राह ॥ **धर्मिण इति** । अत्र अकारप्रश्लेषो न कार्यः । तथा-भावात् । तत्वरूपतासद्भावादित्यर्थः । तथा च लक्ष्यत्वान्न तत्रातिव्याप्तिरिति भावः । अत एव क्वचिद्धर्मिणस्तत्वभावाङ्गीकारादित्यपि पाठः ।

**(स.टि.)** कालासम्बन्धिन एवारोपितत्वाङ्गीकारेण ''यद्यथाभूतं प्रतीयते तत्तथा स''दिति तत्वलक्षणान्तरं दूषयता खण्डनकारेण भावीत्यादि-नाऽऽरोप्यमाणरक्तरूपस्य यत्कालान्तरे सत्वमङ्गीकृतं तदपि निरस्त-मित्याशयेनातिदिशति । **एतेनेति** ॥ भावी योऽयं पाकस्तेजस्संयोगलक्षणः तेन रागो रक्तिमा यस्य स भाविपाकरागो घटः श्यामतादशायां रक्तपित्तिना तन्नामकनयनपाटवापनयनपटुना दोषविशेषेण रक्ततयोपलक्ष्यमानः तत्वं स्यात् । यथाभूतं प्रतीयत इत्याद्युक्तेरिति भावः । एतेनेत्युक्तं विशदयति ॥ **भाविन इति** ॥ भाविनो रक्तरूपस्य प्रमेयत्वेऽपि पूर्वस्य श्यामतादशायां

प्रतीतस्य । तथाभावाभावात् सत्यत्वाभावात् । न हि कालान्तरभाविन्याः सत्ताया इदानीमुपयोगोऽस्ति । अतिप्रसङ्गादिति भावः ।

किमत्र रागस्य तत्वताऽऽपाद्यत उताधिष्ठानस्य कुम्भस्य । आद्येऽपि किमारोपितस्योत भाविनः । नाद्यः । तस्यात्यन्तासत्त्वेन तत्वताऽयोगात् । द्वितीयस्त्वभ्युपगमवादपराहतः । तृतीयोऽपि तथैवेति भावेनाह ॥ **धर्मिण इति ॥** धर्मिणः कुम्भस्य । तत्वभावस्तत्वत्वं तस्याङ्गीकारादित्यर्थः । नयनदोषापगमानन्तरं नायं रक्त इतिवन्नायं कुम्भ इति कदापि बाधबोधोदयाभावादिति भावः । धर्मिणस्तथाभावादित्यपि पाठोऽस्ति पुस्तके क्वचित् । तथाभावात् तथात्वात् । सत्यत्वादिति तदर्थः । इतिशब्दस्तत्वलक्षणस्यातिव्याप्तिशङ्कानिरासमाप्तौ ।

**(पा. भा.)** यच्च 'यत् यथाभूतं प्रतीतम् तस्य तथाभूतस्य सत्त्वम्' इतिप्रमाणलक्षणं खण्डयता श्रीहर्षेण उक्तम् 'भाविपाकरागः कुम्भः' इत्यादि; तन्निराकरोति **एतेनेति** । परामृष्टं दर्शयति भाविन इति ॥ **पूर्वस्येति** । पूर्वप्रतीतस्य इत्यर्थः ।

किमत्र रागस्य तत्त्वभावः आपद्येत? धर्मिणः कुम्भस्य वा ? आद्येऽपि भाविनो वा? पूर्वमारोपितस्य वा? नाद्यः । तस्य इष्टत्वात् । न द्वितीयः । पूर्वारोपविषयस्य अत्यन्तासत्त्वाभ्युपगमेन तत्त्वरूपत्वापादकाभावात् ।

नान्त्यः धर्मिणः सर्वैरपि सत्त्वाङ्गीकारेण तत्त्वभावापादकाभावात् । न हि धर्मिणः सत्यतायां कस्यापि विमतिः इति भावः ॥

यत्तु केनचित् उक्तम् 'धर्मिणस्तत्त्वभावाङ्गीकारात् इति पाठो न स्वरसः इति तन्न उक्तरीत्या धर्मिणः सत्यत्वाङ्गीकारेण तत्त्वभावापादकभावार्थत्वे स्वारस्यस्य व्युत्पादितत्वात् । अस्वारस्यबीजानुपन्यासाच्च । 'धर्मिणः तत्त्वभावाङ्गीकारात्' इति तु पक्षान्तरनिरासकतया स्फुटप्रतीयमानस्य कुतः इत्याशङ्कानिवर्तकत्वेन हेतूक्तिपरतया व्याख्यानस्य अनुचितत्वाच्च ।

'तद्धर्मिणस्तत्त्वभावाङ्गीकारात्' इति पाठे धर्मिणस्तत्त्वरूपत्वाङ्गीकारात् इति अस्मद्रीत्यैव व्याख्यानोपपत्तौ आकारप्रश्लेषेण 'तदवस्थायां रक्तत्वस्य अत्यन्तासत्त्वात् न प्रमेयम्' इति व्याख्यानस्य अनुचितत्वाच्च । इत्यास्तां तावत् ॥

**(का. टि.)** **यत्तू**क्तातिव्याप्तिवारणाय 'यत् यथाभूतं प्रतीतं तत् तथाभूतं तत्वं' इति विवक्षणीयम् । न च 'इदं रजतं' इति प्रतीताविदन्त्वेन भातस्येदन्त्ववत्वादतिव्याप्तिरिति शङ्क्यम् । 'येन रूपेण यत् प्रतीयते तद्रूपविशिष्टं तत् तेन रूपेण प्रमेयं, इत्यङ्गीकारात् । शुक्तेरिदन्त्वेन प्रमेयत्वेऽपि रजतत्वेना प्रमेयत्वादित्याशङ्क्य खण्डनकृतोक्तं ''रक्तपित्तवता रक्तत्वेन प्रतीतश्यामघटोऽपि तत्वं स्यात् । तस्योत्तरकाले रक्तत्ववत्वात् । न च प्रतीतिकाले यद्यथाभूतमिति विवक्षितम् । 'भाविरागोऽयं' इति प्रतीतोप्यतत्वं स्यादिति'' तदपि निरस्तमित्याह ॥ **एतेनेति** ॥ अत्यन्तासत एवारोप्यस्याङ्गीकारेणेत्यर्थः । कथमेतावतैवोक्तनिरासः? इति । अत आह ॥ **भाविन इति** ॥ अयं भावः, किमस्मन्मते कुम्भस्य तत्वत्वमापाद्यते? किं वा रक्तत्वस्य? अन्त्येऽपि किं भाविनः? उत पूर्वप्रतीतस्य? आद्ययोरिष्टापत्तिः । अन्त्यस्य चात्यन्तासत्वादापादकाभाव इति ।

**मूलव्याख्यानपुरस्सरं स्वतन्त्रास्वतन्त्रतत्वलक्षणकथनम्**

**(टी.) तद्द्विविधं स्वतन्त्रमस्वतन्त्रं चेति, इति इतिशब्दाध्याहारेण योज्यं । अन्यथा स्वतन्त्रमस्वतन्त्रं च तत्वं प्रत्येकं द्विविधमिति प्रतीतिः स्यात् । स्वरूपप्रमितिप्रवृत्तिलक्षणसत्तात्रैविध्ये परानपेक्षं स्वतन्त्रं । परापेक्षमस्वतन्त्रम् ।**

**(रा.टि.)** केचित्स्वरूपमेव धर्मिणस्सत्तामाहुः । अन्ये प्रमितिम् । अपरे प्रवृत्तिम् । अतो मतत्रयानुरोधेनाह ॥ **स्वरूपेत्यादि** ॥

**(श्री.टि.)** इतिशब्दाध्याहारेण कुतो योज्यमित्यत आह ॥ **अन्यथेति** ॥ **द्विविधमिति** । प्रकारद्वयोपेतमित्यर्थः । तदधीनाश्च सर्वदा ।

**सत्ताप्रधानपुरुषशक्तीनां च प्रतीतयः ।**
**प्रवृत्तयश्च ताः सर्वा नित्यं नित्यात्मना यतः ॥**

इत्यनुव्याख्यानं मनसि निधाय स्वतन्त्रास्वतन्त्रतत्वे क्रमेण लक्षयति ॥ **स्वरूपप्रमितीत्यादिना ।** अत्र स्वरूपलक्षणसत्तायां स्वप्रमितिलक्षणसत्तायां स्वप्रवृत्तिलक्षणसत्तायां च परानपेक्षमिति लक्षणत्रयं विवक्षितम् । अतो न वैयर्थ्यशङ्का । केचिन्मन्यन्ते स्वरूपमेव वस्तुनस्सत्त्वमिति । अपरेतु प्रमाण-योग्यत्वमिति । अन्ये पुनरर्थक्रियाकारित्वमिति । तदनुसारेण स्वरूपप्रमिति-प्रवृत्तीनां सत्वव्यवहार इति ध्येयम् ॥ **परापेक्षमिति ।** सत्तात्रैविध्य इति वर्तते ॥

(स.टि.) **तत्** तत्वम् । द्विविधं द्वे विधे स्वतन्त्रत्वास्वतन्त्रत्व-रूपप्रकारद्वयं यस्य तद्विविधम् । इतिशब्दानध्याहारे बाधकमुद्बोधयति ॥ **अन्यथेति ॥ अन्यथा** इतिशब्दानध्याहारेण यथाश्रुतयोजनायाम् । न चेष्टापत्तिरिति वाच्यम् । स्वतन्त्रतत्वद्वैविध्यस्य प्रमाणबाधितत्वात् । अस्वतन्त्रतत्वस्य स्वतोऽनेकत्वेऽपि ''द्विधेतर''दिति तदवान्तरविभागस्य वक्ष्यमाणत्वेन पौनरुक्त्यापत्तेश्च । स्वतन्त्रमस्वतन्त्रमिति नामोच्चारणे-नैवानयोर्लक्षणमपि सूचितमित्याह ॥ **स्वरूपेत्यादिना ॥ स्वरूपप्रमिति-प्रवृत्तिलक्षणसत्तात्रैविध्ये परानपेक्षं** परानधीनं स्वतन्त्रमित्यर्थः । **प्रवृत्तिस्त**-त्तत्कार्यानुकूलो व्यापारः । अत्र परानधीनसत्ताकत्वमेव स्वतन्त्रलक्षणम् । तद्घटकीभूतसत्ताविवरणं स्वरूपेत्यादिना कृतम् । न तु लक्षणघटकम् । येन स्वरूपसत्तायां परानपेक्षं स्वतन्त्रमित्येतावतैवेष्टसिद्धेः शिष्टं व्यर्थं स्यादिति भावः । यत्स्वरूपसत्तादौ स्वाधीनं न तु परापेक्षमिति तत्वविवेक-टीकायामादिपदस्य लक्षणत्रयसूचकत्वाल्लक्षणत्रयं यथा गृह्यते तथाऽत्रापि वैभवादनेकलक्षणप्रदर्शनार्थं वा ''स्वरूपे''त्याद्युक्तमिति ज्ञेयम् । परानपेक्ष मित्यस्य परानधीनत्वार्थकत्वकरणेन स्वतन्त्रतत्वलक्षणस्य परापेक्षाशून्येषु नातिव्याप्तिः । एतेनैव चास्वतन्त्रलक्षणेऽपि परापेक्षारहितेऽभिहितस्थले नाव्याप्तिरित्यपि बोध्यम् ।

स्वरूपादीनां सत्वव्यवहारस्तु ''अन्यत्राभावाच्च न तृणादिव''दिति समयपादीय

**शक्तीस्ताः प्रेरयत्यंजस्तदधीनाश्च सर्वदा ।**
**सत्ताप्रधानपुरुषशक्तीनां च प्रतीतयः ।**
**प्रवृत्तयश्च ताः सर्वा नित्यं नित्यात्मना यतः ॥**

इत्यनुव्याख्यानव्याख्यानसुधायां ''केचिन्मन्यन्ते वस्तुनः स्वरूपमेव सत्वमिति । अपरे तु प्रमाणयोग्यत्वमिति । अन्ये पुनरर्थक्रियाकारित्वमिति । तदिदं त्रयमपि प्रकृत्यादीनां भगवदधीन''मित्यनेन ग्रन्थेन स्वरूपादीनां सत्वव्यवहारादत्रापि सम्भवतीति बोध्यम् ।

अस्वतन्त्रलक्षणे परपदस्थाने ईशपदप्रक्षेपेऽतिव्याप्तिरीशे । देशकालादेर्देशादिसम्बन्धित्ववदीशस्यापीशाधीनसत्ताकत्वस्य ''स्वतन्त्रः स्वेच्छाधीनप्रवृत्ति''रिति तत्वोद्द्योतटीकादिषु तत्र तत्रोक्तत्वात् । अतः परेत्युक्तम् । एवं चान्यपदपर्यायपरपदेन यस्मिंल्लक्षणमुपपाद्यते तदन्यस्यैव ग्रहणान्नातिव्याप्तिरिति भावः ।

**(पां.टि.)** एवमाक्षेपात् कारिकाखण्डाद्वा लब्धतत्त्वसामान्यलक्षणं व्याख्याय विभागोद्देशपरं वाक्यं व्याचष्टे **द्विविधमिति** । इतिशब्दानध्याहारे बाधकमाह अन्यथेति ॥ ननु स्वतन्त्रपरतन्त्रयोर्लक्षणानभिधानात् न्यूनत्वमित्यतः स्वतन्त्रमित्याद्यनुवादेनैव लक्षणस्य सूचितत्वाददोषः इत्याशयेन संज्ञानिरुक्त्या लब्धं लक्षणमाह **स्वरूपेति ॥ सत्तात्रैविध्य इति** । सत्तादित्रैविध्ये इत्यर्थः ॥ अत एव तत्त्वविवेकटीकायां यत् स्वसत्तादौ इति आदिपद प्रयोगः इति ध्येयम् । अत्र स्वसत्तायां स्वाधीनम्, स्वप्रवृत्तौ स्वाधीनम् इत्याद्यनेकलक्षणसूचने तात्पर्यात् व्यावर्त्याप्रसिध्या विशेषणवैयर्थ्यशङ्कानवकाशः । वस्तुतः अत्र आदिपदाभावेऽपि न दोषः केचिन्मन्यन्ते स्वरूपमेव वस्तुनः सत्त्वमिति; अपरे तु पुनः प्रमाणयोग्यत्वम् । अन्ये पुनः

अर्थक्रियाकारित्वमिति । तदिदं त्रयमपि प्रकृत्यादीनां भगवदधीनम् ॥ इति पातञ्जलाधिकरणीय 'तदधीनाश्च सर्वदा' इत्याद्यनुव्याख्यानसुधानुसारेण स्वरूपादीनां सत्त्वव्यवहारोपपत्तेः इति ध्येयम् । अत्र स्वतन्त्रपदस्य स्वाधीनमिति पदार्थमुक्त्वा तस्य परतन्त्रलक्ष्म्यादावतिव्याप्तत्वात् परानपेक्षमिति तात्पर्योक्तिः, विशेषे विवदमानं प्रति परानधीनत्वमेव लक्षणमस्तु इति भावेन न तु परानधीनत्वम् एव स्वतन्त्रशब्दमुख्यार्थः । तथा सति स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः इत्यनुव्याख्यानेन स्वतन्त्रः स्वेच्छाधीनप्रवृत्तिः इति तत्त्वोद्योतटीकयाबाधकाभावेन उपचाराश्रयणस्य अयुक्तत्वादेव स्वतन्त्रः इत्यस्य 'परतन्त्रताव्यावृत्तिः अर्थः इत्ययुक्तम् इति देशः सर्वत्र पुरुषः स्वतन्त्रः कालनित्यता, इत्येतद्व्याख्यानटीकया च विरोधापातात् ।

न च स्वस्य स्वाधीनत्वासम्भवेन निरुक्तिलभ्यस्य लक्षणत्वानुपपत्तेः अमुख्याश्रयणमिति वाच्यम् । देशस्य देशसम्बन्धित्ववत् कालस्य कालसम्बन्धित्ववच्च विशेषबलेन ईश्वरस्यापि ईश्वराधीनत्वसम्भवेन बाधकाभावादिति भावः ।

अत्र परानधीनसत्ताकत्वतदधीनसत्ताकत्वे एव स्वतन्त्रास्वतन्त्रलक्षणतया अभिमते, इति अपेक्षायाश्चेतनधर्मत्वेन यथाश्रुते स्वतन्त्रलक्षणे **अचेतने** अतिव्याप्तिः, अस्वतन्त्रलक्षणे च अव्याप्तिः, इति चोद्यानवकाश । अधीनताया एव अपेक्षापदेन विवक्षणात् । अत एव परानपेक्षतदपेक्षत्वयोरेव लक्षणत्वसम्भवात् शेषवैयर्थ्यम् इति परास्तम् यथोक्तविशेषणविशेष्यभावे वैयर्थ्याभावात् । न च परपदवैयर्थ्यम् । भगवत्स्वरूपभूताया अपि सत्तायाः विशेषबलेन स्वाधीनतया असम्भवादिप्रसङ्गादिति ध्येयम् ॥

**(का. टि.)** इदानीं मूलं योजयति ॥ **तदिति** ॥ **तत्** तत्वं । **अन्यथा** इतिशब्दानध्याहारे । स्वतन्त्रद्वैविध्यं च प्रमाणबाधितमिति भावः ।

स्वतन्त्रास्वतन्त्रयोरपि उद्देशलब्धं लक्षणमाह ॥ **स्वरूपेति ॥** स्वरूपमनागन्तुकं रूपं प्रमितिः प्रमायोग्यत्वं अबाधितधर्म इति यावत् । प्रवृत्तिः कार्यजननशक्तिः । एतल्लक्षणत्रिविधसत्तासु स्वाधीनत्वं स्वतन्त्रत्वमित्युक्तौ रमादिष्वतिव्याप्तिः । अतः स्वमात्राधीनत्वं विवक्षणीयम् । तच्च न स्वान्यानधीनत्वे सति स्वाधीनत्वं । विशेष्यवैयर्थ्यादिति भावेनोक्तं ॥ **परानपेक्षमिति ॥** स्वस्य स्वाधीनत्वादसम्भववारणाय परशब्दः । न च स्वरूपेत्यादिकं व्यर्थम् । परानधीनस्वरूपत्वादेरेव विवक्षितत्वेन यथासन्निवेशेनावैयर्थ्यात् । न च प्रमित्यादिकं व्यर्थम् । परानधीनप्रमितित्वादेः पृथग्लक्षणत्वात् । सत्तात्रैविध्योक्तिस्तु स्वरूपादित्रयस्य सत्ताव्यवहारविषयत्वज्ञापनार्था । न चैवं सामान्यतः परानधीनसत्ताकत्वमेव लक्षणमस्त्विति वाच्यम् । एकमते स्वरूपादित्रये सत्ताव्यवहाराभावेन विशेषलक्षण एव पर्यवसानात् । यथोक्तं **सुधायाम् ।** केचिन्मन्यन्ते, वस्तुनः स्वरूपमेव सत्वमिति । अपरे प्रमाणयोग्यत्वमिति । अन्ये तु पुनरर्थक्रियाकारित्वमिति । तदिदं त्रयं प्रकृत्यादीनां भगवदधीनमिति । अत एव यत्स्वसत्तादौ परानपेक्षमिति तत्वविवेकटीकायामादिपदेन प्रवृत्त्यादिकमुपात्तम् । वस्तुतः परानधीनत्वमेव स्वतन्त्रत्वम् । तद्वैपरीत्यमस्वतन्त्रत्वम् । स्वरूपेत्यादिकं तु तदुपपादनमित्यवधेयम् ।

केचित्तु स्वनिष्पत्तिस्वप्रमितिस्वप्रवृत्त्यन्यतमेषु परानपेक्षं स्वतन्त्रम् । तद्विपरीतमस्वतन्त्रम् । स्वप्रमितिपदेन च स्ववृत्तियावद्धर्मप्रकारकयथार्थज्ञानं विवक्षितम् । अतः स्वतन्त्रस्य पराधीनप्रमितिविषयत्वेऽपि न दोष इति व्याचक्षते ।

यत् स्वसत्तादौ स्वाधीनं, न तु परापेक्षं तत् स्वतन्त्रं इति तत्वविवेकटीकायां यथाश्रुतं स्वाधीनत्वमपि तल्लक्षणम् । विशेषबलात्स्वस्य स्वाधीनता निर्वाहात् । विशेषे विप्रतिपद्यमानं प्रति परानपेक्षत्वं विवक्षितमिति व्यासतीर्थचरणैरुक्तम् । तत्राद्ये रमादावतिव्याप्तिवारणाय मुख्यतः स्वाधीनत्वं विवक्षणीयं । तच्च परानधीनस्वनिष्ठनियामकताकत्वम् । रमादीनां च

स्वनिष्ठनियामकत्वस्य पराधीनत्वान्नातिव्याप्तिः । द्वितीये च परशब्दः स्पष्टार्थ एवेत्याशयः ।

## सामान्यतस्तत्वसद्भावसमर्थनम्

**(टी.) तदुपपादनायोक्तं इष्यते इति । प्रामाणिकैरिति शेषः । तथा हि, यदि तत्वमेव नास्तीति ब्रूयात्तदा प्रत्यक्षादिविरोधः । सा भ्रान्तिरिति चेन्न । बाधकाभावात् । न च निरधिष्ठाना भ्रान्तिरस्ति । नापि निरवधिको बाधः । 'नास्त्येव तत्वं' इत्यस्यार्थस्य प्रमितत्वाप्रमितत्वयोर्व्याघातश्च ।**

**(रा.टि.) ॥ तदुपपादनायेति ॥** स्वातन्त्र्यपारतन्त्र्यभेदेन तत्वद्वैविध्योपपादनायेत्यर्थः ॥ **सा भ्रान्तिरिति** ॥ विधेयापेक्षया स्त्रीलिङ्गोक्तिः । घटस्सन् पटस्सन् इत्यादिप्रत्यक्षादिरित्यर्थः । भ्रान्तिबाधावङ्गीकुर्वाणेनापि आरोपाधिष्ठानत्वेन इदमेवं नेति बाधावधित्वेन वा शुक्तिरजतादाविदं रजतं नेदं रजतमित्यादाविव किञ्चित्तत्वमभ्युपेयम् । अन्यथा तावुभौ न स्याता-मिति भावेनाह ॥ **न चेति** ॥ **इत्यस्यार्थस्येति** ॥ तत्वाभावरूपार्थस्य प्रमितत्वे स एव तत्त्वमिति तत्वाभावोक्तिर्व्याहता । अप्रमितत्वे अभाव-रूपतत्वमेव नास्तीति तत्वाभावोक्तिर्व्याहतेत्यर्थः ।

**(श्री.टि.) तदुपपादनायेति** । तत्वं स्वतन्त्रास्वतन्त्रभेदेन द्विविध-मित्युक्तस्य सर्वस्योपपादनायेत्यर्थः । इदं सर्वं प्रामाणिकैरङ्गीक्रियत इत्युक्त्या एवं ये नाङ्गीकुर्वन्ति तेषामप्रामाणिकत्वं च सूचितम् । तदुपपादयति ॥ **तथा हीत्यादिना** । तथाच इष्यत इत्यनेन परीक्षापि कृतेत्यवगन्तव्यम् । एवमुत्तर-त्रापि द्रष्टव्यम् । येन स्वतन्त्रमस्वतन्त्रं चेति तत्वद्वैविध्यं नाङ्गीक्रियते स प्रष्टव्यः । किं तत्वस्यैवाभावात्तदनङ्गीकारः । भावेऽपि तस्यैकत्वेनानेक-प्रकारत्वाभावाद्द्वैविध्यं नाङ्गीक्रियते । अथ तत्वस्यैवानेकप्रकारत्वेऽपि अनेक-प्रकारकस्य सर्वस्यापि स्वतन्त्रत्वेन वाऽस्वतन्त्रत्वेन वा सर्वस्य एकविधत्वेन द्वैविध्यासम्भवाद्वा प्रकारान्तरेण द्वैविध्यसम्भवाद्वेति विकल्पचतुष्टयं मनसि

निधायाद्यमनूद्य दूषयति ॥ **यदि तत्वमेवेति** ॥ **प्रत्यक्षादीति** । घटपट-परात्मेश्वरधर्मादितत्वानामस्तितायाः प्रत्यक्षचेष्टाद्यनुमानागमसिद्धत्वेन तद-नङ्गीकारे तद्विरोधःस्यादित्यर्थः ॥ **सेतीति** । सन् घट इत्यादि(घटादि) तत्वास्तितावगाहिनी प्रत्यक्षादिप्रतीतिरित्यर्थः ।

अस्तु वाऽयं घट इत्यादिप्रतीतिभ्रान्तिस्तथापि तदन्यथानुपपत्त्यैव तत्व-सिद्धिरित्याह ॥ **न च निरधिष्ठाना भ्रान्तिरिति** । सर्वस्या अपि प्रतीते-र्भ्रान्तित्वमभ्युपगच्छतापि भ्रान्तेः किञ्चिदधिष्ठानमङ्गीकार्यम् । नहीत्थमेव क्वचिद्भ्रमः । किंत्विदमित्थमिति । तथा च यदेव तदधिष्ठानं तदेकं तत्व-मङ्गीकार्यमिति भावः । ननु मास्तु भ्रान्तेर्निरधिष्ठानत्वं भ्रमे यावत्प्रतीयते तावत्सर्वमप्यसदेवेति स्वीकारात् अतो नेदं दूषणमित्यात आह ॥ **नापि निरवधिको बाध इति** । अवधिः आश्रयः भ्रमप्रतीतिनिषेधस्य तावत्पर्यन्त-त्वात् । सर्वप्रतीतेर्भ्रान्तित्वं बाधैकगम्यम् । बाधश्च इदमित्थं न भवतीति वा अत्रेदं नास्तीति वा किञ्चिदवधिको द्रष्टव्यः । इत्थं न भवति इदं नास्तीत्येव बा(धकाभा)धाभावात् । बाधेन च यदवधित्वेन विषयीक्रियते तदेव तत्व-मङ्गीकार्यम् । तस्यापि भ्रान्तिसिद्धत्वे तत्रापि बाधो वाच्यः । सोऽपि सावधिक इत्यनवस्थेत्यर्थः । अन्ये तु घटादिप्रतीतिभ्रमत्वस्य बाधैकगम्यतया बाधो वाच्यः । ततश्च तद्विषयस्यैव तत्वता स्यात् । न च बाधोऽपि भ्रम एव तस्यापि बाधे तद्विषयस्य तत्वतापत्त्या तस्यापि भ्रम(त्वेनअ)त्वे अनवस्था-प्रसङ्गात् । इष्टापत्तिरिति चेत्तत्राह ॥ **नापि निरवधिको बाध इति** । निरवधिको निरवसानः । अप्रामाणिकत्वात् । प्रामाणिकत्वे च तदेवतत्वं-स्यादिति भाव इत्याहुः । तत्वमेव नास्तीत्यङ्गीकारे दूषणान्तरमाह ॥ **नास्त्येवेति** । तत्वं नास्तीत्यस्यार्थस्य प्रमितत्वे तत्वाभावरूपार्थस्यैव तत्वतापत्त्या तत्वं नास्तीत्यनेन व्याघातः । तत्वं नास्तीत्यस्यार्थस्याप्रमितत्वे तत्वास्तित्वस्यैव प्राप्त्या तत्वं नास्तीत्यनेन व्याघात इत्यर्थः ।

**(स. टि.)** इष्यत इत्यंशस्य वैयर्थ्यं परिहरन्नवतारयति ॥ **तदिति** ॥ तस्य उक्ततत्वविभागस्य उपपादनं समर्थनं तस्मा इत्यर्थः । नन्वङ्गीक्रियत

इत्येतत्समानार्थकैष्यत इत्यस्य कथमुपपादकत्वमित्यतः अपेक्षिताध्याहारेण तं प्रकारं दर्शयति ॥ **प्रामाणिकैरित्यादिना** ॥ प्रमाणानि विदन्त्यधीयते वा प्रामाणिकाः । तदधीते तद्वेदेति चोक्थादिगणे संनिवेशात् ठकि ''ठस्येक'' इतीके प्रामाणिकेति भवति । स्वतन्त्रमस्वतन्त्रं चेति तत्वं द्विविधमिति प्रामाणिकैरिष्यत इत्यनेन सूचितामितरेषामप्रामाणिकतां लेशतः स्वयमाह ॥ **यदीति** ॥ तत्वमेव नास्ति दूरे तद्विभाग इति यदि कश्चिद्वदेदित्यर्थः । प्रत्यक्षादिविरोधः घटाद्यपरोक्षप्रतीतिविरोधः । आदिपदेनानुमानपरिग्रहः । **सेति** ॥ ''शैत्यं हि यत्सा प्रकृतिर्जलस्ये''त्यादिकेष्विव विधेयापेक्षया स्त्रीलिङ्गप्रयोगः ॥ **बाधकाभावादिति** ॥ नेदं रजतमितिवन्नायं घट इत्यादि बाधकाभावादित्यर्थः । न चासंजातबाधभ्रमे ''यो यो भ्रमः स बाधसहित'' इति नियमस्य व्यापकीभूतबाधसाहित्याभावेन व्यभिचार इति वाच्यम् । तदतिरिक्तभ्रमस्यैव नियमान्तर्गतत्वान्न दोषः । ननु भवद्भिर्यत्र नियमः सङ्कोच्यते स एव च घटादिविषयो भ्रमः परेणाङ्गीक्रियत इति व्यर्थमुक्त-नियमरक्षणमिति चेत् मा हि भूदुक्तविधया परपराकृतिः । बाधयोग्यतावत्त्व-स्यैव बाधसाहित्यार्थतया विवक्षायां तु भवत्येवायं नियमः समीचीन इत्यनेनैव सा सेत्स्यतीति न दोषः ।

अभ्युपगतेऽपि भ्रमत्वे ''अशितेऽपि लशुने न शान्तो व्याधि''रितिवन्न तत्वं तत्वतोऽनङ्गीकारार्हमित्याह ॥ **न चेति** ॥ प्रतीतिसामान्यस्य भ्रमत्वमङ्गीकुर्वता ''अधिष्ठानं च सदृश''मित्याद्युक्तेर्यदधिष्ठानतयोच्यते तदेव तत्वमापततीति भावः । केशोंड्रकादिभ्रमस्तु तेजोऽधिष्ठान इति नातिप्रसङ्गः । प्रकारान्तरेणापि तदङ्गीकारयति ॥ **नापीति** ॥

**रूपान्तरमसक्तं हि सोऽवधिर्यत्र जायते ।**
**तं विना नेत्थमित्येव न कचिद्बाध ईक्ष्यते** ॥ इत्यादेः ।

अत्रेदं नास्तीति वा इदं तन्नेति वा यत्किञ्चिदवधिको बाधो दृष्टः न तु नेदमिति वा नेत्थमिति वा । तथा च अत्रेतीदमिति च यदवधितयाऽनुवर्तते

तदेव तत्वतयाऽऽपतितमिति भावः । तत्वमेव नास्तीति विप्रतिषिद्धं चैतदिति भावेनाह ।। नास्त्येवेति ।। नास्त्येव तत्वमित्यस्यार्थस्य प्रमितत्वे-प्रमिति विषयस्यैव तत्वतया पुनश्च तत्वं नास्तीति व्याहतं स्यात् । यदि च तत्वं नास्तीत्येतदप्रमितं तर्हि तत्वमस्तीत्यस्य प्रमितत्वाद्व्याहतिः । परस्पर-विरुद्धयोरन्यतरनिषेधस्यान्यतर विधिनान्तरीयकत्वादिति भावः ।

**(पां. टि.) तदुपपादनायेति ।** तत्त्वद्वैविध्योपपादनायेत्यर्थः । 'इष्यते' इति स्वोक्तविभागस्य प्रामाणिकत्वसूचनात् परीक्षाऽपि अर्थात् कृता इति न न्यूनत्वमित्याह **प्रामाणिकैरिति शेष** इति । स्वातन्त्र्यपारतन्त्र्याभ्यां द्वैविध्य-मनङ्गीकुर्वन् प्रष्टव्यः किं शून्यवादिरीत्या तत्त्वस्यैव अभावात् तदनङ्गीकारः? भावेऽपि विज्ञानवादिरीत्या अनेकत्वाभावात् वा ? अनेकत्वेऽपि सर्वस्य अस्वतन्त्रत्वादिना ऐकविध्येन द्वैविध्यासम्भवात् वा ? प्रकारान्तरेणापि द्वैविध्यसम्भवात् वा । तत्र आद्यं दूषयति **यदीति ।** यदि तत्त्वमेव न स्यात् तदा घटः इत्यादिप्रत्यक्षप्रमितिविरोधः । विषयं विना प्रमित्यनुपपत्तेः इत्यर्थः। आदिपदेन अनुमानादिपरिग्रहः । यद्वा अयं घटः तत्त्वम् इत्यादि-प्रत्यक्षविरोधः इत्यर्थः । **बाधकाभावादिति ।** अनुमानादेः प्रत्यक्षमूलकत्वेन तद्बाधकत्वासम्भवात् इति भावः ।

अस्तु भ्रान्तिः तथापि तत्त्वरूपाभावे न सम्भवति, भ्रान्तेः अधिष्ठान-सापेक्षत्वात् । न हि रजतम् इत्येव भ्रमः किन्तु इदं रजतम् इति । तथा च तत्त्वस्यैव अभावे सैव न स्यात् इत्याह **न चेति ।** नापि इत्यर्थः । केशोण्ड्रकादिभ्रमस्यापि तेजोधिष्ठानात् न निरधिष्ठानत्वम् । अत एव अन्धकारे न तद्भ्रमः इति बोध्यम् ।

अस्तु वा बाधः सोऽपि तत्त्वभावेनापद्यते, तस्य अवधिसापेक्षत्वात् । न हि 'किमपि न' इत्येव बाधः किन्तु 'इदं रजतं न'इत्येव ।। तथा च तत्त्वरूपाभावेन अवधेरेवाभावात् न बाधः सम्भवति ।। इत्याह **नापीति ।** किञ्च नास्त्येव तत्त्वमिति ज्ञानस्य प्रमात्वे एतद्विषयस्य तत्त्वाभावस्य

तत्त्वस्य सिद्धिः । अप्रमात्वे तु एतद्विषयस्य तत्त्वाभावस्य बाधेन तत्त्वसिद्धिः इति तन्निषेधे व्याहृतिः इत्याह **नास्त्येवेति ।**

**(का. टि.)** न्यूनाताभङ्गाय परीक्षार्थत्वेन **इष्यते** इति मूलमवतारयति ॥ **तदुपपादनायेति ॥** उक्तार्थस्योपपन्नत्वज्ञापनायेत्यर्थः । **इष्यते अङ्गीक्रियते प्रामाणिकैरि**त्यन्येषामप्रामाणिकत्वलाभात्परपक्ष प्रतिक्षेपपूर्वकस्वपक्ष-स्थापनरूपपरीक्षालाभ इति भावः । तत्प्रकारं दर्शयति ॥ **तथा हीत्यादिना ॥** उक्तार्थस्यानुपपन्नत्वं किं तत्वस्यैवाभावात्? भावे वा तत्वस्यैकत्वात्? अनेकत्वेऽपि वा सर्वस्वातन्त्र्यात्? किं वा सर्वास्वातन्त्र्यात्? तत्राद्यं दूषयति ॥ **यदीति ॥ प्रत्यक्षादिविरोधः** घटादिविषयकप्रत्यक्षादिप्रतीतेः प्रमात्वानु-पपत्तिः । विषयाभावादिति भावः । अत्रेष्टापत्तिमाशङ्कते ॥ **भ्रान्तिरिति ॥ बाधकाभावादिति ॥** प्रमात्वबाधकस्य विषयासत्वप्रत्ययस्याभावादित्यर्थः । तथा च भ्रान्तित्वे साधकाभाव इति भावः ।

ननु मा भूदस्मदादीनां बाधकप्रत्ययः । बुद्धादीनां त्वस्त्येव । स एव भ्रान्तित्वसाधको भविष्यतीत्याशङ्क्य भ्रान्तिबाधकयोर्बाधकं चाह ॥ **न चेति ॥** यत्रारोपस्तदधिष्ठानाम् । यत्र बाधः सोऽवधिः । तदविनाभूतौ भ्रान्तिबाधौ । 'इत्थं' इत्येव भ्रान्तेः 'नेत्थं' इत्येव बाधस्य चादर्शनात् । किन्तु? 'इदमित्थं' 'नेदमित्थं' इत्येवेत्यधिष्ठानावधिभूतत्वाभावे भ्रान्ति-बाधानुपपत्तिरिति भावः । न चैवं 'नरशृङ्गमस्ति' 'नास्ति' इत्यादि भ्रमबाधानुपपत्तिः । अपरोक्षभ्रमस्थल एव तथाङ्गीकारात् । एवं च विश्व-विषयकभ्रान्तिबाधाङ्गीकर्त्रापि अधिष्ठानावधिभूतत्वमङ्गीकार्यमेवेति हृदयं । ननु 'नास्त्येव तत्वं' इति निरवधिकबाधो बुद्धैरङ्गीक्रियते । अन्यथा सर्वासत्वप्रतिपादनानुपपत्तेः । ततश्च घटादिप्रत्ययस्य निरधिष्ठानकस्यैव भ्रमत्वमपीत्याशङ्क्याह ॥ **नास्त्येवेति ॥** आद्य तादृशबाधविषयस्य तत्वाभावस्य, द्वितीये तत्प्रतियोगिनो घटादेरेव तत्वत्वसिध्द्यापत्त्या तत्व-सामान्यनिषेधे व्याघात इत्यर्थः । भावाभावयोरेकस्याप्रमितत्वे अन्यस्य

प्रमितत्वं न्यायप्राप्तमिति भावः । न च सर्वासत्त्ववादिभिस्तादृशन्याया-नभ्युपगमान्न दोष इति वाच्यं तत्वसामान्यनिषेधे प्रमाणोक्तौ तद्विषयतत्व-सिद्धेरावश्यकत्वात् । तदनुक्तौ वादित्वाभावेन जडवदुपेक्ष्यत्वात् सर्वा-सत्त्वादि प्रतिपादनं त्वाग्रहणादिमूलमेवेति ध्येयम् ।

### तत्वैकत्ववादनिरासः

**(टी.) यदि चेकमेव तत्वं तदा भेदोपलम्भविरोधः? तद्भ्रान्तितायां च बाधकं वाच्यं । तच्चान्यत्र निरस्तं ।**

### सर्वस्वातन्त्र्यवादनिरासः

**यदि वा सर्वमेव स्वतन्त्रं स्यात्तदा पारतन्त्र्यादिप्रतीतिविरोधः । नित्यसुखादिप्रसङ्गश्च ।**

### सर्वपारतन्त्र्यवादनिरासः

**यदि वा परतन्त्रमेव तत्वं भवेत्तदा अनवस्थितेरसम्भवाच्च न कस्यापि सत्तादिकं स्यात् । आगमविरोधश्च ।**

(रा.टि.) नन्वस्तु नाम तत्वम् । तच्च ब्रह्मरूपं शून्यरूपं वा स्वरसभङ्गुरं विज्ञानरूपं वा एकमेव । न द्विविधमिति । अत आह ।। **यदि चेति** ।। **भेदोपलम्भेति** ।। 'नाहं चैत्रः, अपि तु मैत्रः' इत्यादिरूपेण जीवा-नामन्योन्यं जडाच्च, जडानामन्योन्यं च भेदोपलम्भविरोध इत्यर्थः । **तच्चान्यत्रेति** । दृश्यत्वाद्यनुमानादिरूपबाधकम् । ''वैधर्म्याच्च न स्वप्नादिवत्'' इत्यादिसूत्रभाष्यादौ तत्वनिर्णयादिप्रकरणेषु च निरस्त-मित्यर्थः ।। **पारतन्त्र्यादीति** ।। आरब्धकार्यप्रतिहत्या अनभिलषितानिष्ट-प्राप्त्या च पारतन्त्र्यानुभवात् । आदिपदेन हिताकरणाहितकरणकृत्स्न-प्रसक्त्यादिग्रहः ।। **नित्यसुखादीति** ।।

**यदि नाम न तस्य वशे सकलं कथमेव तु नित्यसुखं न भवेत् ।**

इत्युक्तेरिति भावः । आदिपदेन दुःखनिवृत्तिः ॥ **अनवस्थितेरिति ॥** परादीनत्वाविशेषात् अस्यायं नियामकः तस्यान्यः तस्याप्यपरः इत्यपर्यवसितानन्तव्यक्तिपरंपरापत्त्या पूर्वपूर्वनियमनासिध्योत्तरोत्तरनियमनासिद्धेर्मूलक्षयकरानवस्थादोषादित्यर्थः । अभ्युपेत्येदमुदितम् । वस्तुतस्तु परतन्त्रत्वाविशेषादन्येनान्यस्य नियमनमेवासम्भवीत्याह ॥ **असम्भवादिति ॥** एकेनान्यस्य नियमनासम्भवान्न कस्यापि सत्ता प्रतीतिः प्रवृत्तिश्च स्यादित्यर्थः । तदाह सूत्रकारः **'अनवस्थितेरसम्भवाच्च नेतरः'** इति ॥ **आगमेति ॥** 'पृथिवीमन्तरो यमयति' 'आत्मानमन्तरो यमयति' इत्याद्यागमविरोध इत्यर्थः ।

**सर्वमसौ तु हरिर्यमयेदिति वैदिकमस्ति वचः ।**

इत्युक्तेरिति भावः ।

**(श्री. टि.)** भावेऽपि तस्यैकत्वेनानेक प्रकारत्वाभावाद्वैविध्यं नाङ्गीक्रियत इति द्वितीयमनूद्य दूषयति ॥ **यदि चेति ॥ भेदोपलम्भेति ।** घटपटादिभेदावगाहिप्रत्यक्षोपलम्भविरोध इत्यर्थः । भेदोपलम्भस्य भ्रान्तित्वमाशङ्क्य निराकरोति ॥ **तद्भ्रान्तितायां चेति ।** तस्य भेदोपलम्भस्य भ्रान्तितायामित्यर्थः ॥ **वाच्यमिति ।** न च तदस्तीति वाक्यशेषः । ननु कथं नास्तिभेदः । भेदः किं भेदिभ्यां भिन्नो वाऽभिन्नो वा भिन्नाऽभिन्नोवा । नाद्यः । सोऽपि भेदो भिन्न इत्यनवस्थानात् । न द्वितीयः । तत्तच्छब्दयोः पर्यायत्वापत्त्या घटोऽभिन्न इति सहप्रयोगाभावापत्तेः । न तृतीयः विरोधात् । अतो बाधकात् भेदः आपातरमणीयाविद्याविलसित एवेति तत्प्रतीतिर्भ्रमरूपैवेत्यत आह ॥ **तच्चेति ।** भेदस्य धर्मिस्वरूपत्वेऽपि तत्तच्छब्दयोर्विशेषबलेनापर्यायत्वम् । अन्यथा अनयैव युक्त्याऽभेदोप्यविद्याकल्पितस्स्यादित्येवं निराकृतमित्यर्थः ।

तत्वस्यानेकप्रकारत्वेऽपि स्वतन्त्रत्वेनास्वतन्त्रत्वेन सर्वस्य एकविधत्वेन द्वैविध्याभावाद्वेति तृतीयमनूद्य दूषयति ॥ **यदि चेत्यादिना ॥ पारतन्त्र्येति ।**

भृत्यादेःस्वाम्यधीनतायाः पुत्रादेः पित्राद्यधीनतायाः स्वप्रत्यक्षसिद्धत्वेन तद्विरोध इत्यर्थः ।

**यदिनाम न तस्य वशे सकलं कथमेव तु नित्यसुखं न भवेत् ।**

ति भगवत्पादीयं वचनं मनसि निधाय दूषणान्तरमाह ॥ **नित्यसुखादीति ।** आदिपदेनेतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरिति सूत्रोक्तहिताक्रियादिप्रसक्तदोषोऽपि ग्राह्यः । तथाच सर्वस्यापि स्वतन्त्रत्वे नित्यसुखं स्यात् । स्वतन्त्रकर्तुरपि हिताक्रियादिदोषप्रसङ्गश्चेत्यर्थः । सर्वस्यापि पारतन्त्र्ये पराधीनत्वाविशेषात् । अस्यायं नियामकस्तस्यान्यस्तस्याप्यपर इत्यपर्यवसितानन्तव्यक्तिपरंपरया उत्तरोत्तरनियमनासिद्ध्या पूर्वपूर्वनियमनासिद्धमूलक्षयकरानवस्थादोषादित्यर्थः । अभ्युपेत्यैतदुक्तम् । वस्तुतस्तु पारतन्त्र्याविशेषादन्येनान्यनियमनमेवासम्भवीत्याह ॥ **असम्भवादिति ।** एकेनान्यस्य नियमनासम्भवात् । नकस्यापि सत्ताप्रतीतिः प्रवृत्तिश्च स्यादिति राघवेन्द्रीये ॥ **अनवस्थितेरसम्भवाच्चेति ।** सर्वस्यापि पारतन्त्र्ये परस्यापिपारतन्त्र्यं एवमन्यस्यापीत्यनवस्थितेरित्यर्थः । अभ्युपगम्यचेदमुदितम् । नियामकजीवस्यापि प्रेर्येण जीवत्वसाम्यात्प्रेराणसम्भवाच्चेत्यर्थः ।

ननु भवद्भिरप्युत्तमजीवानामधमजीवनियामकताङ्गीकृतैव । अत स्तत्रापि सममिदं दूषणमिति चेन्न । यथा सति राज्ञि मण्डलेशे प्रजानां तच्छक्त्या नियम्यनियामकभावः सम्भवति । न त्वराजके लोके । तथास्मत्पक्षे जीवानां स्वतन्त्रेश्वरशक्त्या जीवान्तरनियामकत्वमुच्यते । न परपक्षे । स्वतन्त्रवस्त्वनङ्गीकारादिति भावः । यथोक्तं सूत्रकृता । अनवस्थितेरसम्भवाच्च नेतर इति । व्याख्यातं चैतद्भाष्ये । जीवस्य जीवान्तरनियामकत्वेऽन वस्थितेः साम्यादसम्भवाच्च न जीवः । नियमे प्रमाणाभावादनीश्वरापेक्षत्वाच्चेति । सत्तादिकं स्यादित्यत्रादिपदेन प्रमितिप्रवृत्त्योर्ग्रहणम् ॥ **आगमविरोधश्चेति ।** सर्वस्याधिपतिः सर्वस्येशानः सर्वस्य वशीत्यादि स्वतन्त्रेश्वरप्रतिपादकागम विरोधः ।

**(स.टि.)** एकमेव तत्वमिति पक्षं प्रतिक्षिपति ॥ **यदीति ॥ भेदेति ॥** घटपटादिभेदग्राहक प्रत्यक्षादिविरोध इत्यर्थः । नन्वत्र भेदस्यावास्तवत्वेन तदुपलंभस्य भ्रमत्वसम्भवात्तद्विरोधो किंचित्कर इत्यत आह ॥ **तदिति ॥** तस्य भेदोपलंभस्य भ्रान्तितायां वक्तव्यायां बाधकं वाच्यम् । नोक्तं बाधकम्। अतो नायं भ्रमरूप इत्यर्थः । ननु ''नास्ति नासीन्न भविष्यति भेदो मिथ्या भेदत्वाच्चन्द्रभेदवत् नेह नानास्तिकिञ्चन, विभेदजनके-ज्ञानेनाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति । सापेक्षत्वात्सावधेश्च तत्वे द्वैतप्रसङ्गतः । एकाभावादसन्देहान्न रूपं वस्तुनो भिदे''त्यादीनां बाधकानां विद्यमानत्वात्तदेव बाधकजातमत्राप्युच्यत इत्यत आह ॥ **तच्चेति ॥ तत्** बाधकं **अन्यत्र** तत्वनिर्णयटीकादौ निरस्तमित्यर्थः । मतान्तरमाशंक्य परिहरति ॥ **यदि वेति ॥** सुखदुःकादित्सा-जिहासावतस्तदुपादानहानयोः शक्तिमत्त्वस्यैव स्वातंत्र्यरूपतया सर्वेषां स्वातन्त्र्ये निरन्तरं दुःखासंभिन्नसुखानुभवप्रसङ्ग इति भावः । ''इतर-व्यपदेशाद्धिताकरणादि दोषप्रसक्तिः, यदि नाम न तस्य वशे सकलं कथमेव तु नित्यसुखं न भवे''दित्यादिभगवत्पादाचार्योक्तेः । तत्वमङ्गीकरोमि बहुविधम् । परं तु तत्परतन्त्रमेव । न तु स्वतन्त्रमिति स्वविभाग-विरोधिपक्षान्तरं प्रतिक्षिपति ॥ **यदि वेति ॥**

यदि परतन्त्रमेकमेव तत्वं भवेत्तदा सर्वस्यापि परशब्दितजीवान्तर-तन्त्रत्वस्य वक्तव्यतया तस्यापि जीवत्वेन जीवान्तरमेव तन्नियामकं वाच्यम् । तदप्येवं तदप्येवमित्यनवस्थितेः । न च वाच्यं बीजाङ्कुराद्यनवस्थावदस्या अप्यनवसितपरंपरारूपाया अनवस्थायाः सिद्धविषयत्वेन न दूषणत्वमिति । पूर्वपूर्वजीवनियामकत्वसिद्ध्यधीनत्वादुत्तरोत्तरजीवनियामकत्वस्य तदसिद्धौ तदसिद्धेर्मूलक्षयापत्तेस्तस्या दूषणत्वसम्भवात् । यथाऽऽहुः ''मूलक्षयकरीं प्राहुरनवस्थां हि दूषण''मिति । जीवान्तरस्यापि जीवत्वसाम्यान्नियामकत्वा सम्भवाच्च न कस्यापि सत्ताशब्दिता प्रवृत्तिः स्यादित्यर्थः । ''अनवस्थितेर-

सम्भवाच्च नेतर'' इति भगवत्स्मरणादिति सूचयितुं सौत्रपदानुकरणम् । न चाक्षिपच्छून्यतया स्वतः पृथक्प्रवृत्तिविकलयोरप्यन्धपंग्वोरितरेतरसाहित्येनेव स्याज्जागती प्रवृत्तिरिति वाच्यम् । मेलकस्यापि कस्यचिदपेक्षणीयत्वादित्यत्र तात्पर्यात् । दूषणान्तरमप्याह ॥ **आगमविरोधश्चेति** ॥ चःपूर्वहेतुभ्यां सहसमुच्चये । आगमाश्च ''आनीदवातं स्वधया तदेकं तस्माद्धान्यन्नपरः-किञ्चनास, नाहङ्कञ्चिदुपाश्रितः, सर्वस्याधिपतिः सर्वस्येशान'' इत्याद्या भगवत्स्वातन्त्र्यप्रतिपादका द्रष्टव्याः ।

**(पां.टि.)** अस्तु तर्हि तत्त्वस्य ऐकविध्यात् भवदुक्तद्वैविध्यानङ्गीकारः इति द्वितीयः निरवद्यत्वात् इत्यत आह **यदि चेति** । घटपटौ भिन्नौ इत्यादि-भेदप्रत्यक्षोपलम्भबाधः इत्यर्थः । **बाधकं वाच्यमिति** । न च तत् वक्तुं शक्यम् । ततश्च बाधकाभावात् न भेदोपलम्भस्य भ्रान्तित्वमिति भावः । ननु विमतो भेदः मिथ्या भेदत्वात् चन्द्रभेदवत् इत्यनुमानस्यैव बाधकत्वात् कथं बाधकाभावः ? इत्यतः अनुव्याख्यानादौ

......साध्यधर्मोऽयं सन्नसन्वा न वोभयम् ।
यदि सन्नपसिद्धान्तः स एवासन्नितीरिते ॥

इत्यादिना अनुमानस्य निरस्तत्वात् न तदपि बाधकमित्याह **तच्चान्यत्रेति** । ननु च न व्यक्त्यैक्यं ब्रूमः । येन उक्तभेदोपलम्भबाधकप्रसङ्गः किन्नाम स्वतन्त्रत्वादिना सर्वस्यापि ऐकविध्यमेव इति तृतीयं निराकरोति **यदीति** । **नित्यसुखादीति** । दुःखाभावादिकम् आदिशब्दार्थः ।

सर्वस्य अस्वातन्त्र्ये 'अनवस्थितेरसम्भवाच्च नेतरः' इति सूत्रखण्डोक्त-न्यायेन न कस्यापि प्रवृत्तिः इत्याह **यदि वेति** । जीवस्य जीवान्तर-नियामकत्वेन अनवस्थितेः । तस्यापि जीवत्वेन अस्वतन्त्रतया अन्यापेक्ष-त्वात् । जीवत्वेन अन्यनियामकत्वासम्भवाच्च । जीवत्वेऽपि अस्य अन्या-नपेक्षत्वे अन्यनियामकत्वे च पूर्वस्यैव तदस्तु इत्यर्थः ॥ सत्तादिकमिति

आदिपदेन प्रवृत्त्यादेः सङ्ग्रहः । ननु च प्रत्येकमसमर्थाभ्यां वाह्यवाहक-भावापन्नाभ्यामन्धपङ्गुभ्यां गमनक्रियानिर्वाहवत् प्रत्येकमसमर्थैः अपि मिलितैः अस्वतन्त्रैः प्रवृत्त्यादिकमुपपद्यते इति चेत् न स्वतःशक्तिमात्र-शून्ययोः इतरेतराश्रयणेन इतरेतरप्रत्यासत्तेरेव अयोगस्य अत्र अभिप्रेतत्वात् । **आगमविरोधाच्चेति** । 'सर्वस्याधिपतिः सर्वस्येशानः' इत्यादिभगवत् स्वान्त्र्यप्रतिपादकागमविरोधादित्यर्थः ।

**(का.टि.)** द्वितीयं दूषयति ॥ **यदि चेति** ॥ ननु घटपटादिभेद-प्रतीतिर्भ्रान्तिरेव अधिष्ठानतत्वाभ्युपगमेनोक्तदोषाभावादिति । अत आह ॥ **तद्भ्रान्तितायामिति** ॥ भेदप्रतीतेर्भ्रान्तितायामङ्गीक्रियमाणायां तत्प्रमात्वे बाधकं वाच्यं, अन्यथाधिष्ठानज्ञानस्यापि भ्रान्तित्वापातात् । **तच्च,** भेदो मिथ्या भेदत्वाच्चन्द्रभेदवत्' इत्याद्यनुमानरूपमुपजीव्यप्रत्यक्षादिविरोधाद-प्रमाणं **अन्यत्र** तत्वोद्योतादौ **निरस्तमित्यर्थः** । तृतीयं दूषयति ॥ **यदि वेति** ॥ पारतन्त्र्यादीत्यादिना दुःखादेर्नित्यसुखादीत्यादिना तदभावादेः परिग्रहः। स्वतन्त्रस्येष्टानिष्टप्राप्तिपरिहारावश्यकत्वात् । न च कथमचेतनस्य घटादेः सुखादिप्रसङ्ग इति वाच्यम् । स्वातन्त्र्यादेव चैतन्यस्यापि प्राप्तेः । सुखादेरपि स्वातन्त्र्येण कारणनपेक्षत्वाच्च । न चैवं सुखादेरन्येनानापाद्यत्वात्कथं तत्प्रसङ्ग इति वाच्यम् । ईश्वरवन्नित्यव्यक्तसुस्वरूपत्वादेरापाद्यत्वात् । चतुर्थं दूषयति ॥ **यदि वेति** ॥ **अनवस्थितेरिति** । यस्य यदधीनत्वं तस्य तदन्याधीनत्वमित्यव्यवस्थितेः, विनिगमकाभावेन मिथो नियामकत्वा-सम्भवाच्च, नियामकासिध्द्या न कस्यापि सत्ताप्रवृत्यादिकं स्यादित्यर्थः । न च सिद्धान्तेऽप्येष दोषः । सर्वनियामकेश्वरशक्तेरेव विनिगमकत्वादिति भावः ॥ **आगमविरोधश्चेति** ॥ 'सर्वस्याधिपतिः सर्वस्येशानः' इत्याद्यागमविरोध इत्यर्थः ।

## मूलोक्ततत्वविभागपरीक्षा

**(टी.) यद्यपि भावाभावतया वा चेतनाचेतनत्वेन वा नित्यानित्यतया वा अस्य द्वैविध्यं शक्यते वक्तुम् । तथाप्यस्य वैयर्थ्यादयमेव विभागो न्याय्यः । परतन्त्रप्रमेयं स्वतन्त्रप्रमेयायत्ततया विदितं हि निश्श्रेयसाय भवति । तथा च प्रकरणान्ते वक्ष्यति । अन्यथा गङ्गावालुकपरिगणनवदिदं तत्वसङ्ख्यानमपार्थकं स्यात् । अतः स्वतन्त्रास्वतन्त्रभेदाद्द्विविधं तत्वमिति ।**

**(रा.टि.)** एवं च तत्वपदेन द्विविधपदेन स्वतन्त्रास्वतन्त्रपदाभ्यां व्यावर्तितं पक्षचतुष्टयं **इष्यते** इतिपदसूचितयुक्तिभिर्निरस्येदानीमेवं विभागमाक्षिप्य समाधत्ते ॥**यद्यपीत्यादिना स्वतन्त्रतत्वस्येत्यतः प्राक्तनेन ग्रन्थेन ॥ अस्येति ॥** तत्वस्येत्यर्थः । न्याय्यतां व्यनक्ति ॥ **परतन्त्रेत्यादिना** । कुत एतत्? इति । अत आह ॥ **तथा चेति** ॥ उक्तप्रकारेण वक्ष्यति च **सृष्टिः स्थितिश्चे**त्यादिना सर्वस्येशायत्तत्वमित्यर्थः । 'तादृशज्ञानं निःश्रेयसहेतुः' इति तत्रानुक्तावपि तदुक्तिवैयर्थ्यान्यथानुपपत्त्या तल्लभ्यत इति भावः । परतन्त्रेत्यादिस्वोक्तार्थे स्वयं युक्तिं चाह ॥ **अन्यथेति** ॥ एवं विभागाकरण इति वा, पराधीनतया जगतो ज्ञातव्यत्वाभाव इति वा, तथा ज्ञानस्य निःश्रेयसहेतुत्वाभाव इति वा अर्थः ॥ **अत इति** ॥ स्वातन्त्र्यादिभेदेन विभागस्योक्तदिशा न्याय्यत्वादित्यर्थः । इतिशब्दः **स्वतन्त्रमस्वतन्त्रं** चेत्यनेनोक्तविभागसमर्थनपरिसमाप्तौ वर्तते ।

**(श्री. टि.)** प्रकारान्तरेण द्वैविध्य सम्भवाद्वेति चतुर्थविकल्पमनूद्य दूषयति ॥ **यद्यपीत्यादिना** ॥ **अस्येति** । भावाभावत्वादिना तत्वद्वैविध्यकथनस्येत्यर्थः ॥ **वैयर्थ्यादिति** । भावाभावाद्युक्तरीत्या तत्वद्वैविध्यज्ञानस्य मोक्षासाधनत्वादित्यर्थः । एवं तर्हि स्वतन्त्रास्वतन्त्रभेदेन तत्वद्वैविध्यकथनमपि व्यर्थं प्रयोजनाभावादित्यत आह ॥ **परतन्त्रप्रमेयमिति** । **आयत्त-**

**तया** अधीनतया । ''अधीनो निघ्न आयत्त'' इत्यभिधानात् । सृष्टिस्थिति-नियमनादाविति शेषः ।। **वक्ष्यतीति** । सृष्टिःस्थितिस्संहृतिश्चेत्यादिना । ''विष्णुनास्य समस्तस्य समासव्यासयोगत'' इति प्रकरणान्ते परतन्त्र-प्रमेयस्य सृष्ट्यादिविषये स्वतन्त्रभूतविष्ण्वधीनत्वस्य उक्तत्वादित्यर्थः । यद्यप्यत्र परतन्त्रप्रमेयस्य स्वतन्त्रप्रमेयभूतविष्ण्वधीनत्वमेवोक्तम् । न तु तज्ज्ञानस्य मोक्षसाधनत्वम् । तथापि

**य एतत्परतन्त्रं तु सर्वमेव हरेः सदा ।**

**वशमित्येव जानाति संसारान्मुच्यते हि सः ।।**

इति तत्वविवेकान्ते उक्तप्रकारेण तज्ज्ञानस्य मोक्षहेतुत्वमप्यत्राभिप्रेतमिति द्रष्टव्यम् ।। **अन्यथेति** । तज्ज्ञानस्य निःश्रेयसासाधनत्व इत्यर्थः । तत्वसंख्यानं तत्वपरिगणनम् ।

**(स.टि.)** प्रकारान्तरेण विभागकर्तव्यतामाशंक्यास्यैव साफल्यादयमेव विहित इत्याह ।। यद्यपीत्यादिना ।। द्वन्द्वान्ते श्रूयमाणस्तत्प्रत्यय उभयत्राप्यन्वेति । अस्य तत्वस्य । अस्य परपरिदर्शितविभागस्य । वैयर्थ्यात् मोक्षजनकज्ञानाविषयत्वादिति भावः । अयमेव स्वतन्त्रमस्वतन्त्रम् चेत्यादिना कृतो विभाग एव न्याय्यः न्यायादनपेतः । ''धर्म पथ्यर्थ-न्यायादनपेत'' इति यत् । तमेव न्यायमुपपादयति ।। **परतन्त्रेत्यादिना ।।** परस्तन्त्रम् प्रधानम् यस्य तत्तथा । ''तन्त्रम् प्रधाने सिद्धान्ते कुटुम्ब'' इति विश्वः । ''तन्त्रं प्रधाने सिद्धान्त'' इत्यमरः । तन्त्रम् कुटुम्बकृत्ये स्यादित्यारभ्य ''प्रधाने तन्तुवाये चे''ति तट्टिप्पणीसङ्गृहीताभिधानञ्च । आयत्ततया अधीनतया । ''अधीनो निघ्न आयत्त'' इत्यमरः । आयत्तत्वञ्च स्वसत्तादौ यथासम्भवं ज्ञेयम् । निःश्रेयसाय निश्चितम् श्रेयो निःश्रेयसं मोक्षः । तस्मै । अचतुरेति निपातनादच् । ''श्रेयो निःश्रेयसामृत''-मित्यमरः । तत्र ज्ञापकमाह ।। तथा चेति ।। प्रकरणान्ते तत्वविवेकेन सहैकम् प्रकरणमिदमिति

**य एतत्परतन्त्रन्तु सर्वमेव हरेःसदा।**
**वशमित्येव जानाति संसारान्मुच्यते हि सः ॥**

इत्येतत्प्रकरणान्ते वक्ष्यतीत्यर्थः । भावाभावतयेत्यादिविभागकथने तज्ज्ञानस्य मुक्त्यनुपयुक्तत्वाद्गङ्गागत सिकतागणनावद्व्यर्थमिदन्तत्व संख्यानमापद्येतेत्याह ॥ **अन्यथेति ॥** अन्यथा अस्मद्रीत्या विभागाकरणे । अपगतोऽर्थो यस्मात्तत्तथा । निरर्थकमित्यर्थः । उक्तमर्थमुपसंहरति ॥ **अत इति ॥** एतदोऽनित्यनि वाऽशिवा तसिलि अत इति भवति । एतस्माद्धेतोरित्यर्थः । इदम्शब्दस्य वोक्तादेशे प्रत्यये तसिलि चेदम् रूपम् । इदम् शब्दपरामृश्यं दर्शयतीति सुधापरिमले "यद्वा इदम इशित्यतो योगविभागादिदमोऽशि वेदंशब्दस्याप्यत इति रूप" मित्युक्तेः । इतिशब्दः सामान्यविभागपरिसमाप्तौ ।

**(पां.टि.)** 'द्वैविध्येऽपि तत्त्वस्य प्रकारान्तरेणापि द्वैविध्यसम्भवात् एव तदनङ्गीकारः'इत्यन्तिमपक्षं निराकरोति **यद्यपीति** । मोक्षरूपफलानुपयोगित्वादिति भावः । स्वपक्षसाधकहेतुमेव उपपादयति **परतन्त्रेति** । विष्णुनाऽस्य समस्तस्य इत्यादिना इति शेषः । यद्यपि एतत्प्रकरणान्ते सृष्ट्यादिविषये 'परतन्त्रं विष्ण्वायत्तम्' इत्येव उच्यते न तु तथा ज्ञानस्य निःश्रेयसहेतुत्वं तथापि एतत्प्रकरणार्थसाक्षित्वेन भगवत्प्रणीततत्त्वाविवेकगतवाक्योदाहृतिरूपतया तत्वविवेकस्य एतत्प्रकरणशेषत्वात्, तदन्ते-

**य एतत्परतन्त्रन्तु सर्वमेव हरेः सदा।**
**वशमित्येव जानाति संसारान्मुच्यते हि सः ॥**

इत्युक्तेः, इयमुक्तिः; इति ध्येयम् । अपार्थं व्यर्थम् ॥ **अत इति** । सम्भावितपक्षाणामुक्तरीत्या दुष्टत्वादित्यर्थः ॥ सिद्धमिति वाक्यशेषः ॥

**(का.टि.)** स्यादेतत्, प्रकारान्तरेणापि तत्वविभागसम्भवात्स्वातन्त्र्यास्वातन्त्र्याभ्यामेव तद्विभागे किं नियामकमित्याशङ्क्याह ॥ **यद्यपीति ॥**

**अस्य** भावाभावत्वादिना विभागस्य । **वैयर्थ्यात्** मोक्षानुपयोगित्वात् । स्वातन्त्र्यादिना विभाग एव कथं मोक्षोपयोगीति । अत आह ॥ **परतन्त्रेति** ॥ **निःश्रेयसाय** मोक्षाय । विभागान्तरे च प्रपञ्चस्य पारतन्त्र्यालाभादिति भावः । एतच्च **आचार्यैः** सूचितमित्याह ॥ **तथा चेति** ॥ स्वतन्त्रास्वतन्त्रविवेकस्य मोक्षोपयोगित्वाभिप्रायेणैवेत्यर्थः । अन्यथा **सृष्टिः स्थितिश्चेत्यादिना** सर्वस्य विष्ण्वधीनत्वोक्तेर्वैयर्थ्यात्,

**य एतत्परतन्त्रं तु सर्वमेव हरेः सदा ।**
**वशमित्येव जानाति संसारान्मुच्यते हि सः ॥**

इति तत्वविवेकान्ते स्पष्टमुक्तत्वेन तदनतिभिन्नार्थकेऽप्यत्र तदभिप्रायस्यावश्यकत्वाच्चेति भावः । ननु स्वतन्त्रास्वतन्त्रविवेक- वद्भावाभावादिविवेकोऽपि मोक्षोपयोगी । अन्यथा **भावाभावौ द्विधेतरत्** इत्यादेर्वैयर्थ्यापत्तेरिति । अत आह ॥ **अन्यथेति** ॥ स्वातन्त्र्यादिना अविभज्य भावत्वादिनैव विभागेऽपार्थकं स्यात् । स्वातन्त्र्यादिविवेकस्यैव मोक्षमुख्योपायतायास्**तत्वविवेका**दिसिद्धतया तदभावे तदङ्गभूतभावत्वादिविवेकस्य वैयर्थ्यादिति भावः । तथापीत्यादिनोक्तमुपसंहरति ॥ **अत इति** ॥ उक्तरीत्या तत्वद्वैविध्यस्यैव प्रामाणिकत्वात्प्रयोजनवत्वाच्चेत्यर्थः । इतीत्यनन्तरं विभागो युक्त इति शेषः ।

### स्वतन्त्रतत्वस्यादौ निर्देशे लक्षणकथने च बीजकथनम्

**(टी.) स्वतन्त्रतत्वस्य प्राधान्यात्तदेवादावुद्दिष्टम् । उद्देशेनैव लक्षणं च लब्धम् ।**

**अत एवादौ तन्निर्दिशति**

## स्वतन्त्रो भगवान्विष्णुः......

### मूले भगवानिति पदस्य द्विविधमिति पदस्य च कृत्यकथनम्

**अत्र भगवानिति विष्णोः स्वातन्त्र्योपपादकम् । अन्यदस्वतन्त्रमिति शेषः । अथ वा द्वे तत्वे इत्युक्ते स्वतन्त्रमिव परतन्त्रमेका व्यक्तिरेव प्रसज्येत । तथा च प्रमाणविरोधो वक्ष्यमाणविभागविरोधश्च । अतो द्विविधमित्युक्तम् । ततश्च स्वतन्त्रमप्यनेकविधं स्यादित्यत इदमुक्तम् । अथ वा स्वतन्त्रास्वतन्त्रभेदेन तत्वद्वैविध्यमङ्गीकुर्वाणा अपि साङ्ख्यादयः प्रधानादिकं स्वतन्त्रतत्वमातिष्ठन्ते । तन्निरासायेदमुदितमिति ।**

(रा.टि.) स्वतन्त्रतत्वस्य प्रथमोद्देशे निमित्तमाह ॥ **स्वतन्त्रतत्वस्येति** ॥ **उद्दिष्टमिति** ॥ प्रथमवाक्ये । ननु उद्देशस्य लक्षणोक्त्यर्थत्वादुद्देशानन्तरं लक्षणानुक्तिरनुचितेति । अत आह ॥ **उद्देशेनैवेति** ॥ **लक्षणं चेति** ॥ स्वसत्तादौ परानपेक्षत्वरूपमित्यर्थः ॥ **अत एवेति** ॥ प्राधान्यादेवेत्यर्थः । ननु **स्वतन्त्रो विष्णुरि**त्येतावतैव पूर्तौ **भगवानि**तिपदं व्यर्थमिति । अत आह ॥ **अत्र भगवानितीति** ॥ **स्वातन्त्र्योपपादकमिति** ॥ तेन समग्रैश्वर्यादि-षड्गुणवत्वस्य लाभादिति भावः । मूले अस्वतन्त्रतत्वप्रदर्शक-पदा-भावादाह ॥ **अन्यदस्वतन्त्रमिति शेष इति** ॥ 'सङ्ख्याया विधार्थे धा' इत्युक्तस्य **द्विविधमि**ति धाप्रत्ययस्यार्थवत्त्वं वक्तुमाह ॥ **अथ वेति** ॥ तत्रावान्तरभेदसूचकधाप्रत्ययाभावादिति भावः । **तथा चेति** ॥ एकव्यक्ति-प्रसक्तितश्च प्रत्यक्षादिप्रमारविरोध इत्यर्थः ॥ **अत इति** ॥ अवान्तरानेकभेद-सूचनायेत्यर्थः ॥ **इत्युक्तमिति** ॥ 'अवान्तरानेकभेदोपेते द्वे तत्वे' इत्यर्थ-लाभाय धाप्रत्ययान्तपदं प्रयुक्तमित्यर्थः । अस्त्वेवम् । तथापि किं प्रकृते? इति । अत आह ॥ **ततश्चेति** ॥ धाप्रत्ययान्तप्रयोगतश्चेत्यर्थः । परतन्त्र-मिवेति योज्यं । **विष्णुरि**त्युक्तेरर्थवत्त्वाय योजनान्तरमाह ॥ **अथ वेति** ॥ **साङ्ख्यादय इति** ॥ साङ्ख्यशैवहैरण्यगर्भप्रभृतयः । प्रधानादिकं प्रधान-शिवहिरण्यगर्भस्कन्दसूर्यशक्त्यादिकमित्यर्थः । आतिष्ठन्ते अभ्युपगन्छन्ति ।

(श्री.टि.) ननु स्वतन्त्रतत्वस्यादावुद्देशे किं निमित्तमित्यत आह ॥ **स्वतन्त्रतत्वस्येति** । ननु उत्तरत्रस्वतन्त्रतत्वं निर्दिश्यते । तत्कथम् । लोके

लक्षणमुक्त्वा निर्देशो दृष्टो नान्यथा। अतो लक्षणाकथनान्न्यूनतेत्यत आह ॥ **उद्देशेनैवेति**। यत्स्वसत्तादौ स्वस्यैव तन्त्रं अधीनं न तु परापेक्षं तत् स्वतन्त्र मिति संज्ञानिर्वचनेनैव लक्षणं लब्धमिति नन्यूनतेत्यर्थः। इदमुपलक्षणम्। यत्स्वत्सत्तादौ स्वतन्त्रं स्वाधीनं न भवति परापेक्षमिति यावत्। तत् अस्वतन्त्रमिति अस्वतन्त्रतत्वलक्षणमपि द्रष्टव्यम् ॥ **(अतए)तत एवेति**। प्राधान्यादेवेत्यर्थः। ननु उत्तरत्र अस्वतन्त्र विभाग एवोच्यते न त्विदं अस्वतन्त्रतत्वमिति निर्दिश्यते। अत आह ॥ **अन्यदिति**। ''स्वतन्त्रो भगवान्विष्णु''रिति वचनस्याभिप्रायांतरमाह ॥ **अथवेति** ॥ **इत्युक्त इति**। द्विविधमित्यनुक्त्वेति शेषः **प्रमाणविरोध इति**। ब्रह्मादिचेतनानां घटाद्य-चेतनानां च बह्वीनां परतन्त्रव्यक्तीनां प्रमाणप्रमितत्वेन तद्विरोध इत्यर्थः ॥ **वक्ष्यमाणेति**। भावाभावौ द्विधेतरदिति-परतन्त्रविभागस्योच्यमानत्वेन परतन्त्रव्यक्तेरेकत्वे तद्विरोधस्स्यादित्यर्थः ॥ **द्विविधमित्युक्तमिति**। स्वतन्त्रास्वतन्त्ररूपप्रकारद्वयोपेतमित्यर्थः ॥ **ततश्चेति**। स्वतन्त्रास्वतन्त्र-त्वयोः प्रकारत्वोत्त्या प्रकारवत्त्वस्य स्वाश्रयव्यक्तिभेद सापेक्षत्वात् परतन्त्र-तत्ववत् स्वतन्त्रतत्वमप्यनेकं स्यादित्यर्थः ॥ **इदमुक्तमिति**। स्वतन्त्रो भगवान्विष्णुरित्येकवचनेन तस्यैकत्वोक्तेरुक्त शङ्कापरिहृतेति ज्ञातव्यम्। स्वतन्त्रो भगवान्विष्णुरित्यस्य पुनरभिप्रायान्तरमाह ॥ **अथवेति**। सांख्यादय इत्यादिपदेन पाशुपतशैवशाक्तादयो ग्राह्याः। प्रधानादिक-मित्यादिपदेन शिवशक्त्यादिकं ग्राह्यम् ॥

**(स. टि.)** नन्वत्र स्वतन्त्रतत्वस्यादावुद्देशः कुतः। उद्दिष्टस्य च लक्षणम् वक्तव्यम्। मूले तत्कुतो नोक्तम्। स्वतन्त्रो भगवान्विष्णुरिति शृङ्गग्राहिकयाऽऽदौ निर्देशश्च किम् निमित्त इति शङ्काः क्रमेण परिहरन्मूल-मवतारयति ॥ **स्वतन्त्रतत्वस्येत्यादिना** ॥ प्राधान्यात् अभ्यर्हितत्वात्। आदौ स्वतन्त्रमस्वतन्त्रमित्यादिभागे। उद्देशेनैव नाम्ना सङ्कीर्तनेनैव। स्वरूपप्रमितीत्यादिनाऽस्माभिर्दर्शितप्रनाड्येति भावः। इति इतिकृत्वा। अत

एव प्राधान्यादेव । निर्दिशति शृङ्गग्राहिकया दर्शयति चेत्यर्थः । ननु पूर्वमुद्देश्यप्राथम्यानुसारेण तत्वं द्विविधमित्यनुक्त्वा ''स्वतन्त्रमस्वतन्त्रम् चे''ति प्रथमतस्तत्कीर्तनस्य मङ्गलसूचकत्वाभिधानात् इदानीम् ''प्राधान्यात्तदेवादावुद्दिष्ट''मिति कथने कथम् न विरोध इति चेदुच्यते । पूर्वं अनिश्चित भाष्यकृदाप्तभावस्य अत एव मङ्गलानुमापक परमास्तिकत्वहेतोः स्वरूपासिद्धिंमन्वानस्य प्रतिवादिनः मङ्गलानुष्ठान निश्चयाय प्रत्यक्षतोऽपि मङ्गलश्रुतिरियं श्रूयत इति वक्तुम् तथाऽभिहितम् । इदानीं अवगततदाप्तभावस्योक्तहेतुनैव मङ्गलसिद्धेः स्वतन्त्रत्वस्य प्रथमत उद्देशे निमित्तपरिचोदनायां प्राधान्यरूपो हेतुरभिहित इति न वैयर्थ्याख्य विरोध इति । स्वतन्त्रो विष्णुरित्येतन्मात्रोक्तावभिलषितसिद्धेः किम् तत्वविवेक इव पूजार्थकभगवच्छब्दग्रहणेनेत्यत आह ॥ **अत्रेति** ॥ अस्मिन्प्रकरण इत्यर्थः । तत्वविवेके ''निर्दोषाशेषसद्गुण'' इति स्वातन्त्र्योपपादकस्यान्यस्य विद्यमानत्वात्तस्य पूजार्थकत्वेऽप्यत्र तदभावात्स्वातन्त्र्यं विष्णोरेव कुत इत्यत उक्तं **भगवानिति** ॥ भगवांश्च स उच्यते यः

**ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।**
**ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥**

इत्युदीरितैश्वर्यादिषड्गुणः । ततश्च विष्णुः स्वतन्त्रः । भगवत्त्वात् । व्यतिरेकेण यज्ञदत्तवदिति प्रकारेण भगवत्त्वं स्वातन्त्र्यस्योपपादकं साधकम् भवतीति भावः । प्राधान्यात्स्वतन्त्रतत्वस्य विष्णोरादौ शृङ्गग्राहिकया निर्देशेनैवार्थात्सूचितम् । तदितरस्यास्वातन्त्र्यम् कण्ठत आह ॥ **अन्यदिति** ॥

अत्र भगवानिति विष्णोरिति टीका विष्णुशब्दस्य रूढत्वम् भगवच्छब्दस्य यौगिकत्वमभ्युपेत्य प्रवृत्ता । यदा तु वैपरीत्यम् विवक्षितम् तदा विष्णुरिति भगवतः स्वातन्त्र्योपपादकमिति टीकाविन्यासो बोध्यः । ततश्च ''भगवान्भगहा नन्दी'' त्युक्तदिशा भगवान्हरिः स्वतन्त्रः । विष्णुत्वात् ।

व्यतिरेकेण चैत्रवदिति प्रयोगो बोध्यः । विष्णुत्वात् सर्वव्यापित्वात् । विष्लृ व्याप्ताविति धातोः ''विषेःकिच्चे''ति सूत्रेण ''स्थोणु''रिति सूत्रादनुवृत्तणुप्रत्यये तस्य कित्त्वेन गुणाभावे विष्णुरिति रूपम् ॥ १ ॥

वियंत्यनेन मोक्षं प्रति जना इति वा विष्णुः । गत्यर्थाद्वीधातोः करणे क्स्नुप्रत्यये पृषोदरादित्वाद्धात्वीकारह्रस्वत्वे कित्त्वाद्गुणाभावे ''आदेशप्रत्यययो''रिति सस्य षत्वे ''रषाभ्याम् नो णः समानपद'' इति नस्य णत्वे रूपम् ॥ २ ॥

सर्वप्रवेशित्वाद्वा विष्णुः । विश प्रवेशन इत्यस्मात् ''उणादयो बहुल''मिति क्स्नुप्रत्यये पृषोदरादिभावेन शस्य षत्वे णत्वे च रूपम् ॥ ३ ॥

कान्त्यर्थाद्वीधातोर्वा क्स्नुः । शिष्टं पूर्ववत् कान्तिश्च न सर्वसाधारणी किन्त्वभ्यधिकेति द्रष्टव्यम् ॥ ४ ॥

अधिभूतादि सम्बन्धिजन्मादिविषयेच्छावत्त्वाद्वा । वश कान्तौ कान्तिरिच्छेत्युक्तेरिच्छार्थाद्वशधातोर्बाहुलके नुप्रत्यये निर्वचनत्वादुपधाकारस्येकारे शस्य षत्वे रूपम् ॥ ५ ॥

त्रिविक्रमरूपेण चरणक्रमणाद्वा विष्णुः । गत्यर्थाद्वयतेः कर्तरि क्स्नुः । पूर्ववदुर्वरितम् ॥ ६ ॥

तदुक्तम् श्रीगीताभाष्ये ''विष्णुः सर्वव्यापित्व प्रवेशित्वादेः । विष्लृ व्याप्तौ, विश प्रवेशन इति च पठन्ति ।

**गतिश्च सर्वभूतानां प्रजानां चापि भारत ।**
**व्याप्तौ मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ।**
**अधिभूतनिविष्टश्च तदिच्छुश्चास्मि भारत ।**
**क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः ॥**

इति मोक्षधर्म इति । आगमेन हि विष्णुत्वमिति ज्ञानपादीयसुधाया

''विष्णुत्वन्तु समस्तगुणपरिपूर्णत्वनिर्दोषत्वजगज्जन्मादिकारणत्वलक्षणं न प्रत्यक्षमत'' इत्याद्युक्तेर्भवति स्वतन्त्रत्वोपपादकम् विष्णुत्वमिति मन्तव्यम् । एवमैतरेयभाष्येऽपि

**सर्ववेष्टयितृत्वाच्च विशिष्टबलतस्तथा ।**
**विष्णुरित्यभिधा मह्यं सा न युक्ता दिवौकसाम् ॥**

इमित्यादिना विष्णुपदार्थ उक्तोऽनुसन्धेयः । विष्णुर्नारायण इत्यमरव्याख्याने ''वेष्टि सर्वमिति विष्णुः । विष्लृ व्याप्तौ । विषेः किच्चेति नु''रित्येवमेवोक्तम् । विष्णुत्वोपपादकत्वम् च पूर्वोदीरितरीत्या ज्ञेयम् ॥ उक्तपक्षे अन्यदित्यादिशेषकल्पना कार्येत्यस्वरसादाह ॥ **अथवेति** ॥ इत्युक्ते एवं विन्यासकरणे ॥ **प्रसज्येतेति** ॥ यत्र व्यक्त्यैक्यं तत्रैव प्रायेण द्वित्वप्रयोगादिति भावः । किमतो यद्येवमित्यत आह ॥ **तथा चेति** ॥ **प्रमाणविरोध इति** ॥ अस्वतन्त्रानेकत्वस्य प्रत्यक्षादिसिद्धत्वेन तद्विरोध इत्यर्थः ॥ **वक्ष्यमाणविभागविरोधश्चेति** ॥ भावाभावौ द्विधेतरदिति वक्ष्यमाणविरोधश्चेत्यर्थः ॥ **अत इति** ॥ यद्यपि यत्र प्रकारद्वित्वमुच्यते तत्र प्रकारिद्वित्वं न सेत्स्यति । तथापि प्रकारद्वित्वम् स्वाविनाभाविप्रकारिद्वित्वमाक्षिपत्येवेति द्वे इति प्रकारिद्वित्वमनुक्त्वा प्रकार्यवान्तरभेदसूचनाय विधान्तेन प्रकारद्वित्वमभिहितमित्यर्थः ॥ **ततश्चेति** ॥ द्विविधमित्युक्तौ सत्यामित्यर्थः ॥ **अनेकं स्यादिति** ॥ परतन्त्रवदिति भावः । **इदमुक्तं** स्वतन्त्रो भगवानित्युक्तमित्यर्थः ।

नन्वेवं सति कथं न व्याहतिः । द्विविधमिति स्वतन्त्रतत्वस्यानेकत्वमुक्त्वा ''स्वतन्त्रो भगवान्विष्णु''रित्येकत्वोक्तेरिति चेन्न । अयमभिप्रायो मूलकारस्य । न वयं प्रकारिणोरवान्तरभेदः प्रकारद्वैविध्योक्त्या वचनवृत्त्या प्रतिपाद्यत इति ब्रूमः । येनोक्ता व्याहतिः स्यात् । नापि प्रकारद्वैविध्यं प्रकार्यवान्तरस्य भेदस्य व्याप्यम् । येनैतदुक्त्या व्यापकस्य तस्य लाभेनोक्तो

दोषः स्यात् । किं नामाश्रययोरैक्यप्रापकप्रकारिद्वित्वमनुक्त्वा ''द्विविध'' मिति प्रकारद्वित्वोक्तिः प्रकार्यवान्तरभेदस्य सूचिकैव । साऽप्यपवादाभावे । यथा ''भावाभावौ द्विधेतर'' दित्यादौ । यत्र पुनरपवादस्तत्र यस्मिन् प्रकारिण्यवान्तरभेदस्तत्रैव पर्यवस्यति । यथा ''दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतन''मित्यादौ । एवञ्च प्रकृतेऽपवादसद्भावेन तथोक्तिरिति कथं व्याहतिः । एवं तार्तीयचरणस्य विधान्तरसूचितप्रकार्यवान्तरभेदनिरासकत्वेन स्वतन्त्रतत्वस्य शृङ्गग्राहिकया निर्देशरूपत्वाभावेन न तन्निर्देशानन्तर-मस्वतन्त्रं किमित्याकांक्षायां निवर्तकत्वेनावश्यं वक्तव्यस्यान्यदस्वतन्त्र-मित्यनुक्तिप्रयुक्तो दोष इति भावः ।

प्रकारान्तरेणैतत्पादप्रवृत्तिं दर्शयति ॥ **अथ वेति** ॥ सांख्यादय इत्यत्रादि पदेन शैवसौरादीनाङ्ग्रहः । **प्रधानं** जडप्रकृतिः । आदिना हरमिहिरादयो ग्राह्याः । **इदं** स्वतन्त्रमित्यादि । तन्निरासप्रकारस्तु ''रचनानुपपत्तेश्च नानुमान''मिति सूत्रतद्भाष्यादितो ज्ञेयः ।

**(पां.टि.)** ननु स्वतन्त्रतत्त्वस्य प्रथमं शृङ्गिग्राहकतया प्रदर्शनमनुचितम् । तत्रापि निमित्ताभावात् । न तावत् भावत्वं तत्र निमित्तम् । घटादि-साधारण्यात् । नापि नित्यत्वम् । आकाशादिसाधारण्यात् । तत्कथमेतत् ? इत्यत उक्तम् **प्राधान्यादिति** । ननु च 'यथोद्देशं लक्षणप्रणयनम्' इति न्यायेन उद्देशानुसारेण लक्षणस्याप्यवश्यं वक्तव्यत्वात्, तदनभिधाने न्यूनता इत्यत आह **उद्देशेनैवेति** । यथा उद्देशेनैव लक्षणलाभः तथा तद्ग्रन्थ-व्याख्यावसरे एव उक्तमिति भावः ॥ **तत एवेति** । प्रथमोद्देशनिमित्तात् प्राधान्यादेव इत्यर्थः । तत् स्वतन्त्रम् । निर्दिशति शृङ्गिग्राहकं दर्शयति इत्यर्थः ।

'स्वतन्त्रो भगवान्विष्णुः'इति मूले तत्त्वविवेकोक्तरीत्या 'भगवत्' शब्दस्य पूज्यार्थत्वप्रतीतिनिरासाय आह **अत्रेति** । तत्र निर्दोषाखिलसद्गुणत्व-

रूपस्वातन्त्र्योपपादकविशेषणान्तरस्य सत्वात् 'भगवान्' इत्यस्य तदुपपादकत्वानाश्रयणेऽपि प्रकृते स्वातन्त्र्योपपादकस्य अन्यस्य विशेषणस्य अभावात् 'भगवत्त्वमेव तदुपपादकम्' इत्याश्रितमिति भावः। ननु निर्दिष्टयोः स्वतन्त्रास्वतन्त्रयोः मध्ये किं स्वतन्त्रम् ? इति जिज्ञासानिवृत्तये शृङ्गिग्राहकतया स्वतन्त्रतत्त्वस्य इव अस्वतन्त्रस्यापि तथा निर्देष्टव्यस्य अनिर्देशात् न्यूनत्वम् स्यादित्यत आह **अन्यदिति।**

अस्मिन्पक्षे 'अन्यत् अस्वतन्त्रम्' इति वाक्यशेषकल्पनमेव अस्वरसं मनसि निधाय पक्षान्तरमाह **अथवेति**। 'तत्त्वम् स्वतन्त्रम् अस्वतन्त्रञ्च' इति चशब्दस्य बलात् स्वतन्त्रास्वतन्त्ररूपे द्वे तत्त्वे इति प्राप्तौ, द्वित्वस्य औत्सर्गिकव्यक्त्यन्वयबलात् स्वतन्त्रव्यक्तिवत् अस्वतन्त्रव्यक्तिः एकैव प्रसज्येत इत्यर्थः। किमतो यद्येवम्? इत्यत आह **तथाचेति ॥ प्रमाणेति।** अस्वतन्त्र व्यक्तिभेदप्रतिपादक प्रमाणविरोधः इत्यर्थः ॥ **वक्ष्यमाणेति।** 'भावाभावौ द्विधेतरत्' इत्यादिवक्ष्यमाणेन इत्यर्थः ॥ **द्विविमिधमित्युक्तमिति।** प्रकारद्वित्वेन प्रकारिद्वित्वासिद्धावपि प्रकारिद्वित्वेन अवश्यं प्रकारद्वित्वसिद्धेः, अनुक्त्वैव प्रकारिद्वित्वं प्रकारद्वित्वोक्तेः प्रकार्यवान्तरभेदसद्भावसूचनार्थत्वात् तत्सूचनाय 'द्विविधम्' इत्युक्तम् इति भावः। **अनेकविधं स्यादिति।** परतन्त्रवदेव अवान्तरभेदवत् स्यादित्यर्थः। तेन 'स्वतन्त्र तत्त्वस्य भगवतो मत्स्याद्यनेकरूपस्य सिद्धान्ते स्वीकारात्, इष्टापादनमेतत् इति चोद्यानवकाशः इति ध्येयम् ॥ **इदमुक्तमिति।** 'स्वतन्त्रः भगवान् विष्णुः एक एव' इत्युक्तमित्यर्थः।

ननु च अस्वतन्त्रमिव स्वतन्त्रमपि अवान्तरभेदवदिति 'द्विविधम्' इत्यनेन उक्तत्वात्, 'स्वतन्त्रो भगवान्विष्णुः' इत्यनेन स्वतन्त्रव्यक्तेः एकत्वोक्तौ स्ववचनव्याघातः इति चेत् न, भावानवबोधात्। न हि प्रकारद्वैविध्योक्तिः प्रकारिणोः अवान्तरभेदस्य वाचिका। येन तु 'द्विविधम्' इत्युक्त्या स्वातन्त्र्यस्यापि अवान्तरभेदः वचनवृत्त्या एव उक्तः स्यात्। नापि

प्रकारद्वैविध्यं प्रकारिणोः अवान्तरभेदस्य व्याप्यम् । येन 'तत् द्विविधम्' इत्युक्त्या स्वतन्त्रस्यापि अवान्तरभेदः अर्थात् उक्तः स्यात् किन्तु आश्रययोः ऐक्यप्रापकं प्रकारिद्वित्वम् अनुक्त्वा 'द्विविधम्' इतिप्रकारद्वित्वोक्तिः प्रकार्यवान्तरभेदस्य सूचिकैव । सा च अपवादाभावे प्रकारिणः अशेषस्य अवान्तरभेदं सूचयति । यथा 'भावाभावौ द्विधेतरत्' इत्यादौ । सति तु अपवादे अपवादविषयातिरिक्ते अवान्तरभेदसूचनेनापि उपपन्ना, न अपवाद विषयेऽपि अवान्तरभेदं सूचयति । यथा 'दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनम्' इत्यादौ । तथा च कुतः स्वोक्तिविरोधः? न चैवम् द्विविध-मित्युक्त्या 'स्वतन्त्रपरतन्त्रयोः अवान्तरभेदः अस्ति' इति सूचितम् । तत्र स्वतन्त्रप्रमेयम् एकमेव' इत्युक्तं भवति इतितत्त्वविवेकटीकोक्तिः कथम् ? इति वाच्यम् तस्यापि स्वतन्त्रपरतन्त्रयोर्मध्ये अवान्तरभेदः अस्ति इति सूचितमित्येव व्याख्येयत्वात् । अत एव अत्र वक्ष्यति 'द्विविधमित्युक्त्या परतन्त्रमवान्तरभेदवदिति सूचितम्' इति । इति दिक् । **साङ्ख्यादय इति ।** अत्र आदिपदेन शैवसङ्ग्रहः । **तन्निरासायेति ।** प्राधान्यादेः स्वातन्त्र्य-निरासस्तु 'रचनानुपपत्तेश्च नानुमानम्' इत्यादिना शास्त्रे एव कृतो द्रष्टव्यः ।

**(का.टि.)** नन्वस्वतन्त्रमेवादौ कुतो नोद्दिष्टं? । तज्ज्ञानस्यार्थतः स्वतन्त्रपदार्थधीहेतुत्वादिति । अत आह **स्वतन्त्रतत्वस्येति ॥ प्राधान्यात्** उत्तमत्वात् । तज्ज्ञापनायेति यावत् । उद्दिष्टस्य लक्षणं कुतो नोक्तम्? अत आह ॥ **उद्देशेनेति** ॥ नामसङ्कीर्तनेनेत्यर्थः । **इष्यते** इत्युक्त्या परीक्षापि लब्धेति चार्थः ॥ **तत इति** ॥ स्वतन्त्रस्य प्रथमोद्दिष्टत्वाल्लक्षणादेर्लब्धत्वाच्च तत्स्वरूपमात्रं दर्शयतीत्यर्थः । एतेन मूले **भगवानि**ति लक्षणोक्तेस्तन्निर्देश मात्रत्वं कुतः? इत्यपास्तं । उद्देशेनैव लक्षणस्य लब्धत्वेनानाकाङ्क्षितत्वात् । तर्हि भगवत्पदं व्यर्थमत आह ॥ **अत्रेति** ॥ भगवत्वं समग्रैश्वर्यादिमत्वम् । 'विष्णुः स्वतन्त्रो भगवत्त्वात् व्यतिरेकेण जीववत्' इति प्रयोगो बोध्यः । न्यूनताभङ्गाय पूरयति ॥ **अन्यदिति** ॥ यद्यप्येकस्य स्वातन्त्र्योक्तावन्यस्या-

स्वातन्त्र्यमर्थाल्लभ्यते तथापि प्रमाणप्रमेयेत्यादिवदेतद्विभागस्य सङ्कीर्णत्वशङ्कानिरासाय पूरणमावश्यकम् । न च स्वातन्त्र्यास्वातन्त्र्ययोर्विरोधान्नैतच्छङ्कावकाश इति वाच्यम् । राजाधीनत्वतदभावयोरिव कादाचित्कसमावेशस्य शङ्क्यत्वात् । पूरणमन्तरापि मूलं व्याख्यातुमाह ।। **अथ वेति** ।।

अत्र **द्विविध**मित्युक्त्या प्रसक्तस्वतन्त्रानेकत्वशङ्कापरिहाराय तदेकत्वाभिधानापेक्षया द्वैविध्यानुक्तिरेव लाघवाद्वरमित्याशङ्कामपनेतुं तदावश्यकत्वं तावदाह ।। **द्वे इति** ।। **प्रसज्यत इति** ।। द्वित्वस्य व्यक्तिद्वयमात्रवृत्तित्वादिति भावः । ननु द्वे **तत्वे** इत्यपि न वक्तव्यम् । इतिशब्दाध्याहारमन्तरेणैव **स्वतन्त्रमस्वतन्त्रं च तत्व**मित्यन्वयोपपत्तेः । न च 'द्रव्यादयः सप्त पदार्थाः' इत्यादिवदुक्ताधिकतत्वव्यवच्छेदाय सङ्ख्यानिर्देशावश्यकतेति वाच्यम् । स्वातन्त्र्यास्वातन्त्र्ययोर्भावाभावरूपत्वेन तदुभयानाश्रयत्वशङ्काऽयोगात् । मैवं, नित्यानित्यवत्तदुभयानाश्रयतत्वान्तरसम्भावनाभङ्गाय तदावश्यकत्वात् ।। **प्रमाणविरोध इति** ।। परतन्त्रानेकत्वग्राहकप्रत्यक्षादिविरोध इत्यर्थः । **द्विविध**मित्युक्तौ च द्वित्वस्य विधापदार्थप्रकारान्वयान्नोक्तविरोध इति भावः । ततः किं प्रकृते? इति । अत आह ।। **ततश्चेति** ।। **अनेकं स्यादिति** ।। **अनेक**मिति शङ्का स्यादित्यर्थः । **इदमुक्तं स्व**तन्त्रो भगवान्विष्णुरित्येतदुक्तम् । अनेन च स्वतन्त्रस्यैकत्वलाभादनेकत्वशङ्कानिरास इति भावः । एतत्कल्पे च स्वतन्त्रमेकमेवेत्येव वक्तुमुचितमित्यपरितोषादाह ।। **अथ वेति** ।। प्रधानं जडप्रकृतिः । शैवादयः शिवादिकमङ्गीकुर्वन्तीत्यादि शब्दार्थः ।। **तन्निरासायेति** ।। भगवत्त्वाद्विष्णुरेव स्वतन्त्रो न प्रधानादिरभगवत्त्वात् । अन्यथा 'न ते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमाप' इत्यादिश्रुतिविरोधः इत्यादिरीत्या परपक्षनिरासेन स्वपक्षस्थापनायेत्यर्थः । अत्र मूलस्यानेकार्थत्वमभिप्रेतम् । एवमन्यत्राप्यवधेयम् ।

अस्वतन्त्रतत्वविभागः

(टि.) द्विविधमित्युक्त्या परतन्त्रतत्वमवान्तरभेदवदिति सूचितम् । तत्कथं? इति । तत्राह

**.......भावाभावौ द्विधेतरत् ।**

**इतरत्स्वन्त्रात् अस्वतन्त्रतत्वं द्विधा । कथं? भावोऽभावश्चेति । अभावप्रतीतिर्भावप्रतीत्यधीना नियमेनेति प्राधान्यात्प्रथमं भावस्योद्देशः । प्रथमप्रतीतावस्तीत्युपलभ्यते यः स भावः । यश्च प्रथमोपलब्धौ नास्तीति प्रतीयते सोऽभावः । कुत एतत्? स्वरूपेण हि भावाभावौ विधि-निषेधात्मानौ । रूपान्तरेण तु निषेध विधिरूपौ । तत्रापातजायां संविदि स्वरूपमेव भासते । द्वितीयादिप्रतीतौ रूपान्तरम् । कार्यगम्यत्वा-त्सामग्रीभेदस्य । तथा च प्रतीतिः 'अस्त्यत्र घटः, स न शुक्लः' इति । एव 'नास्त्यत्र घटः, अस्ति घटाभावः' इति ।**

(रा.टि.) उत्तरवाक्यमवतारयति ।। **इत्युक्त्येति** ।। विधार्थे विहितधा-प्रत्ययान्तपदोक्त्येत्यर्थः । **तत्कथ**मिति प्रश्नः । **तत्र** एवं प्रश्न सति परिहार-माहेत्यर्थः । इतिपदाध्याहारेणाह ।। **भावोऽभावश्चेतीति** ।। भावस्य प्रथमोद्देशे निमित्तमाह ।। **अभावप्रतीतिरिति** ।। **नियमेनेति** ।। प्रतियोगि-ज्ञानं विना अभावप्रतीतेः कदाप्यनुदयादिति भावः ।

**.... .... ... .........प्रथमप्रतिपत्तिषु ।**
**निषेधविधिरूपत्वं भावाभावत्वमत्र हि ।।**

इति युक्तिपादीयानुव्याख्यानानुरोधेनाह ।। **प्रथमप्रतीताविति** ।। विषयि-विषययोराधाराधेयभावो गौण इत्यभिप्रेत्य सप्तमीप्रयोगः ।। **कुत एतदिति** ।। **एतत्** भावाभावव्यवस्थाकल्पनं । **कुतः** कुतो मानादित्यर्थः । घटादे-र्भावस्यापि पटादिर्नेति निषेधधीविषयत्वादितिः भावः । भावाभावधीरेव प्रमाणम् । तथा प्रतीतौ च तत्तत्स्वरूपमेव नियामकमिति भावेनाह ।। **स्वरूपेणेति** ।। **विधीति** ।। अपरप्रतिक्षेपपरप्रतिक्षेपरूपावित्यर्थः ।

नन्वस्तु नाम भावाभावयोः स्वरूपेण विधिनिषेधरूपता च । तथापि किं प्रकृते? इति । अत आह ॥ **तत्रेति ॥** नन्वापातजायां संविदि स्वरूपमेवावभासते । रूपान्तरं तु द्वितीयादिप्रतीतौ भासत इति कुतः? रूपद्वयप्रतीतिसामग्रीभेदे मानाभावादिति । अत आह ॥ **कार्यगम्यत्वादिति ॥** प्रतीतिरूपकार्यभेद एव तत्सामग्रीभेदे मानमिति भावः । पूर्वापरभावापन्नोक्तरूपद्विविधप्रतीतिरूपकार्यगम्यत्वाद्भावाभावप्रतीतिद्वयसामग्री भावस्यादौ विधिरूपप्रतीतिं जनयित्वा पश्चान्निषेधरूपप्रतीतिं जनयति । अभावप्रतीतिसामग्री तु भावप्रतीतिवैपरीत्येन अभावप्रतीतिं जनयतीत्येवं भावाभावप्रतीतिसामग्र्योर्भेदस्येति वा, भवस्यादौ विधिप्रतीतिसामग्री पश्चान्निषेधप्रतीतिसामग्रीत्यादिरूपेण सामग्रीभेदस्येति वा अर्थः । कार्यमेवा सिद्धमिति । अत आह ॥ **तथा चेति ॥** उक्तरूपेणास्ति च प्रतीतिरित्यर्थः ।

**(श्री. टि.) द्विविधमित्युक्त्येति ।** द्विविधमित्यनेन स्वतन्त्रास्वतन्त्रतत्वयोर्विभाजकोपाधित्वरूपप्रकारत्वस्योक्तत्वात् स्वतन्त्रपरतन्त्रयोरवान्तरभेदोऽस्तीति सूचितम् । प्रकारत्वस्य स्वाश्रयव्यक्तिभेदं विनानुपपत्तेः । यद्वा परीक्षकैस्तत्रैव हि प्रकारपुरस्कारेण विभागः कथ्यते यत्र प्रकारिणां बहुत्वेन विभागः कर्तुं न शक्यते । यथा द्विविधं केवलं चतुर्विधमित्यादौ । एवं च प्रकृते प्रकारपुरस्कारेण द्वैविध्यकथने प्रकारिबहुत्वं प्राप्तमेवेति तेन सूचितमिति द्रष्टव्यम् ॥ **सूचितमिति ।** सूचनाभावे श्रोतुरवान्तरभेदवत्ताज्ञानाभावेन तत्कथमित्याकाङ्क्षाया अनुदयात्तं प्रत्यवान्तरभेदकथनमसङ्गतं स्यादिति भावः। एवमुत्तरत्रापि ज्ञातव्यम् । भावस्य प्रथममुद्देशे प्राधान्यं निमित्तम् । प्राधान्येऽपि किं निमित्तमित्याशङ्कायामाह ॥ **अभावप्रतीतिरिति ।** प्रतियोगि ज्ञानाधीनत्वादभावज्ञानस्येति भावः । यथाहुः । सञ्ध्यामधिकरणप्रतियोगिभ्यामभावो निरूप्यत इति ।

भावाभावयोर्लक्षणं स्वयं दर्शयति ॥ **प्रथमप्रतीतावित्यादिना ।** भावलक्षणे अभावेति व्याप्तिपरिहाराय प्रथमप्रतीताविति विशेषणम् । अभाव-

लक्षणे भावेति व्याप्तिपरिहाराय प्रथमोपलब्धावित्युक्तम् । एवं प्रथमेति विशेषणादुभयत्र परस्परातिव्याप्तिपरिहारं प्रश्नपूर्वकमुपपादयितुमाह ॥ **कुत एतदित्यादिना** । लक्षणद्वयेऽपि प्रथमेति विशेषणं कस्माद्दत्तमित्यर्थः । उत्तरमाह ॥ **स्वरूपेण हीत्यादिना । रूपान्तरेण** धर्मान्तरेण ॥ **निषेधेति ।** भावोऽपि निषेधरूपः अभावोऽपि विधिरूप इत्यर्थः ॥ **आपातजाया-मिति ।** निर्विकल्पकरूपायामित्यर्थः । प्राथमिकज्ञान इति यावत् ।

ननु सामग्रीवैचित्र्यकल्पने किं मानमित्यत आह ॥ **कार्येति** ॥ कार्यवैचित्र्यमेव दर्शयति ॥ **तथाच प्रतीतिरिति** ॥ **स न शुक्ल इति ।** इदं ज्ञानं न प्राथमिकं प्रतियोगिज्ञानादिविलम्बादिति भावः ॥ **अस्ति घटाभाव इति ।** घटाभाववद्भूतलमित्यर्थः । अभावविशेषणकं सत्ताविशेष्यकं ज्ञान-मेतत् । इदमपि ज्ञानं न प्रथमभावि । विशेषणस्याभावस्य पूर्वमज्ञानादिति भावः । नास्त्यत्र घट इति ज्ञाने तु घटाभावस्य विशेष्यत्वात्तज्ज्ञानस्या-कारणत्वान्न विलम्ब इति ध्येयम् ॥

**(स.टि.) सूचितमिति** ॥ उक्तप्रनाड्येति भावः । कथं किं प्रकारोपेत-मित्यर्थः । अनतिप्रसक्तये इतरदित्यस्यावधिमभिधत्ते ॥ **स्वतन्त्रादिति** ॥ अनन्वयशङ्कां निराकर्तुमिति शब्दाध्याहारेण मूलम् योजयति ॥ अस्वतन्त्रे-त्यादिना ॥ नन्वजाद्यन्ततयाऽभावभावाविति वक्तुं शक्यमिति चेन्न । ततोऽपि परात्पाजादि शास्त्रेण भावाभावावित्येव निर्देशस्यौचित्यात् । ननु ''समुद्राभ्राद्धः लक्षणहेत्वोःक्रियायाः'' इत्यादौ व्यभिचारात्तदनित्यताया-स्तान्त्रिकैस्तत्र तत्रोक्तेः पुनः प्रत्यावर्तत आशङ्केति चेत्तर्हि ''अभ्यर्हित'' मिति वार्तिकेन भावस्याभावज्ञानजनकज्ञानविषयत्वलक्षणप्राधान्यापरपर्याय शब्दवाच्याभ्यर्हितत्वेन पूर्वप्रयोगार्हतेत्याह ॥ **अभावेत्यादिना** ॥

न च ''श्वयुवमघोनामतद्धित'' इति निर्देशादिदमप्यनित्यमिति पुनरन-वधानं मानसस्य मा च भूत् । सैव शङ्का पिशाचीमन्थरं प्रवर्त्स्यत इति

वाच्यम् । यथाऽल्पाच्तरशास्त्रस्य बहुषु स्थलेषु व्यभिचारस्तथा नाभ्यर्हित-शास्त्रं व्यभिचचार । व्यभिचचार च क्वचिदेवेति सापवादमेदिनी-मपहायाविहाय त दितरत्सामान्यशास्त्रं मान्यम् स्वार्थसाधन इति तद्भाव-बोधनसम्भवात् । तथा च लोकालोकयोः ''सर्वानानय नैकं मैत्रम्, न हिंस्यात्सर्वाभूतानि अग्नीषोमीयम् पशुमालभेते''त्यादौ यथैकस्य मैत्रस्यापवादादानयनाभावेऽपि तदितरसर्वानयनम्, यथा वाऽग्नीषोमीयपशोः शास्त्रविशेषाद्धिं साकर्मत्वेऽपि तदितरहिंसाकरणमर्थः सामान्यसमयस्येति दृष्टं तथाऽत्रेति नानुपपत्तिः । यथोक्तमनुव्याख्याने

**उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् ।**
**व्यभिचार्यपवादेन मानमेव भविष्यति ।।** इति ।

इदमप्यनित्यमिति शब्देन्दुशेखर वैखर्यपि प्रकरणानित्यत्वविज्ञप्त्यै प्रवृत्ता । न तु क्वचिदपि नैतच्छास्त्रं प्रवर्तत इति भावमावेदयितुमिति न तद्विरोधः । अन्यथा वासुदेवार्जुनाभ्यामित्यादि सूत्रकृदाज्ञावज्ञानप्रसङ्गात् । अतोऽभ्यर्हितत्वं मनसि कृत्वा यत् ''प्राधान्या''दित्यभ्यधात् तत्साध्विति दिक् ।

अभावत्वेनाभावप्रतीतिरत्र विवक्षिता । तेन प्रमेयत्वेनाभावप्रतीतेः प्रति-योगिभावप्रतीत्यनधीनत्वेऽपि न दोषः । सा च प्रतीतिः साक्षात्काररूपा । तेनाभावपदाज्ज्ञायमानेऽभावबोधे तदपेक्षाभावेऽपि न नियमस्योक्तस्याति-क्रमः । भावस्याप्यभावविलक्षणत्वेन प्रतीतिरभावरूपप्रतियोगिसापेक्षेत्य-भावस्यापि प्राधान्यात्स एवादौ किम् नोद्दिश्यत इत्यत आह ।। **नियमेनेति ।।** तथा च यथाऽभावप्रतीतेर्नियमेन भाव प्रतीत्यनधीनत्वं तथाभावप्रतीते-र्नियमेना भावप्रतीत्यन धीनत्वाभावान्न तस्यादावुद्देश इति भावः । ननु प्रागभावध्वंसप्रतीतेः प्रतियोगिप्रतीत्य धीनत्वेऽप्यत्यन्ताभावप्रतीतेः कथं प्रतियोगिप्रतीत्यधीनत्वम् । तत्प्रतियोगिनोऽत्यन्तासत्त्वादिति चेन्न । तत्रापि

अप्रसक्तस्य प्रतिषेधायोगेन प्रसक्तिरूपाया भ्रान्तेश्च त्वया ये अधिष्ठानप्रधाने उच्येते तद्रूपभावप्रतीत्य धीनत्वादिति ब्रूमः ।

भावाभावयोः क्रमेण प्रतीतिघटिते लक्षणे आह ॥ **प्रथमप्रतीतावित्यादिना ॥** मूल उद्देशेनैव लक्षणस्य सूचितत्वान्न तदनुक्तिर्दोष इति भावः । अभावे भावे च द्वितीयप्रतीतावस्ति नास्तीति विषयत्वस्य सत्त्वात्परस्परमतिव्याप्तिवारणाय प्रथमेति विशेषणम् । न च शुक्तिरूप्यस्यापि प्रथममस्तीत्युपलभ्यमानत्वेन तत्रातिव्याप्तिः । न च तत्रास्तित्वमेव न प्रतीयत इति वाच्यम् । तथात्वे प्रवृत्त्यभावापत्तेरिति । प्रतीतेः प्रमात्वविवक्षणाद्वा ''उपलभ्यत'' इत्युक्त विषयत्वस्य ज्ञानासाधारण कारणसन्निकर्षाश्रयत्वरूपस्य विवक्षणाद्वा नोक्तदोष इत्यत्र तात्पर्यात् ।

ननु किम् प्रतीतौ प्रथमं योऽस्तीत्युपलभ्यत इति प्रथमत्वं कालविशेषणम् किम् वा प्रथमाया प्रतीतिरिति प्रतीतिविशेषणम् । नाद्यः । बुद्धेर्विरम्य व्यापाराभावात् । द्वितीयेऽपि किमिह जन्मनि स्वविषयिका या प्रतीतिः सा विवक्षिता किम् वैकसामग्रीजन्यासु प्रथमा या प्रतीतिःसा वा । अथवा यदा यदा स्वयम् जायते तदा तदा स्वविषयकं ज्ञानद्वयमस्ति । आपातजं विमर्शजमिति । तत्रापातजा या संवित्सा वा । नाद्यः । गिरिवर्तिनो गजाभावस्य ज्ञानात्पूर्वमेव जातायां यत्प्रेमयम् तदस्तीति सामान्याकारेण प्रमेयमात्र विषयायां वन्यगजाभावस्य प्रथमप्रतीतेस्तत्र भावाभावलक्षणयोरतिव्याप्त्यव्याप्त्यापत्तेः । न द्वितीयः । एकसामग्र्या अनेकज्ञानजनकत्वायोगात् । सामग्रीभेदाभावे कार्यभेदस्याकस्मिकत्वप्रसङ्गात् । तृतीयेऽप्यस्ति नास्तिप्रतीती के इमे । किमस्ति नास्तीति व्यवहारोत्पादिके किम् वाऽस्तिनास्तिपदार्थविषयिके यद्वाऽस्तित्व नास्तित्वप्रकारिके । नाद्यः । अव्याप्तेः । ज्ञानस्य व्यवहारजनकत्व नियमाभावेनास्तीत्यदिप्रतीतिविषयत्वाभावात् । उत्पन्नस्यापि ज्ञानस्य व्यवजिहीर्षाभावे व्यवहारजनकत्वाभावसम्भवात् । न द्वितीयः । भावाभावलक्षणयोरतिव्याप्त्यसम्भवयोरापातात् ।

भावाभावयोरपि नास्त्यस्ति पदार्थत्वात् । अन्यथा पश्चादपि कथन्तयोस्ते स्याताम् । तृतीयेपि के इमे अस्तित्वनास्तित्वे । किम् भावत्वाभावत्वे किम् वा सत्त्वनिषेधत्वे । आद्य आत्माश्रयः । द्वितीये सत्त्वम् स्वरूपसत्त्वमेव वक्तव्यम् । अनुगतसत्तायाः सिद्धान्तेऽनङ्गीकारात् । ततश्च स्वरूपसत्त्व-निषेधत्वयोरभावे भावे च विद्यमानत्वात्तत्स्वरूपप्रतीतौ प्रतीयमानत्वात् परस्परमतिव्याप्तिः स्यात् । स्वरूपप्रतीतावप्रतीयमानत्वेऽव्याप्तिः स्यात् । न च उभयत्र सत्त्वनिषेधत्वे विद्येते, प्रतीयेते च । परन्तु भावेस्वरूप सत्त्वमेव प्रथमतः प्रतीयते । निषेधत्वम् तु पश्चात् । एवमभावेऽपि निषेधत्वमेव प्रथमतः प्रतीयते न सत्त्वमिति वाच्यम् । अत्र नियामकाभावादित्याशयेन शङ्कते ।। **कुत एतदिति ।।** परिहरति ।। **स्वरूपेण हीति ।।** धर्मितयेत्यर्थः । **रूपान्तरेण** अभावधर्मतयेत्यर्थः । कथमनेनोक्तशङ्कापरिहार इति चेत् इत्थम् । प्रथमत्वम् प्रतीतौ विशेषणम् । तत्र यदा यदा स्वयम् ज्ञायते तदा तदा स्वविषयकम् ज्ञानद्वयमस्ति आपातजम् विमर्शजम् चेति । आपातज-प्रतीतिरेवेहोक्त प्रथमत्वविशेषितप्रतीतिशब्दवाच्या । न च के इमे इति तत्पक्षविकल्पदोषः । अस्तीत्याकारिका प्रतीतिरस्तीति प्रतीतिरिति वदामः । न चात्रास्तीत्याकारकत्वं भावत्वघटितम् । येनात्माश्रयः स्यात् । किंत्व-खण्डस्यैव ज्ञानधर्मस्य तस्योररीकरणात् । न चात्र प्रमाणाभावः । भ्रम-प्रमासाधारण्येनास्ति रजतमिति ज्ञानानन्तरं ममात्र रजतमस्तीति ज्ञानं जातमित्यबाधितानुभवस्य तत्र मानत्वात् । उक्तं च तत्वोद्द्योतटीकायाम् ''रजतज्ञानस्य शुक्तिविषयकत्वम् संविद्विरुद्धमिति चेन्न । रजतज्ञानस्येति कोऽर्थः । यदि रजतविषयस्येति तदाऽसिद्धिः । यदा रजतमिति ज्ञानस्येति तदा परस्यैव संविद्विरोधः । यदिदम् रजतमित्यमनिषम् सा शुक्तिकैवेत्य-बाधितप्रतीतेः । यदाकारम् यद्विज्ञानमिति तु प्रमितिनिष्ठेयम् व्यवस्थे''ति । उक्तं च तत्रैवोत्तरत्र ''न हि तदाकारत्वम् तद्विषयत्वमिति पर्यायावेतौ । किम् नाम सामान्यविशेषवचना'' विति । उक्तं च तत्वनिर्णयटीकायाम् ''यथा हि

सत्यरजते इदम् रजतमित्यभिज्ञाकारमेव ज्ञानमुत्पद्यते तथा भ्रान्तरजतेऽपि इदम् रजतमित्यभिज्ञाकारमेव ज्ञानमुत्पद्यते । तत्केन प्रमाणेन तस्यान्यत्र सत्त्वम् व्यवस्थाप्यत'' इति । एवं चाविमर्शजास्तीत्याकारक ज्ञानविषयत्वं भावस्य लक्षणम् । नास्तीत्याकारकापातजज्ञानविषयत्वम भावस्य लक्षण-मित्युक्तं भवति ।

यद्वा आपातजप्रतीतावस्तीत्युपलभ्यते यः स भाव इत्यादौ के इमे अस्ति नास्तीति प्रतीती इत्यादिना विकल्पितेषु पक्षेषु अस्तित्वनास्तित्वप्रकारिके इति तृतीयकल्पम् स्वीकुर्मः । न च तत्रास्तित्वनास्तित्वे दुरुपपादे । अपर-प्रतिक्षेपत्वपरप्रतिक्षेपत्वयोरेव विधित्वापरपर्यायस्वरूपसत्त्वनिषेधत्वपदार्थ-त्वात् । एवं चापाततोऽपर प्रतिक्षेपरूपतया प्रतीयमानत्वं भावस्य लक्षणम् । आपाततः परप्रतिक्षेप रूपतया प्रतीयमानत्वमभावस्य लक्षणमित्युक्तम् भवति ।

नन्वेवं चेदुपाधिखण्डनमन्दारमञ्जर्यामेतत्सर्वं वैतण्डिकमतमाशङ्क्य कथमत्र टीकोक्तादन्यथोक्तमिति चेन्न । भावानवबोधात् । अयं भावः । द्विविधं हि भावाभावयोर्लक्षणम् । प्रमेयरूपं प्रमाणरूपं चेति । यथोक्तं युक्तिपादीय

**विशेष्यतैव धर्मित्वं प्रथमप्रतिपत्तिषु ।**
**निषेधविधिरूपत्वं भावाभावत्वमत्र हि ॥**

इत्यनुव्याख्यानसुधायाम्, ''अयमर्थः । किं भावाभावनियमनिबन्धनं प्रमेयरूपमन्विष्यते प्रमाणं वा । आद्यस्योत्तरार्धमुत्तरम् । यद्यपि भावात्मका घटादयः, प्रागभावादयश्च । तथाप्यत्र पदार्थसार्थे यः पिण्डो विधिधर्मिको घटादिः स भावः । यस्तु निषेधधर्मिकः प्रागभावादिः सोऽभाव इति व्यवस्थोपपद्यते । अभेदेऽपि धर्म धर्मिभावो विशेषशक्त्या सङ्गच्छत इत्युक्तमेव । द्वितीयस्योत्तरं प्रथमप्रतिपत्तिष्विति । प्रथमं यो विधितया

परप्रतिक्षेपरूपतां विना प्रतीयते स घटादिर्भावः । यस्तु निषेधतया परप्रतिक्षेपेण प्रतीयते प्राग भावादिः सोऽभाव इत्युत्तरार्धेनैकवाक्यतया योज्यम् । घटो हि प्रथमं विधित्वेन धर्मिरूपेण प्रतीतोऽनन्तरं पटो न भवतीति पटनिषेधात्मतया प्रतीयते । प्रागभावादिरपि प्रथमं निषेध धर्मिस्वरूपेणावगतोऽनन्तरं प्रमेय इति विधितया प्रतीयत इति सकल-प्रतिपत्तृप्रसिद्धमिति बहुवचनहिशब्दाभ्यां द्योतयती''ति ।

व्याख्यातानि चैतानि वाक्यान्युक्तलक्षणोपपादनमुखेन कृतशङ्कानिवर्तक-तया शेषवाक्यार्थचन्द्रिकादिषु । एवं च मन्दारमञ्जर्यां वैतण्डिकशङ्काविषयस्य प्रमाणोपहितलक्षणस्य पराप्रतिक्षेपत्वादिरूपविधित्वापरपर्यायास्तित्वादि-घटिततया तज्ज्ञानाधीनज्ञानत्वेन प्रमेयलक्षणनिरूपणेनैवैतदपि समाहित प्रायमित्याशयेन पराप्रतिक्षेपत्वतत्प्रतिक्षेपत्वरूपे भावत्वाभावत्वे उच्येते ।

अभावत्वावच्छिन्नाधारतानिरूप्याधेयत्वाश्रयान्यत्वप्रतियोगित्वं भावत्वमित्यादिना परिष्कृते । अतो नोक्तविरोध इति । ननूक्तरूपे अपि विधिनिषेधत्वे प्रत्येकं भावे अभावे च विद्येते इति सिद्धान्तः । ततश्च ते अपि स्वरूपप्रतीतौ यदि प्रतीयेते तदोक्तरूपविधित्वस्य भाव इवाभावेऽपि प्रत्येतव्यत्वात् उक्तरूपनिषेधत्वस्याप्यभाव इव भावेऽपि प्रत्येतव्यत्वादति-व्याप्तिः । यदि च स्वरूपप्रतीतौ न प्रतीयेते तदा त्वव्याप्तिः । भाव एवोक्तरूपं विधित्वमेव प्रथमं प्रतीयते अभावे चोक्तरूपं निषेधत्वमेव प्रथमं प्रतीयत इत्यत्र नियामकाभावादित्यतः भावाभावयोरभावभावधर्मवत्तया प्रतिक्षेपाप्रतिक्षेपात्मकत्वेऽपि धर्मिरूपेणाप्रतिक्षेपप्रतिक्षेपात्मकत्वादापात-जायां संविदि भावे घटादावप्रतिक्षेपधर्मिभान सामग्र्या अभावे च प्राग-भावादौ प्रतिक्षेपरूपधर्मिभानसामग्र्याश्च सद्भावेऽपि तदा प्रतिक्षेपाप्रतिक्षेप-रूपधर्मभानसामग्रीविरहेणोक्तरूपविधिनिषेधयोरेव भाननियमोपपत्तेर्नाव्याप्ति रित्याशयवानापातजायां संविदि रूपान्तरभानसामग्रीविरह एव द्वितीयादि-प्रतीतौ तत्समावेशश्च कुत इत्यतः कार्यमेव तत्र प्रमाणमित्यभिप्रेत्य भाव-

विषयमभावविषयश्च प्रतीतिद्वयं क्रमेणोदाहरन्कार्यमेव दर्शयति ।। **कार्यगम्य-त्वादित्यादिना अस्ति घटाभाव इतीत्यन्तेन ।।**

न च भावलक्षणस्य घटाभावोऽस्तीति वाक्यात्प्रथमतोऽस्तीत्युप लभ्यमाने भावेऽतिव्याप्तिरिति वाच्यम् । तत्रापि घटाभाव इत्यवान्तर वाक्यार्थभूत प्रतिषेधाकारप्रतीत्युत्तरकालमेव तदस्तित्वप्रतीतेः । अत एव घटाभावो नास्तीति वाक्यात्प्रथममेव घटस्य नास्तित्वाकारेण प्रतीतेर भाव-लक्षणस्य तत्रातिव्याप्तिरिति परास्तम् । नन्वेव मप्यभावलक्षणस्य भावेऽति-व्याप्तिः । तथा हि । भेदो हि धर्मिस्वरूपमेव । स च धर्मिग्रहेण गृह्यत एव । यथोक्तमनुव्याख्याने

**स्वरूपं वस्तुनो भेदो यन्न तस्य ग्रहे ग्रहः** । इति ।

न च प्रथमप्रतीतौ स प्रतियोगिकप्रतिषेधाकारेण प्रतीयमानत्वं विवक्षितम् । तथा च घटप्रतीतौ स्वरूपाकारेण भेदस्य प्रतीतावप्युक्तरूपेणाप्रतीतेर्नाति-व्याप्तिरिति वाच्यम् । प्रथममेव सर्वविलक्षणत्वेन वस्तुप्रतीतेरङ्गीकृतत्वात् । प्रायःसर्वतो विलक्षणं हि पदार्थस्वरूपं दृश्यत इत्यन्यत्रोक्तेः । तथा च कथं नातिव्याप्तिरिति चेत् उच्यते । विशेषतः प्रतिषेधाकारत्वेन प्रतीयमानताया एवाभावलक्षणत्वेन विवक्षितत्वात् । तथा च स्वरूपेण भेदप्रतीतावपि विशेषरूपेण भेदप्रतीत्यभावान्नातिव्याप्तिः । अत एवानन्तरप्रतीतिरिह न शुक्ल इति । सुधायाम् च ''पटो न भवती''ति विशेषाकारेणैवाभिहिता । उक्तं चैतदनुव्याख्याने

**को विरोधः स्वरूपेण प्रतीतो भेद एव तु ।**
**अस्यामुष्मादिति पुनर्विशेषेणैव गृह्यते ।।** इति ।

एतेन स्वरूपभेदस्य प्रतीतिभेदे नियामकत्वात्प्रतीत्युपाधिकस्वरूप-भेदादेव प्रतीतिभेद इति कथं नेतरेतराश्रय इति निरस्तम् । उदाहृतसुधारीत्या प्रतीत्यनुपाधिक भावस्वरूपस्य वक्तुं शक्यत्वादित्यलं प्रपञ्चेन । कार्यगम्य-त्वादित्युक्तम् । किन्तत्कार्यमित्यत आह ।। **तथा च प्रतीतिरिति ।।**

(पां.टि.) **द्विविधमित्युक्त्येति** । 'स्वतन्त्रमस्वतन्त्रश्चेति द्विविधम्' इत्युक्त्या तत्त्वस्य स्वातन्त्र्यादिना द्वैविध्यमेव उक्तम्, न तु स्वतन्त्र-परतन्त्रयोः भावाभावत्वादिना अवान्तरभेदोऽपि; तथापि 'द्विविधम्' इत्यनेन स्वातन्त्र्यपारतन्त्र्यरूपप्रकारद्वित्वं वदता 'प्रकारयोरेव द्वित्वम्, न तु व्यक्तीनाम् । तत्रापि अनयोरेव प्रकारयोः द्वित्वम्, अन्येषाम् अवान्तर-प्रकाराणां बहुत्वम् अस्त्येव' इति सूचितम् । अन्यथा 'स्वतन्त्रमस्वतन्त्रश्चेति द्वे तत्त्वे'इत्येव ब्रूयात् । तत्र च 'स्वतन्त्रम् एकम्' इत्युक्त्या 'स्वतन्त्रा-वान्तरभेदो नास्ति' इति सूचितमेव । परतन्त्रस्यापि भेदाभावे तत्सूचनस्य निर्विषयत्वमेव स्यादिति भावः । विष्णोरपि परतन्त्रात् इतरत्वेन तस्यैवायं विभागः इति मन्दां शङ्कां परिहरति **इतरदिति** । इतरत् भावाभावौ द्विधा' इत्यन्वयानुपपत्तेः इति शब्दाध्याहारेण मूलं व्याचष्टे **भावोऽभावश्चेति** । ननु भावाभावयोर्मध्ये भावस्यैव प्रथमोद्देशः किं निमित्तम्? न च अभावापेक्षया प्राधान्यमेव निमित्तम् । तत्प्रकारानिरूपणेन तदसिद्धेः इत्यत आह **अभाव-प्रतीतिरिति** ।

ननु घटाद्यभावस्य घटादिरूपभावनिरूप्यत्वात् भावस्य प्राधान्यम् इति न युक्तम्, भावस्यापि घटादेः स्वाभावाभावत्वेन निरूपणस्य अभाव-प्रतीत्यधीनत्वस्य तुल्यत्वात् । न च 'घटाभावाभावत्वेन घटप्रतीत्यर्थं घटाभावप्रतीत्यपेक्षायामपि घटत्वेन तत्प्रतीतौ तदनपेक्षणात्, न भावस्य अभावनिरूप्यत्वम्' इति वाच्यम्, अभावस्यापि प्रमेयत्वादिनाप्रतीतौ तदन-पेक्षणेन अभावस्यापि भावनिरूप्यत्वनियमासिद्धेः इति चेत्; न, अभावत्व-प्रकारकाभावप्रतीतेः भावप्रतीत्यधीनत्वनियमस्य विवक्षितत्वेन अनति-प्रसङ्गात् । न च एवमपि अभावस्य प्रागभावादेः प्रतियोगिरूपभाव-ज्ञानाधीननिरूपणत्वेन तत्प्रतीतेः भावप्रतीत्यधीनत्वेऽपि असत्प्रतियोगिका-भावस्य अत्यन्ताभावस्य प्रतियोगिभूतअसन्निरूप्यत्वेन तस्य भावत्वा-भावात्, न भावत्वप्रकारज्ञानस्यापि भावप्रतीत्यधीनत्वनियमः । इति

वाच्यम्। प्रतियोगिनः असत्त्वेऽपि अधिकरणस्य सत्त्वेन अधिकरणरूप-भावज्ञानस्य तत्रापि अपेक्षणात् प्रतियोगिज्ञानस्य इव अधिकरणज्ञानस्यापि ज्ञानजनकत्वात्। अप्रसक्तस्य निषेधानुपपत्त्या प्रसक्तेः अवश्यं वाच्यत्वात्, तस्याश्च भ्रान्तितया अधिष्ठानप्रधानीभूतभावनिरूप्यत्वात्। साक्षात् पारम्पर्येण वा अभावप्रतीतेः भावप्रतीत्यधीनत्वमस्त्येव इति न दोषः। इत्यप्याहुः।

यथोद्देशं भावाभावलक्षणे आह **प्रथमेति**। भावस्य पटादेः 'शुक्लो न' इति नास्तित्वेन उपलभ्यमानत्वात्। अभावस्यापि 'घटाभावः अस्ति' इति अस्तित्वेन उपलभ्यमानत्वात्। अव्याप्तिः परस्परातिव्याप्तिश्च स्यातामित्यतः प्रथमप्रतीतौ इति विशेषणम्। ननु किं 'प्रतीतौ प्रथमं योऽस्ति' इत्येवं प्रथमग्रहणं कालविशेषणम् अभिमतम्? किं वा 'प्रथमा या प्रतीतिः' इति प्रतितिविशेषणम्? नाद्यः। बुद्धेः विरम्यव्यापाराभावात्। द्वितीयेऽपि किमिह जन्मनि स्वविषयिका या प्रतीतिः सा विवक्षिता किं वा एकसामग्रीजन्यासु स्वविषयिकासु या प्रथमप्रतीतिः सा ? अथवा यदा यदा स्वयं जायते तदा तदा स्वविषयकं ज्ञानद्वयमस्ति आपातजम्, विमर्शजञ्च; तत्र आपातजा या संवित् सा ? नाद्यः। गिरिदरीविवरवर्तिनः गजाभावस्य ज्ञानात् पूर्वमेव जातायाम् 'यत्प्रमेयम् तदस्ति' इत्यस्याम् सामान्याकारेण प्रमेयमात्र-विषयिकायाम् वन्यगजाभावस्य प्रथममस्तित्वप्रतीतेः भावाभावलक्षणयोः अतिव्याप्तिप्रसङ्गात्। न द्वितीयः। एकसामग्र्या अनेकज्ञानजन्यत्वायोगात्, सामग्रीभेदाभावे कार्यभेदस्य आकस्मिकत्वप्रसङ्गात्। तृतीयेऽपि इमे अस्ति नास्ति इति प्रतीती किम् अस्ति, नास्ति इति व्यवहारोत्पादिके? किं वा अस्ति नास्ति पदार्थविषयिके ? किं वा अस्तिनास्तित्वप्रकारिके ?

नाद्यः। अव्याप्तेः। ज्ञानस्य व्यवहारजनकत्वनियमाभावेन विवक्षितस्य 'अस्ति' इत्यादिप्रतीतिविषयत्वस्य अभावात्। उत्पन्नस्यापि ज्ञानस्य व्यवहार जिहीर्षाभावे व्यवहाराजनकत्वात्। न द्वितीयः। भावाभावलक्षणयोः

अतिव्याप्ति-असम्भवापातात्। अभावस्य अस्तिपदार्थत्वात्। अन्यथा कथं पश्चादपि 'घटाभावः अस्ति' इति प्रतीतिः? तृतीयेऽपि के इमे अस्ति-नास्तित्वे। भावाभावत्वे? सत्त्वनिषेधत्वे वा? आद्ये अन्योन्याश्रयः। द्वितीये। सत्ताऽनङ्गीकारेण स्वरूपसत्त्वनिषेधत्वरूपे उभे अपि प्रत्येकं भावाभावे च विद्येते इति सिद्धान्तः। एवञ्च ते स्वरूपप्रतीतौ एव प्रतीयेते? उत न ? इति वक्तव्यम्। आद्ये स्वरूपसत्त्वस्य भावे इव अभावेऽपि प्रत्येतव्यत्वात्। निषेधत्वस्य च अभावे इव भावेऽपि प्रत्येतव्यत्वादति-व्याप्तिः। द्वितीये तु अतिव्याप्तिः। न हि 'भावे एव स्वरूपसत्त्वमेव प्रथमं प्रतीयते। अभावे एव निषेधत्वमेव प्रथमं प्रतीयते' इत्यत्र नियामकमस्ति॥ इति भावेन शङ्कते **कुत इति। एतदिति।** प्रथमप्रतिपत्तौ अस्तीत्युप-लभ्यमानत्वादिकमित्यर्थः। परिहरति **स्वरूपेण हीति॥** हिशब्दो हेतौ। स्वरूपेण धर्मितया इत्यर्थः॥ **रूपान्तरेणेति॥** अभावभावरूपधर्मितया इत्यर्थः॥ **निषेधविधिरूपाविति।** धर्मधर्मिणोः ऐक्यादिति भावः।

**स्वरूपमेवेति।** तदा रूपान्तरसामग्रीविरहादिति भावः॥ **द्वितीया-दीति।** तदा रूपान्तरप्रतीतिसामग्रीसमावेशादिति भावः।

ननु 'आपातजायां संविदि रूपान्तरप्रतीतिसामग्रीविरहः, द्वितीयादि-प्रतीतौ तत्समावेशश्च' कुतः कल्प्यते ? इत्यत आह **कार्येति।** तदेव दर्शयति **तथा चेति।** भावविषयं प्रतीतिद्वयं क्रमेण उदाहरति **अस्त्यत्रेति॥** अभाव-विषयं प्रतीतिद्वयं तथैव उदाहरति **एवमिति।** 'घटाभावोऽस्ति' इत्यादि वाक्यादपि यदा घटाभावः अवगम्यते तदाऽपि अवान्तरवाक्यार्थभूत प्रतिषेधाकारप्रतीत्युत्तरकालमेव तदस्तित्वप्रतीतेः न अभावे भावलक्षणस्य अतिव्याप्तिः इति भावः।

ननु च 'स्वरूपं वस्तुनो भेदो यन्न तस्य ग्रहेऽग्रहः' इति सिद्धान्ते धर्मिग्रहे गृह्यमाणत्वाभिधानात् प्रायः सर्वतो विलक्षणं हि पदार्थस्वरूपं दृश्यते प्रथमत एव सर्वविलक्षणत्वेन वस्तुप्रतीत्यङ्गीकारात् च, भावलक्षणस्य अभावे

अतिव्याप्तिरेव इति चेत् न, प्रथमतो भेदस्य स्वरूपेण प्रतीतौ अपि विशेषप्रतिषेधाकारेण प्रथमप्रतीयमानत्वाभावात् । अत एव उक्तम्-

**को विरोधः स्वरूपेण गृहीतो भेद एव तु ।**
**अस्यामुष्मादिति पुनर्विशेषेणैव गृह्यते ॥** इत्यादि ।

विशेषतः प्रतिषेधाकारेण प्रतीयमानत्वमेव च अभावलक्षणतया अभिमतमिति न अव्याप्तिः इति ध्येयम् । अथापि स्यात् स्वरूपभेदस्य प्रतीतिभेदनियामकत्वात्, स्वरूपभेदाभावे कथं प्रतीतिभेदनियमः ? प्रतीत्युपाधिकस्वरूपभेदादेव प्रतीतिभेदे च स्फुटम् इतरेतराश्रयत्वम्' इति चेत् न अत्र 'पदार्थस्य अर्थे यः पिण्डः विधिधर्मिकः घटादिः सः भावः । यस्तु निषेधधर्मिकः प्रागभावादिः सः अभावः' इति सुधोक्तरीत्या प्रतीत्यनुपाधिकभावाभावस्वरूपस्यापि वक्तुं शक्यत्वात् धर्मद्वारमन्तरेण धर्मिण एव विधित्वं भावत्वम् । धर्मद्वारमन्तरेण धर्मिण एव निषेधश्च अभावः इति । तथा च घटादीनां प्रागभावादीनां भावाभावरूपत्वेऽपि घटादीनां धर्मिरूपेण विधित्वात् भावत्वमेव । प्रागभावादीनां च तद्रूपेण निषेधरूपत्वात् अभावत्वमेवेति युक्त एव भावाभावनियमः । यत् 'घटादिः भाव एव प्रागभावादिः अभाव एव'इति । प्रथमप्रतिपत्तिस्तु भावाभाव-नियामकत्वेन उक्ता । अत एवोक्तम्-

'प्रथमप्रतिपत्तिस्तु भावाभावनियामिका' इत्यादि । इति सर्वम् अनवद्यम् ।

(का.टि.) चतुर्थपादस्यानाकाङ्क्षितत्वं निवारयन्नाह ॥ **द्विविधमिति ॥** प्रकारस्यैव द्वित्वोक्त्या सूचितस्य प्रकार्यनेकत्वस्य स्वतन्त्रे अपवादे इति अस्वतन्त्र एव पर्यवसानादिति भावः । अपेक्षिताध्याहारेण मूलं योजयति ॥ **इतरदिति ॥** द्विवचनार्थद्वित्वमविवक्षितमिति भावेनाह ॥ **भावोऽभावश्चेति ॥** ननु पश्चान्निरूप्यमाणस्य भावस्य कथमादावुद्देशः? इति । इति आह ॥ **अभावप्रतीतिरिति ॥** अभावत्वेनाभावप्रतीतिरित्यर्थः । तेन वस्तुत्वादिना

तत्प्रतीतेर्भावप्रतीत्यनधीनत्वेऽपि न क्षतिः । न चाभावपदजन्याभावप्रतीतौ व्यभिचारः । तस्याः पदशक्त्यादिरूपभावप्रतीत्यधीनत्वात् । अत्यन्ताभावप्रतीतेरपि अधिकरणादिप्रतीत्यधीनत्वात् । 'अभावभिन्नो भावः' इति प्रतीतेरभावप्रतीत्यधीनत्वादभावस्यापि प्राथम्यापत्तिरतो **नियमेनेति** । यत्तु "भावत्वज्ञानं विना भावभिन्नत्वरूपाभावत्वज्ञानासम्भवात्प्रथमं भावस्योद्देश इति" तन्न । वक्ष्यमाणाभावत्वस्य भावभिन्नत्वरूपत्वाभावादिति भावेनोक्तम् ॥ **इति प्राधान्यादिति** ॥ उक्तरूपप्राधान्यमेव प्राथम्यनियामकमित्यर्थः । उद्देशक्रमेण भावाभावयोर्लक्षणमाह ॥ **प्रथमेति** ॥ विधित्वेन प्रथमप्रतीतिविषयत्वं भावत्वम् । निषेधत्वेन प्रथमप्रतीतिविषयत्वमभावत्वमित्यर्थः । विधित्वनिषेधत्वे चाखण्डोपाधी । एतदभिप्रायेणैव **भावत्वादिकमखण्डोपाधिरिति विजयीन्द्रतीर्थश्रीमच्चरणै**रुक्तम् । न तूक्तप्रतीतिविषयत्वरूपे । उक्तप्रतीतौ नियामकाभावप्रसङ्गात् । न चैवं तयोरेव भावाभावलक्षणत्वम् । अभावभावयोरतिव्याप्तेः । द्वितीयादिप्रतीतावभावस्यापि विधित्वेन **भानात्प्रथमे**ति । प्रथमत्वं च प्रतीत्यनुत्तरत्वम् । तेन द्वितीयादिप्रतीतेस्तृतीयादिप्रतीतितः प्राथम्येऽपि न क्षतिः । न चाभावप्रतीतेः प्रतियोग्यादिप्रतीत्युत्तरत्वनियमात्प्राथम्यायोगः । स्वविषयविषयकप्रतीत्यनुत्तरत्वस्यात्र विवक्षितत्वात् । न चान्यौन्याभावेऽव्याप्तिः । तत्प्रतीतेस्तदभिन्नधर्मिप्रतीत्युत्तरत्वनियमादिति वाच्यम् । भावस्वरूपाभावस्यालक्ष्यत्वात् । अभावस्वरूपे च धर्मिप्रतीतिमादायैव लक्षणसङ्गतेः । अत **एव यस्तु नास्तीति प्रतीयते सोऽभाव** इत्युक्तम् । अन्यथा **यस्तु नेति प्रतीयते** इत्येवावक्ष्यत् ॥ कुत **एतदिति** ॥ प्रथमप्रतीतावेकस्य विधित्वेनैव भानमन्यस्य निषेधत्वेनैवेत्येतत्कुतः? इत्यर्थः ।

अत्र वस्तुस्वरूपवैचित्र्यमेव नियामकमित्याह ॥ **स्वरूपेण हीति** ॥ भावो घटादिर्निर्विशेषेण विधिः सविशेषेण निषेधः । अभावस्तु प्रागभावादिस्तद्विपरीत इत्यर्थः । भावस्य विधित्वनिषेधत्वे निर्विशेषसविशेषरूपे, अभावस्य

तु तद्विपरीत इति यावत् । विशेषश्चात्र प्रथमप्रतीतिविषयत्वविरोधी ग्राह्यः । ततः किं? । अत आह ॥ **तत्रेति** ॥ स्वरूपरूपान्तरयोर्मध्ये अक्षसन्निकर्ष-मात्राधीनायां प्रथमप्रतीतौ स्वरूपोपाधिनैव वस्तुभानम् । न तु रूपान्तरो-पाधिना । तद्भासकसामग्र्यभावादिति भावः । एवं च घटादिप्रतीतौ घटत्वा-देर्भानमुपपद्यते । तस्य स्वरूपोपाधित्वात् । स्वरूपरूपान्तरभासक-सामग्रीभेद एव कुतः? इति ॥ अत आह ॥ **कार्येति** ॥ कार्यवैचित्र्य-गम्यत्वादित्यर्थः । अन्यथा कार्यवैचित्र्यानुपपत्तेः । स्वरूपप्रतीतिसहकृत-सन्निकर्षादिकमेव रूपान्तरभासकसामग्रीति भावः । कार्यवैचित्र्यमेव दर्शयति ॥ **तथा चेति** ॥ **न शुक्लः इति** ॥ भेदस्य धर्मिस्वरूपत्वेऽपि निषेधत्वेन प्रतीतिः पश्चादेवेति भावः । यद्यप्येवं स्वरूपेण विधिनिषेधत्वयोरेव भावाभाव लक्षणत्वसम्भवः तथापि तयोः प्रमितत्वसिद्धये प्रतीतिघटितलक्षणाभिधान-मित्यवधेयम् ।

### स्वरन्त्रतत्वस्य भावतत्वे अन्तर्भावसमर्थनम्

**(टी.) ननु स्वतन्त्रतत्वं भावोऽभावोऽन्यद्वा । नाद्यद्वितीयौ । भावा-भावयोः परतन्त्रप्रभेदत्वात् । न तृतीयः व्याघातात् । मैवं, भावलक्षणा-क्रान्तत्वात् । परतन्त्रं भावाभावतया द्विधैव न पुनरेकविधम् । नापि त्रिविधमित्येवम्परो विभागः । न पुनः परतन्त्रमेव भावाभावात्मकमिति ।**

### भावतत्वान्तर्भूततया स्वतन्त्रतत्वस्याविभागे कारणोक्तिः

**यथा भावेषु स्वतन्त्रतत्वं प्रविशति तथा विभागः क्रियतामिति चेन्नैवं शङ्क्यम् । तद्धि प्रधानतया सर्वविविक्तमेव वेदितव्यम् । अन्यथा द्विविधं तत्वं भावोऽभावश्च । भावोऽपि द्विविधः नित्योऽनित्यश्च । नित्यो द्विविधः चेतनोऽचेतनश्च । चेतनोऽपि द्विविधः स्वतन्त्रोऽस्वतन्त्रश्चेति कर्तव्यम् । एवं सति न प्राधान्येन प्रतिपत्तिः स्यात् । भगवद्व्यतिरिक्तस्य सर्वस्याप्यस्वातन्त्र्यप्रतीतिर्न स्यात् । अस्मिन्पक्षे स्वतन्त्रस्य भावत्वं न**

**विदितं स्यादिति सममेवेति चेन्न। पुरुषार्थोपयोगानुपयोगाभ्यां विशेषात्। अभावादीनां नित्यत्वाद्यनुक्तिश्च समैव। तस्माद्यथान्यासमेवास्तु।**

**(रा.टि.)** अस्वतन्त्रं भावाभावभेदाद्विविधमित्यङ्गीकारे स्वतन्त्रं भावो न त्यादित्याशयेनाशङ्कते ॥ **नन्विति ॥** अन्यद्वा भावाभावाभ्यामन्यद्वेत्यर्थः । परतन्त्रप्रभेदत्वात् परतन्त्रविशेषत्वादित्यर्थः ॥ **व्याधातादिति ॥** भावो नेत्युक्ते अभाव इति प्राप्तम् । पुनरभावो नेत्युक्ते व्याघातः । तथाऽभावो नेत्युक्ते भाव इति प्राप्तम् । पुनर्भावो नेत्यक्ते व्याघात इत्यर्थः ॥ **भावलक्षणेति ॥** 'अस्ति ब्रह्म' 'नारायणो वा इदमग्र आसीत्' 'ब्रह्म वा इदमग्र आसीत्' इत्यादिरूपेण प्रथमप्रतीतौ विधितया प्रतीयमानत्वरूपभावलक्षणोपेतत्वाद्भावत्वमेवेत्यर्थः । तर्हि **भावाभावौ द्विधेतरदित्यु**क्तिविरोध इति । अत आह ॥ **परतन्त्रमिति ॥ इत्येवम्पर इति ॥ इत्येवं** एतादृशो न्यूनाधिकसङ्ख्याव्यवच्छेदः परः उद्देश्यः यस्य स तथा तत्प्रयोजक इति यावत् ॥ **विभाग इति ॥** भावाभावौ द्विधेतरत् इत्यनेन उक्तविभाग इत्यर्थः। इतिशब्दान्तरं एवम्पर सत्यस्यानुषङ्गः । इत्येवं एतादृशोयं इतरव्यवच्छेदः तत्परो न भवतीत्यर्थः । शङ्कते ॥ **यथेति ॥ तद्धीति ॥** स्वतन्त्रतत्वमित्यर्थः ॥ **अन्यथेति ॥** स्वतन्त्रतत्वस्य भावत्वार्थकविभागकरणे तु **इति कर्तव्य**मित्यन्वयः । आस्त्वेवं तथापि का हानिः? इति । अत आह ॥ **एवमितीति ॥** भावत्ववन्नित्यत्वचेतनत्वयोरपि लाभायोक्तं नित्योऽनित्य इत्यादिविभागद्वयम् ॥ **सर्वस्यापीति ॥** उक्तविभागे भगवदन्यचेतनमात्रस्यैवास्वातन्त्र्यप्रतीतेरिति भावः । शङ्कते ॥ **अस्मिन्पक्ष इति ॥** मूलकृदुक्तविभागपक्ष इत्यर्थः ॥

**पुरुषार्थेति ॥** मूलकृदुक्तटीकाकृदुक्तविभागद्वयपक्षेऽपि कस्यचिदर्थस्याज्ञानसाम्येऽपि मूलकृदुक्तविभागपक्षः पुरुषार्थोपयोगी अवश्यज्ञातव्यः । प्राधान्यसर्वविभक्तत्वयोः स्वतन्त्रतत्वे ज्ञानोदयात् । टीकाकृत्प्रदर्शितविभागपक्षे तयोरज्ञानात् भावत्वज्ञानस्य च पुरुषार्थानुपयोगेन तदज्ञानेऽपि

दोषाभावात् । मूलकृदुक्तविभागपक्षे तु पुरुषार्थोपयोगित्वविशेषभावादित्यर्थः । अथापि अनुपपत्तिरस्तीत्याशङ्क्याह ॥ **अभावादीनामिति ॥** अत्यन्ताभावध्वंसयोर्नित्यत्वं, प्रागभावस्यानित्यत्वं, त्रयाणामचेतनत्वं, पारतन्त्र्यं, अचेतनेऽपि केषाञ्चिदनित्यत्वं, पारतन्त्र्यमित्यादिकमपि टीकाकृत्प्रदर्शितविभागे । मूलकृदुक्तविभागे विष्णोर्भावित्वमेव नोक्तं इति कस्यचिदनुक्तिरुभयत्र समैव । प्रत्युतात्र बहूनामनुक्तिः । तत्र भावत्वस्यानुक्तिरेवेत्यर्थः ॥ **तस्मादिति ॥** अनुक्त्योस्साम्यान्मूलोक्तविभागे विशेष सत्त्वाच्च मूलोक्तविभाग एवास्त्वित्यर्थः ।

**(श्री. टि.) व्याघातादिति ।** भावभिन्नस्याभावतया पुनर्भाव भिन्नत्वाभिधाने व्याघातः । तथाऽभावभिन्नस्याभावतया पुनर्भावभिन्नत्वाभिधाने-व्याघातः । तथाऽभावभिन्नस्याभावतया पुनर्भावभिन्नत्वाभिधाने व्याघातादित्यर्थः ॥ **भावलक्षणेति ।** प्रथमप्रतीतावस्तीत्युपलभ्यते यः स भाव इति भावलक्षणाक्रान्तत्वात्स्व तन्त्रतत्वं भाव एवेत्यर्थः । सर्वं वाक्यं सावधारणमिति न्यायेन भावाभावौ द्विधेतरदिति वाक्यं सावधारणं तच्चावधारणं द्विधेत्यनेन सम्बध्यते न तु परतन्त्रार्थकेतदित्यादिना । तथा च स्वतन्त्रतत्वस्य भावत्वाङ्गीकारेन कोऽपि दोष इत्याशयेनाह ॥ **परतन्त्रमिति ॥ न पुनः परतन्त्रमेवेति ।** येन भावस्य परतन्त्रप्रभेदत्वेन स्वतन्त्रतत्वस्य विष्णोर्भावित्वं न स्यादिति भावः । यद्यपि तत्वस्य भावाभावतया द्वैविध्यं शक्यते वक्तुम् । तथाप्यस्य वैयर्थ्यादयमेव विभागोन्याय्य इत्युक्तमननुसन्दधानः तत्वस्य भावाभावतयैव विभागः कुतो न क्रियत इत्याशयेन शङ्कते ॥ **यथा भावेष्विति ॥ तद्धीति ।** स्वतन्त्रतत्वमित्यर्थः ॥

**सर्वविविक्तमेवेति ।** सर्ववैलक्षण्येनैव नतु सर्वसाधारण्येनेत्यर्थः । तदर्थं स्वतन्त्रास्वतन्त्रभेदेनैव तत्वविभागः कार्य इत्याशयः । भावाभावभेदेन तत्व विभागो न कार्यः ॥ **अन्यथेति ।** सर्वविविक्ततया वेदनमनङ्गीकृत्य स्वतन्त्रतत्वस्य यथा भावेषु प्रवेशः तथा विभागकरण इत्यर्थः । पूर्वोक्तमेव

वैयर्थ्यं स्मारयति ॥ **एवं सतीति** । दूषणान्तरमाह ॥ **भगवदिति** ॥ **सर्वस्येति** । भावाभावनित्यानित्यरूपचेतन वर्गस्येत्यर्थः॥ **अस्वातन्त्र्येति** । अस्वतन्त्रस्य चेतनप्रभेदरूपत्वादि(तिभावः)त्यर्थः ॥ **अस्मिन्पक्ष इति** । तत्वं द्विविधं स्वतन्त्रं परतन्त्रं च परतन्त्रं द्विविधं भावोऽभावश्चेति विभाग-करणे स्वतन्त्रतत्वस्य भावत्वमविदितं स्यात् भावस्य परतन्त्रभेदरूपत्वा-दित्यर्थः ॥ **सममेवेति** । तथाचैवं साम्ये भावाभावादिनैव तत्वविभागः क्रियतामविशेषादिति भावः । अविशेषो सिद्ध इत्याह ॥ **पुरुषार्थेति** ।

स्वतन्त्रास्वतन्त्रभेदेन तत्वद्वैविध्यज्ञानस्य मोक्षोपयोगिताया य एतत् परतन्त्रं त्वित्यादिना प्रमितत्वादन्यस्य तदभावादिति भावः । नन्वथापि न भवदुक्तरीत्या तत्वविभागो युक्तः । तथाहि । तत्वं द्विविधम् । स्वतन्त्र-मस्वतन्त्रं चेति । अस्वतन्त्रं द्विविधं भावोऽभावश्च । भावोऽपि द्विविधः चेतनोऽचेतनश्च । अचेतनस्त्रिविधः । नित्योऽनित्यो नित्यानित्यश्चेति विभागकरणे प्रध्वंसात्यन्ताभावरूपाभावस्य नित्यत्वं नोक्तं स्यात् । नित्यस्य भावप्रभेदरूपाचेतनप्रभेदरूपत्वादित्यर्थः । तथा चेतनस्य नित्यत्वं नोक्तं स्यात् । नित्यस्याचेतनप्रभेदरूपत्वात् । तथा स्वतन्त्रतत्वस्य भावत्वं नोक्तं स्यात् । भावस्यास्वतन्त्रप्रभेदरूपत्वादित्याशङ्क्य त्वदीयविभागकरणे एतत्समानमित्याह ॥ **अभावादीनामिति** । प्रथमादिपदेन चेतनस्वतन्त्र-तत्वयोर्ग्रहणम् । द्वितीयादिपदेन भावत्वग्रहणम् । तथाच ध्वंसात्यन्ताभाव-रूपाभावयोश्चेतनानां च नित्यत्वानुक्तिः स्वतन्त्रतत्वस्य भावत्वानुक्ति-श्चेत्यर्थः । इदमुपलक्षणम् । प्रागभावस्य अनित्यत्वानुक्तिः अनित्यस्य भाव-प्रभेदरूपाचेतनप्रभेदरूपत्वादिति द्रष्टव्यम् ॥

**समैवेति** । तत्वं द्विविधं भावोऽभावश्च । भावोऽपि द्विविधः । नित्योऽ-नित्यश्च । नित्योऽपि द्विविधः । चेतनोऽचेतनश्च । चेतनोऽपि द्विविधः । स्वतन्त्रमस्वतन्तं चेति विभागकरणे अचेतनस्यास्वातन्त्र्यं नोक्तं स्यात् । अस्वतन्त्रस्य चेतनप्रभेदरूपत्वात् । तथाऽनित्य प्रध्वंसात्यन्ताभावयोर्नित्यत्वं

प्रागभावस्यानित्यत्वं नोक्तं स्यात् । नित्यानित्ययोर्भावप्रभेदरूपत्वादित्यर्थः ।। **यथान्यासमिति ।** ''स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्वमिष्यत'' इति उक्तप्रकारेणैव द्वैविध्यमस्त्वित्यर्थः ।

**(स.टि.)** भावाभावौ द्विधेतरदिति विभागोऽनुपपन्नः । स्वतन्त्र-तत्वस्यैतदुभयाननुप्रवेशादिति शङ्कते ।। **नन्विति ।।** नाद्य द्वितीयौ युज्येते इति शेषः । तत्र हेतुमाह ।। **भावाभावयोरिति ।। परतन्त्रभेदत्वात्** परतन्त्र-प्रभेदत्वादित्यर्थः ।। **व्याघातादिति ।।** वस्तुषु भावाभावान्यतरत्वस्यैव सत्त्वात्तदुभयभिन्नस्य तस्याङ्गीकारे व्याहतिः स्यादित्यर्थः । ननु भावा-भावान्यत्वस्य शशविषाणादौ सत्त्वात्कथं व्याहतिरिति चेन्मैवम् । तदुभय-भिन्नस्य वस्तुनोऽभावादित्यनेनोक्तोत्तरत्वात् । अभ्युपेत्येदमुदितम् । वस्तु-तस्तु भावाभावप्रतियोगिकान्योन्याभावो नासत्यङ्गीकारार्हः । तथात्वे सिद्धान्ते तस्य धर्मिस्वरूपत्वेनासत्त्वप्राप्तेः । न च तथात्वे भावाभाव-योरसतश्च भेदाभावेन भावाभावयोरसतश्चासत्त्वाद्यापत्तिरिति वाच्यम् । असति तदुभयप्रतियोगिकभेदाभावेऽपि तयोरसत्प्रतियोगिक- भेद-सद्भावेनोक्तापत्तेरभावात् । अत एव न्यायामृते विप्रतिपत्तिग्रन्थे विद्यमानम् ''ब्रह्मान्य''दित्येतदेवमेव व्याचख्युरभियुक्ताः । विकल्पितपक्षेषु प्रथम-मङ्गीकृत्य शङ्कां परिहरति ।। **मैवमिति ।।** भावस्य यल्लक्षणमुक्तं तेन विशिष्टत्वादित्यर्थः । भावत्वादिति वक्तव्ये यद्भाव लक्षणाक्रान्तत्वादिति वचनं तत् न पुनर्लक्षणासम्भावनाशङ्कानिरासाय प्रयासः कर्तव्य इति लाघ-वार्थमिति ज्ञातव्यम् । तर्हि ''भावाभावौ द्विधेतर''दित्युक्तिरयुक्तेत्यत आह ।। **परतन्त्रमिति ।।** विभाग एवंपरः । एवमेतत्परमुद्देश्यम् यस्य स तथोक्तः । तथा चान्यनिषेधकत्वाभावादस्य मूलस्य विष्णोर्भावत्वमुपपद्यत इति भावः ।

ननु स्वतन्त्रमस्वतन्त्रं चेत्युक्त्वा उक्त्वा च भावाभावावित्यादि स्वतन्त्रतत्वं भाव इत्यङ्गीकरणात् वरम् यथा भावे निविशेत स्वतन्त्रतत्वम् तथा विभजनमित्याशङ्कते ।। **यथेति ।।** तथेत्यनुपदमेव स्पष्टीभविष्यति ।

भावेषु बहुवचनमाद्यर्थे । भावनित्यचेतनादिषु । भाव इत्येकवचनान्तपाठोऽपि क्वचिद्दृश्यते भावकोटाविति तदाऽर्थः । अत्र भावपदञ्च नित्यचेतनाद्युपलक्षकम् । अत एव "भावो द्विविधः। नित्योऽनित्यश्च । नित्योऽपि द्विविधः। चेतनोऽचेतनश्चे"त्यनुपदमेव वक्ष्यति । परिहरति ॥ **नैवं शङ्क्यमिति** ॥ तत् स्वतन्त्रतत्वम् । हिर्हेतौ । **प्रधानतया** मुख्यतया । **सर्वविविक्तं** रमादिसर्वजगद्विविक्तम् । वेदितव्यमिति तव्यप्रत्ययेन इष्टसाधनज्ञानञ्चेदमेव नान्यदिति वैधोऽयमर्थ इति द्योतयति । तथा विभागः क्रियतामित्युक्तं विशदयति ॥ **अन्यथेत्यादिना** ॥ **अन्यथा** अस्मद्रीत्या विभागाकरणे । अन्यथेति कर्तव्यमित्यन्वयः । **एवं सति** उक्तरीत्या विभागे सति । **प्रतिपत्तिः** ज्ञानम् । स्वतन्त्रतत्वस्येति योज्यम् ॥ **अस्वातन्त्र्यप्रतीतिर्न स्यादिति** ॥ न चेष्टापत्तिः । तज्ज्ञानस्य मोक्षसाधनत्वेन "य एत" दित्यादिनोक्तेरिति भावः । **अस्मिन्पक्षे** सैद्धान्तिकविभागपक्षे । इति इतिहेतोः । **सममेव** यथा भावत्वादिना विभागे विष्णोः प्राधान्याज्ञानं दूषणं तथा स्वतन्त्रत्वादिना विभागेऽपि तस्य भावत्वाद्यज्ञानरूपं दूषणं सममेवेत्यर्थः । कुतो नेत्यत आह ॥ **पुरुषार्थेति** ॥ स्वतन्त्रास्वतन्त्रतत्वयोः प्राधान्याप्राधान्यज्ञानस्यातिशयेन मोक्षहेतुत्वादितरस्यातथात्वादित्यर्थः ।

भावत्वादिना विभागे दूषणान्तरमाह ॥ **अभावादीनामिति** ॥ यथाऽस्मन्मते स्वतन्त्रतत्वादीनां भावत्वचेतनत्वनित्यत्वाद्यलाभस्तथा त्वत्पक्षेऽपि ध्वंसात्यन्ताभावयोर्नित्यत्वं प्रागभावस्य नित्यत्वं त्रयाणामचेतनत्वास्वतन्त्रत्वे प्रधानादीनामचेतनत्वास्वतन्त्रत्वे घटादीनामनित्यत्वमित्याद्य लाभः । सति चैवं साम्ये पूर्वोपदर्शितमोक्षोपयोगिनः स्वतन्त्रा स्वतन्त्रतत्वयोः प्राधान्याप्राधान्य रूपेण ज्ञानस्यालाभोऽतिरिच्यत इति भावः । निगमयति ॥ **तस्मादिति** ॥ **यथान्यासं** आचार्यरचितविभाग विन्यासमनतिक्रम्य । यथाऽसादृश्य इत्यव्ययीभावः । नाव्ययीभावादतोम्त्वपञ्चम्या इत्यम् ।

**(पां.टि.)** ननु च तत्त्वस्यैव च 'तत्त्वं द्विविधम् । भावोऽभावश्च' इति भावाभावतया विभागः युक्तः । स्वतन्त्रतया अभिमतस्य विष्णोः तथात्वे एव भावत्वादिसिद्धिसम्भवात् । न तु परतन्त्रस्य तथा विभागः । तथा सति विष्णोः भावत्वाद्यसिद्धिप्रसङ्गात् । 'भावाभावौ द्विधेतरत्' इति न्यूनाधिक-सङ्ख्याव्यवच्छेदकविभागस्य 'परतन्त्रमेव भावाभावतया द्विविधम्' इत्येवं-परत्वावश्यंभावेन, 'पार्थ एव धनुर्धरः' इत्यादौ विशेष्यसङ्गत एवकारेण पार्थान्यस्य धनुर्धरत्वरूपविशेषणयोगव्यवच्छेददर्शनात् विशेष्यसङ्गतेन 'परतन्त्रमेव' इत्येवकारेण परतन्त्रान्यस्मिन् भावत्वादिविशेषणयोगव्यवच्छेद प्रतिपादनेन, भावत्वस्य परतन्त्रत्वव्याप्यत्वलाभात् । स्वतन्त्रतत्त्वस्य च भावत्वे व्याप्यवति व्यापकावश्यंभावनियमेन भावत्वव्यापकस्य परतन्त्रत्वस्य प्रसङ्गात् । न च स्वतन्त्रस्य तत् सम्भवति इति व्यापकनिवृत्त्या तद्व्याप्य-भावत्वनिवृत्तिः एव स्वतन्त्रस्य स्यात् । अतः स्वतन्त्रतत्त्वस्य भावत्वादि-विज्ञानं यथा सिध्यति तथा विभागे कर्तव्ये कथं भावाभावभेदेन पारतन्त्र्य-विभागनिरूपणम् ? इतिभावेन गूढाभिसन्धिः शङ्कते **नन्विति** ।

**व्याघातादिति** । स्वतन्त्रतत्त्वस्य भावान्यत्वे अभावत्वमेव प्राप्तम् । पुनरभावान्यत्वोक्तौ व्याघातः । एवमभावान्यत्वेऽपि भावत्वस्यैव प्राप्ते पुनः तदन्यत्वोक्तौ व्याघातः इत्यर्थः ॥ परतन्त्रतत्त्वस्य भावतया विभागोक्तावपि स्वतन्त्रतत्त्वस्य भावत्वादिविज्ञानसम्भवात् न उक्तविभागः अनुपपन्नः इत्याशयेन गूढाभिसन्धिरेव सिद्धान्ती समाधत्ते **मैवमिति । भावलक्षणाऽऽ-क्रान्तत्वादिति** । भावः इति शेषः । स्वतन्त्रतत्त्वमिह अनुवर्तते ॥ अन्यथा भावलक्षणस्य तत्र अतिव्याप्तिः स्यादिति भावः । नन्वेवं व्याप्यवति व्याप्यकावश्यंभावनियमात् स्वतन्त्रतत्त्वस्य भावत्वे तद्व्यापकीभूतपरतन्त्रत्व-मपि तत्र स्यात् । तत्कथं भावत्वाङ्गीकारः इत्यतः न्यूनाधिकसङ्ख्या-व्यवच्छेदकस्य विभागस्य सावधारणत्वेऽपि 'परतन्त्रमेव द्विविधम्' इत्येव-परत्वाभावात्, 'परतन्त्रं भावाभावतया द्विविधमेव' इत्येवंपरत्वस्यैव

आश्रयणात् 'शङ्खः पाण्डुर एव' इत्यादौ विशेषणसङ्गत एवकारस्य विशेष्ये विशेषणायोगव्यवच्छेद कत्वदर्शनात्, परतन्त्रे भावत्वाद्ययोगव्यवच्छेद-मात्रसिद्धौ अपि भावत्वादौ तद्व्याप्यत्वालाभात् अव्यापकव्यावृत्त्या च अव्याप्यव्यावृत्तौ अतिप्रसङ्गात्, न परतन्त्रतत्त्वव्यावृत्त्या स्वतन्त्रतत्त्वस्य भावत्वव्यावृत्तिप्रसङ्गः । येन उक्तविभागस्य अकर्तव्यता स्यादित्याशयेन आह **परतन्त्रमिति ।**

पूर्ववादी स्वाभिप्रायमुद्धाटयति **यथेति ।** भावेषु इतिबहुवचनम् आद्यर्थे । भावादिषु इत्यर्थः । आदिपदेन च नित्यचेतनयोः परिस्पर्शः ॥ क्वचित् भावे इत्येव पाठः । तत्र भावपदं नित्यादेः उपलक्षणम् । अत एव सिद्धान्ते अन्यथा इत्यादिना तदेव विभावयिष्यति इति ध्येयम् ।

तत्त्वं द्विविधम् भावोऽभावश्च, भावोऽपि द्विविधः नित्योऽनित्यश्च, नित्योऽपि द्विविधः चेतनोऽचेतनश्चेति, चेतनोऽपि द्विविधः स्वतन्त्रः परतन्त्रश्च' इत्येव विभागः कर्तव्यः । तथा सति हि स्वतन्त्रतत्त्वस्य भाव-त्वादिकं सम्यगुक्तं भवति । 'द्विविधं तत्त्वं स्वतन्त्रं परतन्त्रञ्च, परतन्त्रञ्च भावाभावतयाद्विविधम्' इति विभागे तु, स्वतन्त्रतत्त्वस्य भावत्वप्राप्ति-शङ्कायामुक्तरीत्या विभागमात्रस्य अभिप्रायान्तरकल्पनायां तु यत्नगौरवमेव । न च प्रयोजनविशेषाभावे तदाश्रयणमुपपत्तिमत् । इति भावः ॥ सति प्रयोजनविशेषे यत्नगौरवाश्रयणं न दोषाय इत्याशयेन आह **नैवमित्यादिना ।**

'तत्त्वं द्विविधम् स्वतन्त्रमस्वतन्त्रञ्च' इति विभज्य अस्वतन्त्रकोटौ भगवदितरस्य अन्तर्भावे भगवतः प्राधान्येन प्रतीतिः भवति । पराभिप्रेत-विभागे तु नैवमित्यतः अयमेव विभागः कर्तुं युक्तः इत्याशयः । पराभिप्रेत-विभागे भगवतः स्वातन्त्र्यप्रतीतिरपि इति भिन्नक्रमः ।

'ननु यथा तत्त्वस्य भावत्वाभावत्वादिना विभागकरणे भगवतः स्वातन्त्र्यं तद्व्यतिरिक्तस्य च अस्वातन्त्र्यं न सिध्यति इति तथाविभागस्य अकर्तव्यता

त्वया उच्यते। तथा तत्त्वस्य स्वातन्त्र्यपारतन्त्र्याभ्यां विभागे स्वतन्त्रतत्त्वस्य भावत्वाद्यप्रतीतिप्रसक्तेः तथाविभागस्य अकर्तव्यत्वं मयाऽपि अभिधातुं शक्यत एव इति पक्षद्वयमपि सममेव' इति शङ्कते **अस्मिन्निति।**

न च 'अस्वतन्त्रं भावाभावतया द्विधैव' इत्यादिना विभागस्य अभिप्रायान्तरकथनेन भगवतो भावत्वस्य व्युत्पादितत्वात् न साम्यम् इति वाच्यम्। परेणापि 'चेतनः स्वतन्त्रोऽस्वतन्त्रश्चेति द्विविध एव' इत्येवं परत्वस्य व्युत्पादयितुं शक्यत्वात्। अन्यस्य अस्वातन्त्र्याद्यनिरासेन भगवव्द्यतिरिक्तस्य सर्वस्य अस्वातन्त्र्यप्रतीतिसौलभ्यस्य वक्तुं शक्यत्वेन तौल्यापरिहारात्। भगवदायत्तत्वेन प्रपञ्चज्ञानस्य पुरुषार्थसाधनत्वेन आवश्यकत्वात्, तस्य सिद्धान्त्यभिप्रेतविभागपक्ष एव सम्भवात्, तथैव विभागः कर्तव्यः न तु भावत्वादिना। भगवतो भावत्वादिज्ञानस्यापुरुषार्थसाधनत्वेन तज्ज्ञास्य अनावश्यकत्वात्। ततश्च विभागद्वयेऽपि यत्किञ्चिदसिद्धेः तौल्येऽपि आवश्यकासिद्धिः भावत्वादिविभागे, स्वातन्त्र्यादिविभागे तु न आवश्यकासिद्धिः इति विशेषात् न पक्षद्वयतौल्यमित्याह **पुरुषार्थेति।**

**अभावादीनामिति।** यथा अस्मत्पक्षे 'अभावस्य नित्यत्वाद्यनुक्तिः, अभावादीनामिति आदिपदसूचितस्वतन्त्रतत्त्वस्य नित्यत्वाद्यनुक्तिः, नित्यस्य चेतनत्वानुक्तिः भवति तथा तत्पक्षे अभावस्य नित्यत्वाद्यनुक्तिः, अनित्यस्य अचेतनत्वानुक्तिः भवति समैव इत्यर्थः॥ चशब्देन न केवलं साम्यम् अपि तु भगवतः प्राधान्याप्रतीतिः, भगवव्द्यतिरिक्तस्य पारतन्त्र्याप्रतीतिश्च' इति पूर्वोक्तं समुच्चिनोति। **तस्मादिति।** यस्मात् परकीयविभागे परोक्तानुपपत्तिसाम्यम्, अस्मदुक्तानुपपत्त्याधिक्यं च; तस्मादित्यर्थः।

**(का. टि.)** स्यादेतत्, भावाभावत्वाभ्यामस्वतन्त्रविभागो न युक्तः। शब्दतः सावधारणप्रतीतेरौत्सर्गिकतया **भावाभावौ द्विधे**तरदित्यतः परतन्त्र मेव भावाभावात्मकमित्यर्थलाभेन स्वतन्त्रस्य भावत्वानुपपत्तेरिति भावेन शङ्कते॥ **नन्विति॥ अन्यद्वा** अभिमतमिति शेषः। **परतन्त्रप्रभेदत्वात्**

परतन्त्रविशेषत्वात् । भावत्वाभावत्वयो परतन्त्रत्वव्याप्यत्वादिति यावत् । अन्यथोक्तावधारणानुपपत्तेरिति भावः । **व्याघातादिति ॥** भावभिन्नत्वाभावभिन्नत्वयोरभावभावमात्रवृत्तित्वेन तदुभयसामानाधिकरण्यस्य व्याहतत्वादित्यर्थः । न च शशशृङ्गादौ तदुभयसामानाधिकरण्यसम्भवः । आश्रयस्यैवासत्त्वेन तदनुपपत्तेः । अत्र स्वतन्त्रस्य नित्यानित्यत्वादिविकल्पनिरासोऽपि द्रष्टव्यः । अत्र यद्यपि स्वतन्त्रस्य भावत्वादित्येव वक्तव्यं तथाप्युक्तभावलक्षणवत्वेनैव भावत्वसिद्धेर्न विकल्पावकाश इति सूचनाय भावलक्षणाक्रान्तत्वादित्युक्तम् । नन्वेवमुक्तविभागानुपपत्तिरित्यत आह ॥ **परतन्त्रमिति ॥** अयं भावः 'शङ्खः पाण्डुरः' इत्यादविव विशेषणांश एवावधारणप्रतीतिर्बाधकाभावात् । न तु 'गौः सास्नाशृङ्गवती' इत्यादाविव विशेष्यांशोऽपि । स्वतन्त्रस्य भावत्वग्राहकप्रमाणबाधात् । न च विशेषणावधारणस्यायोगव्यवच्छेदरूपतया भावत्वादेश्चाभावादावयोगात्कथं तत्प्रतीतिरिति वाच्यम् । प्रत्येकमयोगेऽपि द्वित्वोपलक्षितस्यायोगव्यवच्छिन्नत्वादिति । एवं नित्यत्वादिविभागस्यापि विशेषणांश एव सावधारणत्वात् स्वतन्त्रस्य नित्यत्वादिसिद्धिरपि द्रष्टव्या ।

नन्वेवं तत्वं द्विविधं भावोऽभावश्च । भावोऽपि द्विविधः नित्योऽनित्यश्च । नित्यो द्विविधः चेतनोऽचेतनश्चेत्येव विभागो युक्तः । स्वतन्त्रस्य साक्षादेव भावत्वादिलाभात् । न च तस्य स्वातन्त्र्यालाभः स्वतन्त्रास्वतन्त्रभेदेन चेतन विभागेनापि तल्लाभात् । अत एव पूर्वोक्तिविभागवैयर्थ्यं स्वातन्त्र्यास्वातन्त्र्याभ्यामविभाग एव तद्दोषदानादित्याशयेन शङ्कते ॥ **यथेति ॥ भावेषु** भावप्रभेदेषु भावत्वावान्तरविभाजकं स्वतन्त्रत्वं यथा भवतीति यावत् । उक्तरीत्या विभागे परापरतत्वयोरविशेषेण भावत्वादिप्रतीतिः स्यात् । सा च विफलेत्याशयेन समाधत्ते ॥ **नैवमिति ॥ तत्** स्वतन्त्रतत्वम् । **प्राधानतया** अनन्याधीनतया । **सर्वविविक्तं** सर्वतो विलक्षणधर्मवत् । प्रतिपत्तव्यमिति श्रुतिसिद्धमित्यर्थः । ततः किमित्यत आह ॥ **अन्यथेति ॥**

स्वतन्त्रत्वस्य भावत्वावान्तरविभाजकत्वे । इति विभजनं कर्तव्यमिति सम्बन्धः । **प्राधान्येन प्रतीतिः** अनन्याधीनभावत्वादिमत्वेन भगवत्प्रतीतिः। दोषान्तरं चाह ॥ **भगवद्व्यतिरिक्तस्येति** ॥ अभावादेरस्वातन्त्र्यालाभादिति भावः । **अपि**शब्दः प्रतीतिरपीति योज्यः । अत्रैव प्रतिबन्दीमाशङ्कते ॥ **अस्मिन् पक्ष इति** ॥ सिद्धान्तपक्ष इत्यर्थः । **सममेव** इति दूषणमिति शेषः । यद्यपि सिद्धान्ते स्वतन्त्रस्य भावत्वनित्यत्वचेतनत्वानां बहूनामलाभः । पूर्वपक्षे त्वचेतनेष्वस्वातन्त्र्यमात्रालाभ इति वैषम्यम् । न चैकत्र बहुधर्मालाभस्य बहुष्वेकधर्मालाभस्य च साम्यमेवेति वाच्यम् । तथा सत्यनन्ताचेतनानामस्वातन्त्र्यालभस्यैव गरीयस्त्वापत्त्या पूर्वपक्षानुत्थितेः । तथापि सिद्धान्ते स्वतन्त्रत्वरूपैकविभाजकोपाध्यवच्छेदेन भावत्वादिधर्मत्रयालाभः । पूर्वपक्षे तु अभावत्वानित्यत्वाचेतनत्वरूपविभाजकोपाधित्रयावच्छेदेनास्वातन्त्र्यरूपैकधर्मालाभ इत्येवं साम्यस्य विवक्षितत्वान्न दोषः । न च पूर्वपक्षे अनित्यस्याचेतनत्वालभोऽधिक इति वाच्यम् । सिद्धान्ते चेतनस्य नित्यत्वालाभेन साम्यात् । न च पूर्वपक्षे धर्म्यानन्त्याद्वैषम्यम् । सिद्धान्ते धर्मिप्राधान्येन समीकरणादिति विभावनीयम् ॥

**पुरुषार्थेति** ॥ भगवदितरस्य सर्वस्याप्यस्वातन्त्र्यज्ञानं मोक्षोपयोगि । न तु भगवतः सर्वसाधारणभावत्वादिज्ञानमित्यर्थः । नन्वेवमभावस्य नित्यत्वाद्यलाभो दोषः नित्यानित्यवस्तुविवेकस्यावश्यकत्वादिति । अत आह ॥ **अभावादीनामिति** ॥ अभावस्य नित्यत्वाचेतनत्वाद्यनुक्तिर्मतद्वयोऽपि समैव । आदिपदाच्चेतनस्य नित्यत्वानुक्तिश्चाचेतनस्यानित्यत्वानुक्त्या समेत्यर्थः । तथा च प्रमाणान्तरादेव तदवगमः । उक्तविभागस्यान्ययोगव्यवच्छेदकत्वाभावादिति भावः । उपसंहरति ॥ **तस्मादिति** ॥ अत्यन्तोपयोगित्वाद्यथोक्तविभाग एव युक्त इत्यर्थः ।

अस्वतन्त्रतत्वस्य भावाभावत्वाभ्यां विभागे विशेषकारणोक्तिः

**(टी.) अथ अस्वतन्त्रं चेतनत्वादिनैव विभज्यताम् । किं चेतनत्वादिना विभज्य भावाभावतया विभागः कर्तव्य उतायं न कर्तव्य एव । नाद्यः, विशेषाभावात् । अभावस्याचेतनत्वं एवं सति नोक्तं स्यादिति चेत्तथा सति चेतनस्य भावत्वमपि नोक्तं स्यादिति समम् । तर्हि केन विशेषेणास्य प्राधान्यमिति चेत् । वादिविप्रतिपत्तिभावाभावाभ्यां विशेषात् । अत एव न द्वितीयोपीति ।**

**(रा.टि.)** परतन्त्रस्य भावत्वादिना विभागे विशेषं विवक्षुराक्षिपति ॥ **अथेति** ॥ अस्वतन्त्रं चेतनोऽचेतनश्चेति द्विविधम् । अचेतनोऽपि भावोऽभावश्चेति द्वेधा । इत्यादिरूपेण विभज्यताम् । किं भावत्वादिनेति भावः । **विशेषेति** ॥ पुरुषार्थोपयोगित्वादिविशेषस्याभावादित्यर्थः । विशेषमाशङ्क्य साम्यमाह ॥ **अभावस्येति** ॥ **एवं सतीति** ॥ भावत्वादिना विभागे कृते सतीत्यर्थः ॥ **अस्येति** ॥ भावत्वादिना विभगस्येत्यर्थः ॥ **वादीति** ॥ भावाभावत्वेऽस्ति विवादो न चेतनत्वादावतस्तन्निरासाय भावत्वादिविभागस्य प्राधान्यमित्यर्थः ॥ **अत एवेति** ॥ विवादाभावादेव कर्तव्यत्वपक्षो न युक्त इत्यर्थः ।

**(श्री.टि.)** भावाभावतयोक्तं परतन्त्रविभागमाक्षिपति ॥ **अथास्वतन्त्रमिति** । अस्वतन्त्रं द्विविधं चेतनोऽचेतनश्चेत्येवं विभज्यताम् । भावोऽभावश्चेति किमर्थं विभज्यत इत्यर्थः ॥ **किञ्चेतनत्वादिनेति** । अस्वतन्त्रं द्विविधं चेतनोऽचेतनश्चेति विभागं कृत्वानन्तरम् अचेतनोद्विविधः भावोऽभावश्चेति भावाभावविभागः कर्तव्यः उतायं न कर्तव्यः इत्यभिप्राय इत्यर्थः । **विशेषाभावादिति** । अस्वतन्त्रं द्विविधं भावोऽभावश्च । भावोऽपि द्विविधः। चेतनो चतनश्चेति विभागकरणे तथाऽस्वतन्त्रं दिविधं चेतनोऽचेतनश्च अचेतनं द्विविधं भावोऽभावंश्चेति विभागकरणे च विशेषाभावादित्यर्थः । नन्वस्ति

विशेषः । भावाभावभेदेनास्वतन्त्रं विभज्यभावस्य चेतनाचेतनत्वेन विभागकरणेऽभावस्याचेतनत्वं नोक्तं स्यात् । अचेतनस्याभावप्रभेदरूपत्वादिति शङ्कते ॥ **अभावस्येति** ॥ **तथासतीति** । अस्वतन्त्रं चेतनत्वादिना विभज्याचेतनस्य भावत्वादिना विभागकरणे चेतनस्य भावत्वं नोक्तं स्यात् । भावस्याचेतनप्रभेदरूपत्वादिति सममित्यर्थः । नन्वेवं साम्येकेन निमित्तविशेषेणभावाभावभेदेनास्वतन्त्रविभागकरणस्य प्राधान्यमित्याशङ्कते ॥ **तत्र हीति** ॥ **वादिविप्रतिपत्तीति** । अस्वतन्त्रस्य चेतनाचेतनभेदेन विभागकरणे चेतनाचेतनपदार्थयोः सर्वैरङ्गीकृतत्वेन तत्र वादिविप्रतिपत्त्यभावात् । भावत्वादिना विभागकरणे अधिकरणातिरिक्ताभावानङ्गीकारवादिनां मीमांसकानां विप्रतिपत्तिसद्भावादित्येवंरूपान्निमित्तविशेषादित्यर्थः । प्राधान्यमिति सम्बन्धः ॥ **अत एवेति** । भावाभावविभागेन कर्तव्य एवेति द्वितीय पक्षोऽप्यत एवायुक्तः । अभावे वादिविप्रतिपत्तिसद्भावेन तस्य समर्थनीयत्वादेवेत्यर्थः ।

**(स.टि.)** ननु भवतु भवदुक्तभङ्ग्यैष सामान्यविभागः । अस्वतन्त्रतत्वस्य चेतनत्वादिना कुतो न विभागः क्रियत इत्याशयेन शङ्कते ॥ **अथेत्यादिना विभज्यतामित्यन्तेन** । सिद्धान्ती द्वेधा विकल्पयति ॥ **किमिति** ॥ विभज्य विभागम् कृत्वा । भावाभावतया विभागः कर्तव्यः । अनन्तरमिति तु क्त्वासामर्थ्येनैव लभ्यत इति नोक्तम् । **अविशेषात्** वैपरीत्यकृतविशेषाभावादित्यर्थः । विशेषं शङ्कते ॥ **अभावस्येति** ॥ एवं सति अस्वतन्त्रस्य भावत्वादिना विभागे सति । **तथा सति** त्वदुक्तरीत्या विभागे सति । नोक्तं स्यात् । तस्यास्वतन्त्रप्रभेदत्वादिति भावः । साम्ये सति भवतु मदुक्तरीत्यापि विभागो विनिगमकाभावादिति शङ्कते ॥ **तर्हीति** ॥ अस्य भावादिप्रविभागस्य । सिद्धान्ती विशेषं दर्शयति ॥ **वादीति** ॥ वादिनां सिद्धान्तिनां विप्रतिपत्तेः विवादस्य । भावातिरिक्ताभावे चेतनातिरिक्ताचेतने सत्त्वासत्त्वरूपवैलक्षण्यादित्यर्थः । भावातिरिक्ताभावोऽस्तीत्यत्र वादिविप्रतिपत्तिसद्भावात्तन्निरासाय विप्रतिपन्नचेतनाचेतनविभागकथनात्

प्राथम्यं युक्तमिति भावः । **अत एव** अन्ततो गत्वा निराकर्तव्यवादि-विवादरूपविशेषसद्भावादेवेत्यर्थः । **द्वितीयः** न कर्तव्य इति पक्षः ।

**(पां.टि.)** 'अस्वतन्त्रं भावोऽभावश्चेति द्विविधम्' इति विभागमुप-पादयितुं तत्र अनुपपत्तिमाशङ्कते **अथेति** ॥ अत्र अस्वतन्त्रमित्यनन्तरम् 'एव'शब्दो योज्यः । यद्वा 'प्रथमम्'इति शेषः तेन विकल्पावकाशः इति ज्ञेयम् ॥

चेतनत्वादिनैवेति एवकारेण भावाभावविभागस्य प्राथम्यनिषेधे तात्पर्यम्? उत अकर्तव्यत्वे एव? इत्यभिप्रायेण विकल्पयति **किमिति । विशेषा-भावादिति ।** अस्मदुक्तरीत्या चेतनाचेतनयोः भावावान्तरभेदत्वपरित्यागेन भावाभावयोः अचेतनावान्तरभेदत्वस्वीकारे फलविशेषा भावादित्यर्थः । फलविशेषं शङ्कते **अभावस्येति । एवं सति** चेतनाचेतनयोः भावावान्तरभेदत्वे सति इत्यर्थः । स्वपक्षे तु अचेतनावान्तरभेदत्वेन अभावस्य अचेतनत्वं सुलभमिति भावः ॥ **तथा सतीति ।** अभावस्य अचेतनावान्तरभेदत्वे सति इत्यर्थः । स्वपक्षे तु भावान्तरभेदत्वात् चेतनस्य भावत्वं सुलभमिति । ततश्च कुत्रचित् कस्यचित् किञ्चित् असिद्धेः तौल्यमेव इति विशेषाभाव एव इति भावः । **तर्हीति ।** एवं विभागद्वयस्य साम्ये इत्यर्थः । अस्यभावाभाव-विभागस्य । चेतनाचेतनविभागापेक्षया इति शेषः । वादीति । भावाभाव-विभागे वादिविप्रतिपत्तिभावात् चेतनाचेतनविभागे च तदभावात् तद्विभागा-पेक्षया भावाभावविभागस्य प्राधान्यमित्यर्थः ॥ यद्यपि चेतनाचेतनविभागेऽपि अस्त्येव वादिविप्रतिपत्तिः, यद्वक्ष्यति मृदब्रवीत् इत्यादिवाक्यात् सर्वं चेतनमेव इत्यादि तथापि यथा भावाभावविभागे वादिनः विप्रतिपद्यन्ते न तथा अन्यत्र इति तात्पर्यात् अदोषः इति द्रष्टव्यम् । **अत एवेति ।** वादिविप्रतिपत्तेः विद्यमानत्वेन न कर्तव्यः इति द्वितीयोऽपि न इत्यर्थः ।

**(का. टि.)** एवं तत्वविभागं समर्थ्य यथोक्तमस्वतन्त्रविभागं समर्थयितु माक्षिपति ॥ **अथेति ॥** अस्वतन्त्रं द्विविधं चेतनमचेतनं चेत्येव विभज्यता-

मित्यर्थः । अन्यथा अभावस्याचेतनत्वालाभादित्यभिसन्धिः । अथास्वतन्त्रं नित्यत्वादिनैव विभज्यतामिति कुतो न शङ्कितमिति चेत् भावाभावतया नित्यादिविभागायोगात् । प्रागभावादेर्नित्यत्वाद्यभावादिति । समाधातुं पृच्छति ॥ **किमिति** ॥ **विशेषाभावादिति** ॥ परोक्तविभागे लाघवरूप-नियामकाभावादित्यर्थः । अभावस्याचेतनत्वलाभरूपनियामकमाशङ्कते ॥ **अभावस्येति** ॥ **एवं सति** मूलोक्तविभागे सति । **तथा सति** अस्वतन्त्रं द्विविधं चेतनमचेतनं च । अचेतनं द्विविधं भावोऽभावश्चेति विभागे सतीत्यर्थः । मूलोक्तविभागेऽपि नियामकाभावमाशङ्कते ॥ **तर्हीति** । साम्ये सतीत्यर्थः । **प्राधान्य**मवश्यकर्तव्यत्वम् ॥ **वादीति** ॥ भावाभावविभाग एव विप्रतिपत्ते सद्भावाद्विप्रतिपन्नस्य चाभ्यर्हितत्वेनादौ वक्तव्यत्वादुक्तविभाग-स्यैवावश्यकत्वमिति भावः । यद्यपि 'मृदब्रवीत्' इत्यादिना चेतनाचेतन-विभागेऽपि विप्रतिपत्तिर्वक्ष्यते तथापि सा न बहूनामित्याशयः । यद्वा मृदादिषु चेतनत्वरूपधर्मविषयविप्रतिपत्त्यपेक्षयाप्यभावरूपधर्मिविषय-विप्रतिपत्तेः प्राधान्येनादौ निरस्यत्वमित्याशयः । यद्वा सर्वचेतनमतस्याभि-मान्यधिकरणे विस्तरेण निरस्तत्वादद्यापि सा नास्त्येवेत्याशयः । अत एव तत्र प्रसिद्धप्रमाणसूचनाय मूले **मत** इत्युक्तमवगन्तव्यम् ॥ **अत एवेति** ॥ विप्रतिपत्तिसद्भावेनावश्य- वक्तव्यत्वादेवेत्यर्थः ।

### प्राभाकरमतरीत्या अभावस्वरूपाक्षेपस्तत्खण्डनञ्च

**(टी.) अभाव एव नास्तीति केचित् । तदसत्, नास्तीति प्रतीते-र्दुरपह्नवत्वात् । घटो नास्तीति प्रतीतिर्भूतलमात्रविषयेति चेत् । मात्रेति किं भूतलमेवोच्यते उतातिरिक्तं किञ्चित् । आद्ये घटवत्यपि प्रसङ्गः । अतिरिक्तोऽपि घटश्चेदुक्तो दोषः । भावान्तरं चेद्रूपवति घटे गन्धो नास्तीति प्रतीतिप्रसङ्गः ।**

### प्राभाकरेण विपक्षे बाधकप्रदर्शनपुरःसरं स्वपक्षस्थापनं तन्निरासश्च

**ननु घटाभावोघटाभाववति भूतले सम्बध्यते उत घटवति । नाद्यः, आत्माश्रयादिदोषप्रसङ्गात् । न द्वितीयः, विरोधात् । अतो वक्तव्यं भूतल मात्र इति । तदेवास्तु नास्तीति प्रतीतिविषय इति चेत् । प्रश्न एवायं विविच्यताम् । यद्यभावसम्बन्धात्प्राक्कीदृशं भूतलमिति, यदि वा सम्बन्ध समये कीदृशमिति, यद्वा यद्यभावादिदं विविच्येत तदा कीदृशं नाम स्यादिति, आद्ये सघटमित्येवोत्तरम् । द्वितीये घटाभाववदिति । तृतीये यदि विवेको वस्तुकृतः तदाऽभावस्य नष्टत्वाद्घटवदिति ।। यदि बुद्धि-कृतस्तदा बुध्यैव घटप्रसक्तिमदिति । अन्यथा एवं भावप्रतिक्षेपोऽपि स्यादित्यास्तां विस्तरः ।**

**(रा.टि.)** विवादं प्रदर्शयन्निराह ।। **अभाव इति** ।। केचित् **प्रभाकराः** ।। **भावान्तरमिति** ।। नास्तीतिधीविषय इति योज्यम् ।। **रूपवतीति** ।। रूपस्यैव तत्र भावान्तरत्वादिति भावः । अभाववादिनं प्रति बाधकोपन्या-समुखेन स्वोक्तपक्षं स्थापयति परवादी ।। **नन्वित्यादिना** ।। **आत्मा-श्रयादीति** ।। अभावभेदाङ्गीकारे अन्योन्याश्रयादिरादिपदार्थः ।। **इदमिति** ।। भूतलमित्यर्थः ।। **अभावस्य नष्टत्वादिति** ।। तस्य घटसम्बन्धप्रागभाव-रूपत्वादिति भावः ।। **भावप्रतिक्षेपोऽपीति** ।। 'घटोऽपि किं घटवति भूतले सम्बध्यते उत घटरहिते । नाद्यः, आत्माश्रायादिप्रसङ्गात् । नान्त्यः विरोधात् । अतो भूतलमात्र इति वक्तव्यम् । स एव च घटादिप्रतीति-विषयोऽस्तु किं घटादिना' इत्यपि वक्तुं शक्यत्वादिति भावः ।

**(श्री. टि.)** अभावपदार्थसमर्थनार्थतामेव वादिविप्रतिपत्तिं दर्शयति ।। **अभाव एवेति** । केचित् मीमांसकाः ।। **भूतलमात्रेति** । तथाचाधि-करणातिरिक्ताभावो नास्तीति भावः ।। **घटवत्त्यपीति** । नास्तीति प्रतीतेर्भूतलमात्रविषयत्वे घटवत्यपि भूतले घटो नास्तीति प्रतीतिः स्यात् ।

नास्तीति प्रतीतिविषयस्य भूतलस्य घटसत्तायामपि सद्भावादित्यर्थः । घटो नास्तीति प्रतीतिर्भूतलातिरिक्तविषया चेत् तर्हि तत्र पृच्छामः । नास्तीति प्रतीतिविषयभूतं भूतलातिरिक्तं वस्तु किं प्रतियोगिभूतो घट एव उत प्रतियोगिभिन्नं भावान्तरमिति । नाद्य इत्याह ।। **उक्तदोष इति** । घटवत्यपि भूतले घटो नास्तीति प्रतीतिप्रसङ्ग इत्यर्थः । द्वितीयमाशङ्क्य निषेधति ।। **भावान्तरमिति** । प्रतियोगिभिन्नमित्यर्थः ।। **रूपवतीति** । गन्धो नास्तीति प्रतीतेः प्रतियोगिभूतगन्धभिन्नघटरूपाधिकरणभिन्नरूपाख्यभावान्तर विषय कत्वं स्यादित्यर्थः ।। **आत्माश्रयादीति** । घटाभाववतीत्यत्र प्रष्टव्यम् । किं स्वविशिष्ट एव भूतले स्वयं सम्बध्यते किं वा भावान्तरेण विशिष्टे । नाद्यः । आत्माश्रय प्रसङ्गात् । स्वस्यैवाधाराधेयकोटि प्रविष्टत्वात् । न द्वितीयः । अन्योन्याश्रयादिप्रसङ्गादित्यर्थः ।। **भूतलमात्र इतीति** । घटतदभावाभ्याम विशेषितमेव भूतलं घटाभावाधिकरणमिति वक्तव्यमित्यर्थः । **तदेवेति** । तथा च न तदतिरिक्तोऽभावरस्तीति भावः । घटाभावो घटाभाववति भूतले सम्बध्यते उत घटवतीति प्रश्नवाक्यस्य घटाभावसम्बद्धं भूतलं कीदृगिति लब्धोऽर्थः ।

तं विकल्प्य पृच्छति । **प्रश्ना एवायमिति** । प्रश्नवाक्यार्थ एवेत्यर्थ । **सम्बन्ध समय एवेति** । घटाभावसम्बन्ध समय इत्यर्थः । इदं भूतलम् ।। **स घटमिति** । अत्र सर्वत्र घटशब्देन घटसंसर्गो विवक्षितः । घटसंसर्गाभावस्य वक्ष्यमाणत्वात् ।। **घटाभाववदिति** । अस्य च नास्तीति प्रतीति विषय-त्वाङ्गीकारे पर्यवसितं विवादेनेति भावः । नचात्माश्रयः । पूर्वमभाववति भूतले पश्चाद्यद्यभावः सम्बध्येत तदा परमात्माश्रयः । न चैवम् । अभावतत्सम्बन्धयोर्भूतलाश्रितत्वस्यैककालीनत्वात् । अत एव तयोरेक-कालीनत्वेनात्माश्रयपरिजिहीर्षया काल एव विकल्पितः ।

ननु तथाप्यभावसम्बन्धाधिकरणतावच्छेदकं किमिति प्रश्नाशय इति चेत् । अभाववद्भूतलत्वमेवेति वदामः । न चैवमात्माश्रयः । अभावस्य तटस्थतयैव

व्यावर्तकतयाऽऽश्रयकोटावप्रवेशात् । यथा घटप्रागभावत्वादीनां घटकारण-तावच्छेदकत्वेऽपि घटस्य तटस्थतया व्यावर्तकत्वेन न कारणकोटौ प्रवेश-स्तथा प्रकृतेऽपीति न काप्यनुपपत्तिः । तथाचातिरिक्ताभावानङ्गीकारे अधिकरणस्योक्तरीत्याऽविषयत्वेन नास्तीति प्रतीतिर्निरालंबना स्यादिति पूर्वोक्तमुपपन्नमेवेति तात्पर्यम् ।। **यदि विवेक इति ।** अभावादिदं विविच्येतेत्यत्र विवेको भेदो भूतलघटाभावरूपवस्तुकृत इत्यर्थः । भूतलं यदा भावाद्विविक्तं जातं तदा अभाव सम्बन्धो नष्ट इति यावत् । तदा कीदृशं भूतलमिति प्रश्नार्थ इति भावः ।। **घटवदिति ।** घटसम्बन्धवदित्येवोत्तर-मित्यर्थः ।। **बुद्धिकृत इति ।** विवेक इति वर्तते । यदा भूतले घटाभावो नास्तीति ज्ञायते तदा कीदृशं भूतलमिति प्रश्नस्य बुध्यैव घटप्रसक्ति-मदित्युत्तरम् । तत्र प्रतियोग्यधिकरणसंसर्गज्ञानरूपघटप्रसत्त्यभावे घटाभावा भावज्ञानानुपपत्तेरित्यर्थः ।।

**अन्यथेति ।** अधिकरणातिरिक्ताभावानङ्गीकार इत्यर्थः । तत्रापि घटो स्तीति बुद्धेरपि अधिकरणभूतलमात्रविषयत्वस्य वक्तुं शक्यत्वात् । तथा घटो घटवति भूतले सम्बध्यते उत तदभाववतीति । नाद्यः । आत्माश्रयप्रसङ्गात् । न द्वितीयः । विरोधादित्येवं विकल्पदूषणयोश्च समत्वादिति भावः ।। **भावप्रतिक्षेप इति ।** भावपदार्थापलाप इत्यर्थः । किञ्च भूतलस्यैवाभावत्वे इह भूतले घटाभाव इत्याश्रयाश्रयिभावानुपपत्तिः । अभावस्य प्रतियोगि-सापेक्षत्वानुपपत्तिश्चेत्यादिदूषणगणदुष्टोऽयं पक्षः । ग्रन्थबहुत्वं स्यादित्येवो-परम्यत इत्याशयेनाह ।। **इत्यास्तांविस्तर इति ।।**

**(स. टि.)** भावाभावविभागकथनानुपपत्तिं प्राभाकररीत्या शङ्कते ।। **अभाव एव नास्तीति ।।** अभाव एव यद्यनिष्पन्नस्वरूपस्तदा दूरे तद्घटितविभाग कथनमिति विभागो न सम्भवतीत्यनेन सूचयति । परिहरति ।। **तदसदिति ।।** न हि वाङ्मात्रेणार्थसिद्धिरित्यतो हेतुमाह ।। **नास्तीति-प्रतीतेरिति ।।** प्रतीतिर्या या सा सर्वापि सविषया । तथा च घटो नास्तीति

प्रत्ययस्यापि विषयेण भाव्यम् । न च स नास्तीत्यपलापो युक्तः । अनुभवविरोधादिति भावः । प्रतीतिपदेन तद्विषयस्याभावस्योपलक्षणम् । तेनात्र घटो नास्तीति प्रतीतिविषयस्य तस्य दुरपलापत्वादित्यर्थ इत्यप्याहुः । न प्रतीत्यन्यथोप पत्त्या भावकल्पना युक्ता । सा चाधिकरणादिगोचराङ्गीकर्तुमुचितेत्याशङ्कते ॥ **घटो नास्तीति प्रतीतिरिति** ॥ अभावादेर्विषयत्वमनङ्गीकुर्वाणो भूतलस्यैव विषयत्वं वर्णयाम्बभूवेति मात्रपदव्यावर्त्याभावात्तद्वैयर्थ्यं विकल्पमुखेनाह ॥ **मात्रेतीति** ॥ मात्रान्तपदेनेत्यर्थः । भूतलमेव भूतलपदशक्यमेव । **अतिरिक्तं** भूतलपदवाच्यात् । सामग्रीसद्भावे प्रतीत्यभावानुपपत्तेर्घटवत्यपि भूतले भूतलस्य सत्त्वान्नास्ति घट इति प्रतीतिः स्यादित्यनिष्टं प्रथमपक्षे प्रसञ्जयति ॥ **आद्य इति** ॥ अतिरिक्तो भूतलाद्धट एव चेत् सत्यपि घटे नास्तीति प्रतीतिविषयस्य भूतलस्य सत्त्वान्नास्तीति प्रतीतिर वर्जनीयेत्यतिरिक्तो घट इति वक्तुं न युक्त इति वक्ति ॥ **अतिरिक्त इति ।** उक्तो दोषः अतिप्रसङ्गरूपः । द्वितीयं कल्पं विकल्पयति ॥ **भावान्तरम् चेदिति** ॥ प्रतियोगिभूताद्धटादन्यो भावश्चेदित्यर्थः । दोषमाविष्करोति ॥ **रूपवतीति** ॥ गन्धघटाभ्यां प्रतियोग्यधिकरणभूताभ्यां भिन्नस्य रूपरूपभावान्तरस्य विषयस्य सद्भावाद्गन्धो नास्तीति प्रतीतिः स्यादित्यर्थः । दोषप्रमोषाय यतते ॥ **नन्विति** ॥ घटप्रतियोगिकोऽभावो घटाभावः । सोऽस्यास्तीति घटाभाववत् भूतलम् । तस्मिन्सम्बध्यते वर्तते । अभावपदं ध्वंसपरम् । अथवा भावः सत्त्वम् । तदभावोऽसत्त्वं सम्बन्धाभाव इत्यर्थः । ततश्च घटैतद्भूतलसंसर्गाभाव उच्यते । यद्वा घटात्यन्ताभावः अभिनवगदाद्युक्तप्रकारेण प्रामाणिकप्रतियोगिको वर्तत इति परोक्तानुवादतया वा ग्राह्यः । अप्रामाणिकप्रतियोग्येव, नापि परोक्तानुवाद इति पक्षे पूर्वोक्तः संसर्गाभाव इति विवेको द्रष्टव्यः । उत घटवति सम्बध्यत इति वर्तते । सम्बध्यत इति न लडर्थविवक्षा । ततश्च विकल्पः सम्भवति । विशेषस्तु पाण्डुरङ्गीयैतद्व्याख्यानतोऽवगन्तव्यः । स्वसम्बद्धे भूतले वर्तत इति

मनुषे चेत्स्वस्याश्रयकोटौ निविष्टतयाऽऽत्माश्रयः । स्वातिरिक्तैकाभाव सम्बद्ध इति जानासि चेत् स्वातिरिक्ता भावः स्वसम्बद्धश्चेदात्माश्रयः । अथ स्वान्यैतदभावसम्बद्धश्चेत्परस्पराश्रयः । अभावत्रितयस्वीकारे चक्रकम् । अनवधिकाभावोररीकारेऽनवस्था च भवेयुरित्याह ॥ **नाद्यः । आत्माश्रयादि प्रसङ्गादिति ॥ उत घटवतीति** द्वितीयपक्षमधिक्षिपति ॥ **न द्वितीय इति ॥** कुत इत्यत आह ॥ **विरोधादिति ॥** तद्वति तदभावसम्बन्धो व्याघातान्नाङ्गीकारार्हः । परिशेषे सिद्धमाह ॥ **अत इति ॥** अतः घटाभाववद्घटवदिति पक्षद्वयस्याप्यात्माश्रयादिविरोधाद्दुष्टत्वात् । **वक्तव्यं त्वयेति शेषः । भूतलमात्र इति मात्रपदेन घटघटाभावाविशेषितं भूतलं ग्राह्यमिति सूचयति ॥ तदेवेति ॥** निषेधप्रक्रियां विकल्पमुखेनारभते ॥ **नेति ॥ अयं प्रश्नः** घटाभावः कुत्र सम्बध्यत इति प्रश्नः । तद्वाक्यम् । यद्वा प्रश्नः प्रश्नार्थः । **विविच्यताम्** विव्रियताम् । विवरणप्रकारमेव विवृणोति ॥ **यदीति ॥ अभावसम्बन्धात्** घटाभावसम्बन्धात् । क्वचिद्यदि घटाभावसम्बन्धादिति पाठेऽर्थस्तु स्पष्टः ॥

**यदि वेति ॥ सम्बन्धसमये** अभावेन साकं सम्बन्धसमये । **अभावात्** घटाभावात् । **इदम्** भूतलम् । **विविच्येत** वियुज्येत । **तदा** तर्हि ॥ **कीदृशम् नाम स्यादितीति ॥** कीदृशं स्यान्नामेत्यन्वयः । विकल्पक्रमानुगुणमुत्तरक्रममाह ॥ **आद्य इत्यादिना ॥** आद्ये घटाभावसम्बन्धात्प्राक्कीदृशमिति पक्षे । **सघटं** घटसम्बद्धम् । उत्तरं वाच्यमिति शेषः । उत्तरत्र उत्तरं वाच्यमित्यपि शेषः । **द्वितीये** सम्बन्धसमये कीदृशमिति पक्षे ॥ **तृतीय इति ॥** यद्यभावादिदमित्यादितृतीये । **विवेकः** वियोगः । अभावनाशकृतः तदाऽभावस्य नष्टत्वाद्घटसम्बद्धमिति । घटसंसर्गप्रागभावनाशस्य घटसंसर्गरूपत्वात् । बुद्धिकृतः विवेक इत्यनुवर्तते । बुध्द्यैवाङ्गीकृतः । **तदा** तर्हि । तयैव घटसंसर्गप्रतीतिमदित्युत्तरम् । नन्वभावः कुत्र सम्बध्यत इति प्रश्नार्थस्य लोकोक्तमुत्तरमस्तु । तथापि न घटाभावो घटाभाववति देशे

तथाविधकाले वाऽस्ति । आत्माश्रयादिप्राप्तेः । नापि घटवति देशे काले वा । विरोधादिति पक्षद्वयेऽपि दोषसद्भावादित्यतिरिक्ताभाववादो न युज्यत इत्याशङ्कमानं प्रति विपक्षे बाधकमाह ।। **अन्यथेति ।।** अधिकरणभिन्नाभावानङ्गीकारे । भावप्रतिक्षेपः घटो भूतलदेशे घटवति तथाविधे काले वा वर्तत इति चेदात्माश्रयादिकम् । घटा भाववति चेद्विरोध इत्येवं घटादिभावप्रतिक्षेपोऽपि स्यादित्यतिप्रसङ्गो द्रष्टव्यः । यथैतत्परिहाराय यतसे तथाहमपि यते । यश्चोभयोः समो दोषः परिहारोऽपि वा सम इति दोषसाम्यमनेन दर्शयति । न हि पराङ्गन्यायेन दोषसाम्योपपादनमेव दोष इत्यतो यथाप्रामाणिकत्वाद्गुणानामपलापोऽयुक्तस्तथा मानसिद्धत्वादभावादीनामपलापो न युक्त इति ग्रन्थगौरवभीरव उपसंहरन्ति ।। **इतीति ।।** वक्तव्यं सर्वमर्थादुक्तमतो न शब्दतो विवरणं क्रियत इति विस्तरशब्दं प्रयुञ्जानः सूचयामासेति ज्ञेयम् ।

**(पां.टि.)** तामेव विप्रतिपत्तिं दर्शयति **अभाव एवेति** । अभाववादिनाऽपि अधिकरणसापेक्षत्वमभ्युपगतमेव तथा च आवश्यकाधिकरणस्वरूपादेव अभावप्रतीतिव्यवहारयोः अन्यथासिद्धेः न अतिरिक्ताभावकल्पकमस्ति इत्यर्थः । न चैवम् 'अधिकरणज्ञानस्यैव अभावगोचरत्वापत्त्या कथं घटाभावादिसंशयावकाशः? इति वाच्यम् । अधिकरणज्ञानस्य वस्तुतो घटाभावगोचरत्वेऽपि तदप्रकारकत्वात् न तदभावसंशयविरोधित्वम् । समानप्रकारकनिश्चयस्यैव संशयविरोधित्वस्य सर्वसम्मतत्वादिति भावः ।।

नास्ति इति प्रतीतिरेव अभावं विना अनुपपद्यमानत्वात् तत्कल्पिका इति तत्कल्पकसद्भावात् अभावोऽपि अङ्गीकार्यः इत्याशयानुपपत्तिं दर्शयति **तदिति** । एतेन अभावानङ्गीकारे प्रतीतिविरोधः स्यात् इत्युक्तं भवति ।

ननु न प्रतीतिविरोधः प्रतीतेः अधिकरणमात्रविषयत्वेन उपपत्तेः इति शङ्कते **घटो नास्तीति** । भूतलमात्रम्'इत्यस्य हि 'घटवद्भूतलं वा अर्थः' इति न परेण वक्तुं शक्यम्, घटरहितत्वघटवदन्यत्वयोः अभावगर्भतया

तत्स्वीकारप्रसङ्गात् । किन्तु अन्य एव इति भावेन विकल्पं पृच्छति **किमित्यादिना ॥** तथा च अत्र पक्षे भूतलमात्रशब्दे भूतलशब्दसमानार्थ एव इति भावः ॥ **उतेति ।** मात्र शब्दस्य निरर्थकत्वभीत्या 'भूतलमात्रम्' इत्यस्य स्वातिरिक्तवस्तुविशिष्टभूतलम् इत्यर्थः इति भावः । **आद्य इति ।** घटवद्भूतलस्यापि भूतलमात्रत्वात्, घटवत्यपि भूतले घटाभावधीः स्यादित्यर्थः ॥ **उक्तो दोष** इति । घटवति भूतले 'घटो नास्ति' इति प्रतीति-प्रसङ्गरूपः इत्यर्थः । **भावान्तरं चेदिति ।** भावविशिष्टे वस्तुनि अभाव-प्रतीतिः इति न परेण अङ्गीकर्तुं शक्यम् । अभावस्वीकारप्रसङ्गात् । अतः मात्र शब्देन भावान्तरवैशिष्ट्यमेव वक्तव्यम् इत्यभिप्रायेण भावान्तरं चेदित्युक्तम् ।

ननु मात्र इति किं भूतलमेव उच्यते? इत्यादिदूषणमयुक्तम् । स्वव्याहत-त्वात् । अतिरिक्ताभाववादिनाऽपि त्वया अभावाधिकरणत्वेन भूतलमात्रस्य अवश्यं वाच्यत्वेन, तत्रापि उक्तदूषणप्रसरात् । ततश्च परमते अभावस्य अधिकरणं न सिध्येत् । तस्मात् परेणापि 'भूतलमात्रम् अभावाधिकरणं' वदता मात्रशब्दार्थः कश्चिदङ्गीकर्तव्य एव इति तस्यैव मयापि अङ्गीकारेण नास्ति इति प्रतीतेः भूतलमात्रविषयत्वसम्भवात् न दोषः इत्याशयेन स्वाभिमतमर्थं परेण अङ्गीकारयितुम् आशङ्कते **नन्विति ॥ आत्माश्रया-दीति ।** 'घटाभाववति'इत्यत्र तेनैव अभावेन तद्वत्त्वं विवक्षितम्? अभावान्तरेण वा? आद्ये आत्माश्रयः । द्वितीये अभावान्तरमपि स्वेनैव तद्वति? अभावान्तरेण वा? इति । आद्ये तु आत्माश्रय एव । द्वितीयेऽपि किं प्रथमेन? उत अपरेण? आद्ये अन्योन्याश्रयः । द्वितीये- अपरोऽपि प्रथमेन तद्वति चेत् तदा चक्रकम् । चतुर्थादिना चेत् तदा अनवस्था इत्यर्थः । ननु कथं घटाभाववद्भूतलस्य घटाभावाधिकरणत्वे आत्माश्रयादिप्रसङ्गः? न च 'यद्विशिष्टे यद्वर्तते तद्विशेषणेऽपि तदस्ति' इति न्यानेन घटाभावेऽपि घटाभावसत्त्वापातेन आत्माश्रयः इति वाच्यम् । दण्डविशिष्टे कुण्डल-

सत्तायामपि दण्डे कुण्डलस्य असत्त्वेन नियमासिद्धेः । अन्यथा तदपि स्यात् इति चेत् । न भावानवबोधात् । यद्विशेषणाभावावच्छिन्नस्य यस्य यद्विशेषणाधारत्वमुपपद्यते तद्विशेषणे तद्विशेषणसत्तानियमाभावेऽपि यद्विशेषणाभावावच्छिन्नस्य यद्विशेषणाधारत्वं न सम्भवति तत्र तद्विशेषणे तद्विशेषणस्य सत्त्वं नियतमेव । व्यभिचाराभावात् । अस्ति च एतत् प्रकृते । घटाभावरूपविशेषणाभावावच्छिन्नघटवत्तया घटाभावरूपविशेषणवत्त्वा-सम्भवात् । ततश्च घटाभावरूपविशेषणे घटाभावरूपविशेषणसत्त्वे, अस्मिन् स्ववृत्त्या आत्माश्रयत्वं स्यादेव इति द्रष्टव्यम् । केचित्तु न वृत्तित्व-मात्रमात्माश्रयः, प्रमेयत्वस्यापि तथात्वेन केवलान्वयित्वाभावापत्तेः । किन्तु स्वमात्रवृत्तित्वमेव । घटाभावस्य स्ववृत्तित्वे सति भूतलवृत्तित्वाङ्गीकारात् न स्वमात्रवृत्तित्वमिति आत्माश्रयोऽत्र दुर्निरूप एव । अतद्गुणसंविज्ञान-बहुव्रीहिणा आदिपदोपात्तअन्योन्याश्रये एव च अस्य तात्पर्यमित्याहुः ।

**विरोधादिति** । घटवद्भूतलस्य घटाभावाधिकरणत्वं न सम्भवति, विरुद्धत्वादित्यर्थः । यद्यपि प्रागभावध्वंसाभावयोः अस्ति प्रतियोगि-सामानाधिकरण्यम्, तथापि न एककालिकं तत् इति एककालिकं सामानाधिकरण्यं विरुद्धमेव इति भावः ॥ अत्यन्ताभावमभिप्रेत्य इदमुक्तमित्याहुः ॥ **प्रश्न एवायमिति** । ननु 'अभावः किं घटाभाववति सम्बध्यते? घटवति वा? इति परेण प्रश्ने कृते कथं वक्ष्यमाणो विकल्पावकाशः? 'सम्बध्यते' इति वर्तमानप्रयोगात् 'घटाभावसम्बन्ध-कालीनं भूतलं कीदृशम्?' इत्यर्थस्यैव पर्यवसन्नत्वात् इति चेत् । न, भावानाकलनात् । अत्र हि यत्र भूतले अभावः सम्बध्यते तद्भूतलं कीदृशम्? इति प्रश्नाभिप्रायः । तत्र सम्बध्यते इति वर्तमानत्वविवक्षणात् सम्बध्यते इत्यस्य सम्बन्धवत् इत्येव अर्थः पर्यवसितो भवति । अभाव-सम्बन्धश्च तत्सत्तादशायामिव अभावसत्त्वदशायामपि प्रागभावादिरूपः सम्भवति इति युक्त एव विकल्पावसरः इति ध्येयम् । **वस्तुकृत इति** ।

वस्तुना कृतः इत्यर्थः । घटाभाववति भूतले घटानयनानन्तरमानीतेन घटाभावेन भूतलस्य अभावसम्बन्धसम्पादनात् इति भावः ।। **बुद्धिकृत इति ।** बुध्या तर्कितः इत्यर्थः । **अन्यथेति ।** अतिरिक्ताभावानङ्गीकारे इत्यर्थः ।। **भावेति ।** तत्र घटोऽस्ति' इति बुद्धेः 'घटो नास्ति' इति बुद्धेरिव भूतलमात्रविषयत्वस्य, 'घटवति घटः सम्बध्यते? तद्भाववति वा?' इति प्रश्नस्य आत्माश्रयापत्त्यादिरूपतद्दूषणस्य च साम्यादिति भावः ।

उपसंहरति **इतीति ।** 'घटो नास्ति' इति प्रतीतिविषयनिरूपणात्, अभावप्रतिक्षेपो न इत्यर्थः ।। 'नातिविस्तरम्' इति प्रतिज्ञाविरोधपरिहाराय आह **आस्तां विस्तर इति ।।**

**(का.टि.)** तामेव विप्रतिपत्तिं प्रदर्श्य निरस्यति ।। **अभाव एवेति ।।** निषेधत्वेन प्रथमप्रतीतिविषयपदार्थ एव नास्ति, दूरे तस्य परतन्त्रप्रभेदत्वमित्यर्थः । अत्र किमभावः साधकाभावान्नोपेयते उत बाधकभावात् । नाद्य इत्याह ।। **नास्तीति ।।** भूतले घटो नास्तीत्यादिप्रतीतेरित्यर्थः । प्रतीतेर्भावविषयत्वान्नाभावसाधकत्वमित्याशङ्कते ।। **घटो नास्तीति ।।** भूतलमात्रविषयेत्यस्याधाराधेयभावेनेत्यादिः । तेन प्रतियोगितया घटविषयत्वेऽपि न क्षतिः । तथा च भूतलादेः प्रथममस्तीत्युपलक्षम्यमानत्वान्नोक्ताभावत्वमिति भावः ।। **भूतलमेवेति ।।** उक्तप्रतीतिविषयत्वेनेति शेषः । मात्रपदेन भूतलातिरिक्तसामान्यव्यवच्छेदादिति भावः ।। **उतातिरिक्तमिति ।।** मात्रशब्दस्याभावमात्रव्यवच्छेदकत्वेन तदतिरिक्तभावान्तरलाभादिति भावः ।

**केचित्तु** भूतलमात्रपदस्य भूतलपदपर्यायत्वं वा किञ्चिद्विशिष्टभूतलपरत्वं वेति विकल्पार्थं वर्णयन्ति ।। **घटवत्यपीति ।।** घटविशिष्टभूतलेऽपि घटो नास्तीति प्रसङ्ग इत्यर्थः । अत्र घटसत्तादाशायामपि भूतलस्वरूपाभावसत्वादिति भावः । ननु घटवति घटप्रतीतिरूपविरोधिसत्वान्न घटभावप्रतीतिप्रसङ्गः । न च घटभूतलयोर्वस्तुनोर्विरोधाभावान्न तत्प्रतीत्योरपि विरोध इति वाच्यम् । अस्ति नास्तीति प्रतीत्योर्विरोधस्यापह्नोतु-

मशक्यत्वादिति चेत्सत्यम् । तथापि विरोधिप्रतीत्यसत्त्वदशायामुक्तप्रसङ्गो दुर्वारः । न च तदानीं घटसन्निकर्ष एव विरोधीति वाच्यम् । घटाभावस्यापि सन्निकृष्टत्वेन घटप्रतीतेरप्यनुपपत्तेः । घटवति दोषाधीनघटाभावप्रतीतेः प्रमात्वापत्तेश्च । द्वितीयपक्षे किं प्रतियोग्येवाभावत्वेन प्रतीयते उत तदतिरिक्तभावान्तरम् । नाद्य इत्याह ॥ **अतिरिक्तोऽपीति ॥ उक्तो दोषः** घटवति घटाभावप्रतीतिप्रसङ्गरूपः । द्वितीयं निराचष्टे ॥ **भावान्तरमिति ॥** धर्मिप्रतियोग्यतिरिक्तभाव इत्यर्थः ॥

**रूपवतीति ॥** रूपस्य धर्मिप्रतियोग्यतिरिक्तत्वेन गन्धाभावत्वादिति भावः । घटे गन्धस्यावश्यम्भावान्नेष्टापत्तिरिति ध्येयम् । अत्र यद्यपि घटवति घटातिरिक्तरूपादिसत्वेन घटो नास्तीति प्रतीतिप्रसङ्ग एव सम्भवति । न च प्रतियोगिजातीयभावान्तरस्याभावधीविषयत्वोपगमान्नायं प्रसङ्गः । रूपादेर-द्रव्यस्य घटविजातीयत्वादिति वाच्यम् । घटवति तदवयवकपालादेरेव सत्त्वात् । द्रव्यान्तरशून्ये घटाभावप्रतीत्यनुपपत्तेश्च । तथापि भावान्तरस्या-भावरूपत्वे गन्धाभावस्य रूपादिस्वरूपत्वाच्चक्षुर्ग्राह्यत्वरूपदोषान्तरसूचनाय गन्धाभावानुधावनम् । न च गन्धवति भूतले घटाभावप्रतीत्यापादनेऽपि घटाभावस्य घ्राणग्राह्यत्वप्रसङ्गसूचनं सम्भवतीति वाच्यम् । तत्र चक्षु-र्ग्राह्यरूपादेरेव घटाभावत्वोपगमेन निर्वाहादित्यवधेयम् । बाधकसद्भावान्ना-भावसिद्धिरिति द्वितीयपक्षमाशङ्कते ॥ **नन्विति ॥ आत्माश्रयादीति ॥** स्वस्यैव स्वधर्मिघटकत्व आत्माश्रयः । यदि धर्मभूताभावाद्धर्मिघटकाभावो भिन्नस्तदा तस्य धर्मभूताभाववत्येव सम्बन्धो वाच्य इत्यन्योन्याश्रयः । तद्धर्मिघटकाभावस्य ततोऽप्यतिरिक्तत्वे तत्सम्बन्धस्यैव प्रथमाभाववति वाच्यत्वाच्चक्रमम् । तत्तद्धर्मिघटकाभावपरम्परास्वीकारे चानवस्थेत्यर्थः । ननु कथमात्माश्रयः स्वोत्पत्तेः स्वोत्पत्त्यनपेक्षत्वात् । न च यत्र यद्विशिष्टवृत्तित्वं तत्र तद्विशेषणवृत्तित्वमिति व्याप्तेः स्वस्य स्ववृत्तित्वापत्तिरूपोऽयमात्माश्रय इति वाच्यम् । दण्डविशिष्टवृत्तिकुण्डले दण्डवृत्तित्वाभावेन व्यभिचारात् । न

च यत्र यद्विशिष्टमात्रवृत्तित्वं तत्र तद्विशेषणवृत्तित्वमिति व्याप्तिः । वह्नि-विशिष्टमात्रवृत्तिधूमादौ पृथिवीत्वविशिष्टमात्रवृत्तिगन्धादौ च वह्निपृथिवी-त्वादिवृत्तित्वाभावेन व्यभिचारात् । प्रमेयत्वादेरिव घटात्यन्ताभावादेरपि स्ववृत्तित्वस्य प्रामाणिकत्वेनादोषाच्च । यत्तु ''अभावज्ञानस्य धर्मिज्ञाना-धीनत्वेन ज्ञप्तावात्माश्रयः इति '' । तन्न । घटाभाववति घटो नास्तीति ज्ञानस्य घटाभावज्ञानाधीनतायाः प्रामाणिकत्वात् । भूतले घटो नास्तीत्यादि ज्ञानस्य च घटाभावज्ञानानपेक्षत्वात् । यत्तु ''अतद्गुणसंविज्ञानबहुव्रीहिणा आत्माश्रयादिशब्देन अन्योन्याश्रयादिरेव विवक्षित इति'' इति तदसत् । द्वयोः परस्परापेक्षाभावेन तदभावात् ।

उच्यते । विशिष्टसम्बन्धस्य विशेष्यविशेषणसम्बन्धाधीनत्वात् घटा-भावस्य घटाभावविशिष्टभूतलसम्बन्धो घटाभावभूतलसम्बन्धाधीनः । तथा च स्वनिष्ठतत्कालसम्बन्धस्य स्वनिष्ठतत्कालसम्बन्धाधीनत्व इव स्वनिष्ठ-तद्देशसम्बन्धस्य स्वनिष्ठतद्देशसम्बन्धाधीनत्वेऽप्यात्माश्रयो दुर्वार एव । घटाभावस्य भूतलसम्बन्धात्पूर्वं भूतलसम्बन्धासत्वेनेष्टापत्त्ययोगात् । न च विशिष्टसम्बन्धस्य विशेषणविशेष्यसम्बन्धात्पूर्वमसम्भवेऽपि केवलविशेष्य-सम्बन्धसम्भवः । केवलभूतलादौ घटाभावस्य सम्बन्धानभ्युपगमेन विशिष्ट-सम्बन्धस्यैव वाच्यत्वादिति पूर्वपक्षाभिप्रायः ।

तदित्यस्य तर्हीत्यादिः । भूतलमात्रमित्यर्थः । घटवति घटाभावधी-प्रसङ्गस्य, नियामकान्तराभावेन तद्वारणस्य च पक्षद्वयेऽपि साम्यादति-रिक्ताभावकल्पने गौरवमेव बाधकमित्याशयः । नन्वित्यादिप्रश्नवाक्यस्य षोढा व्याख्यानं सम्भवति । घटाभावः स्वसम्बन्धात्पूर्वं स्वसम्बन्धसमये स्वसम्बन्धानन्तरं वा यद्घटाभाववत्तत्र सम्बध्यते । किं वा स्वसम्बन्धात्पूर्वं स्वसम्बन्धसमये स्वसम्बन्धानन्तरं वा यद्घटवत्तत्र सम्बध्यते इति । एतेषां च फलतस्त्रिधैव प्रश्नपर्यवसानमित्याशयेन यथाश्रुतप्रश्नार्थं तावद्विकल्प्योत्तरमाह ॥ **प्रश्न एवायमिति** ॥ **कीदृशं** घटवद्घटाभाववद्वेत्यर्थः ॥ **सघटमिति** ॥

घटतद्भावयोः कालभेदेन विरोधाभावादिति भावः ।। **घटाभाववदित्येवोत्तर मिति** ।। तावता स्वसम्बन्धाधीनत्वासिध्या आत्माश्रयाद्यनवकाशादिति भावः ।

**विवेको** विभागः । **वस्तुकृतो** वास्तवः । **बुद्धिकृत** आरोपितः । सत्यपि घटाभावे तदसत्वभ्रम इति यावत् **बुद्धिकृत** आरोपितः । सत्यपि घटाभावे तदसत्वभ्रम इति यावत् ।। **बुध्येति** ।। घटाभावासत्वबुध्या घटारोप विषय इत्यर्थः । अत्राभावपदेन घटसंसर्गाभावो यथासम्भवं ग्राह्यः । ननु न वयमुक्तरीत्या वस्तुस्वरूपं पृच्छामः । येनोक्तबाधकपरिहारः स्यात् । अपि तु घटाभाववत्वे किं नियामकमिति । घटाभाव एव चेत्कथमात्माश्रयादिर्न स्यादतस्तत्कालविशिष्टतद्देशस्यैव नियामकत्वं वाच्यम् । तथा च तस्यैवा-भावत्वसम्भवादतिरिक्ताभावकल्पने गौरवं दुर्वारमेवेत्यत आह ।। **अन्यथेति** ।। एवमभावप्रतिक्षेपे तथैव भावस्य घटादेः प्रतिक्षेपः स्यादित्यर्थः । तथा हि, घटवत्वे घटवत्वस्यैव प्रयोगकतायामात्माश्रयादिप्रसङ्गाद्देशविशेषादेरेव नियामकता वाच्या । तथा च तस्यैव घटबुद्धिविषयत्वसम्भवादतिरिक्त-घटकल्पने गौरवम् । यदि च देशविशेषादेरननुगतत्वादनुगतेश्वरेच्छा-विशेषस्यैव नियामकत्वं, तस्य चातीन्द्रियस्य घटादिबुद्धिविषयत्वायोगात् पृथक्प्रतीत्या च घटादिसिद्धिरित्युच्यते तदा तुल्यमभावेऽपि । तस्यापि प्राक्प्रध्वंससदात्वेन पृथक्प्रतीतेः । किं चासति सत्वाभावस्यासद्रूपत्वा-सम्भवादनन्ताधिकरणानामभावत्वकल्पनापेक्षया लाघवाच्चातिरिक्ताभाव-सिद्धिरित्याशयेनोक्तम् ।। **इत्यास्तां विस्तर इति** ।।

## अभावनिरूपणम्

**(टी.) द्विधेत्युक्त्या भावाभावयोरवान्तरभेदोऽस्तीति सूचितम् । तत्र भावनिरूपणादभावनिरूपणस्याल्पत्वात्सूचीकटाहन्यायेन पश्चादुद्दिष्ट-मप्यभावमादौ विभागेनोद्दिशति**

**प्राक्प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते ।**

**प्राक्त्वेन प्रध्वंसत्वेन ·सदात्वेनोपलक्षितोऽभावस्त्रिविध इष्यते प्रामाणिकैरिति शेषः ।**

**प्रागभावप्रध्वंसाभावयोर्निरूपणम्**

**उत्तरैकावधिरभावः प्रागभावः । प्रतियोग्युत्पत्तेः प्रागेवाभावोऽस्ति । उत्पन्ने तु तस्मिन्नास्तीति कृत्वा । पूर्वैकावधिरभावः प्रध्वंसाभावः । प्रतियोगिप्रध्वंसान्तरमेवाभावो न तु प्रागस्तीति ।**

(रा.टि.) ॥ **उपलक्षित इति** ॥ स्वस्वरूपानुप्रविष्टैरेवेतरस्माद्व्यावर्तित इत्यर्थः । इत्थम्भूतलक्षणे तृतीयेति भावः । घटादिव्यावृत्त्यर्थं उत्तरैकेत्येक-पदम् । एवमग्रेऽपि । घटादेर्वक्ष्यमाणदिशा प्रध्वंसप्रागभावरूपत्वेऽपि उभया वधिमत्वात् । यद्वा अनित्यवस्तुस्वरूपात्मकान्योन्याभावस्य पूर्वोत्तरा-वधिमत्वात्तद्व्यावृत्त्यर्थमुत्तरैकेति पूर्वैकेति चैकपदम् । **अनित्यवस्तुनिष्ठभेदा अनित्या इति टीकोक्तेः** । घटादिसामग्र्यामनतिव्याप्तयेऽभावपदम् । एवं प्रध्वंसलक्षणेऽपि विनाशसामग्र्युत्तरकालेनानतिव्याप्तये अभावपदम् । कुत एतदित्यतस्तत्र प्राक्पदसूचितयुक्तिमाह ॥ **प्रतियोगीति** ॥ न तु प्राग-स्तीतीतिशब्दो हेत्वर्थः । एतेन मूले तृतीया हेतावित्यपि व्याख्यातं भवति ।

(श्री. टि.) **सूचितमिति** । अन्यथा भावाभावौ द्वावित्येवोच्येतेति भावः ॥ **विभागेनेति** । सहेति शेषः । तथा च विभागोद्देशौकरोतीत्यर्थः । **प्राक्त्वे-नेत्यादि** । प्राक्त्वादि नाव्यावर्तकधर्मेणोपलक्षितो व्यावर्तितोऽभावस्त्रिविध इत्यर्थः । ''अनेन प्राक्प्रध्वंस सदात्वेने''ति तृतीया न हेतौ । किं त्वित्थं-भूतलक्षण इति दर्शितं भवति ॥ **उत्तरैकावधिरिति** । यस्याभावस्य स्वापेक्षया उत्तरकाल एव प्रतियोग्यधिकरणकाल एवेति यावत् । अवधिर-नधिकरणो न पूर्वकाल इत्यर्थः । तथाच योऽभावः प्रतियोग्युत्पत्तिकाला-पेक्षया प्रागेवास्ति स प्रागभाव इति फलितोऽर्थः ।

अत इत्थं लक्षणवाक्यार्थमभिप्रेत्य लक्ष्ये उपपादयति ॥ **प्रतियोग्युत्पत्ते-रिति** । अत्राभाव इत्यनुक्तौ प्रतियोगिभूतघटोत्पत्तिकालापेक्षया प्रागेव विद्यमाने घटसामग्र्यादावतिव्याप्तिः स्यात् । तदर्थमभावपदम् । प्रतियोगि-कालापेक्षयेत्यनुक्त्वायोऽभावः प्रागेवास्तीत्येवोक्तावसम्भवः स्यात् । घट-प्रागभावस्य तंत्वाद्युत्पत्त्यनन्तरमपि सत्त्वात् । अतः प्रतियोगिकाला-पेक्षयेत्युक्तम् । तथा च नासम्भवः । प्राक्पदानुपादाने प्रतियोगिभूतघट-कालापेक्षया पश्चाद्विद्यमाने घटध्वंसेऽतिव्याप्तिः स्यात् । तदर्थं प्रागित्युक्तम् । अवधारणाभावे घटप्रतियोगिकान्योन्याभावरूपे घटध्वंसे प्रतियोगिभूत-घटकालापेक्षया पूर्व(मपि विद्यमानेति)भावेऽतिव्याप्तिः स्यात्तदर्थं प्रागे-वेत्यवधारणम् । तस्य पश्चादपि विद्यमानत्वान्नातिव्याप्तिरिति सर्वं सार्थकम् । ननु प्राक्त्वं नाम प्रागभावावच्छिन्नसमयवृत्तित्वम् । अत एवात्माश्रय इति चेन्न । प्राक्त्वस्य साधारणकालविशेषनिष्ठस्य स्वभावतया घटत्वादि-वदखण्डधर्मत्वाङ्गीकारात् । उक्तं च भगवत्पादैः । स्वत एव काले विशेषाङ्गीकृतेश्चेति ॥ **पूर्वैकावधिरिति** । यस्याभावस्य पूर्वकाल एवावधि-रनधिकरणसमयो नोत्तरकाल इत्यर्थः । तथा च योऽभावः प्रतियोगि-कालापेक्षयोत्तरकाल एवास्ति स प्रध्वंस इति पर्यवसितोऽर्थः । इममेवार्थ-मभिप्रेत्य लक्ष्ये उपपादयति ॥ **प्रतियोगीति** । अत्राभावपदानुपादाने प्रतियोगिकालापेक्षयोत्तरकाल एव विद्यमाने उत्तरकालेऽतिव्याप्तिः स्यात् । तदर्थमभावपदम् । प्रतियोगिकालापेक्षयेत्यनुक्तौ असम्भवः । पटध्वंसस्य तंत्वाद्युत्पत्तिकालात्प्रागपि सत्त्वात् अतः प्रतियोगिकालापेक्षयेत्युक्तम् । तथा च नासम्भवः । उत्तरेत्यनुक्तौ घटप्रतियोगिकालात् प्राक्काले विद्यमाने प्रागभावेऽतिव्याप्तिः स्यात्तदर्थमुत्तरपदम् । अवधारणानुक्तौ घटप्रतियोगिका न्योन्याभावात्मके पटप्रागभावे प्रतियोगिभूतघटकालापेक्षया परतोऽपि विद्यमाने अतिव्याप्तिस्स्यात् । तदर्थमुत्तरकाल एवेत्युक्तम् । तस्य प्रागपि सत्त्वान्नातिव्याप्तिरिति न पदानां वैयर्थ्यमित्यवधेयम् । अन्ये तु **उत्तरेत्यस्य**

विनाश्यभाव इत्यर्थः । पूर्वेत्यस्य प्रागभावप्रतियोग्यभाव इत्यर्थ इत्याहुः । तच्चिन्त्यम् । प्रागभावप्रध्वंसनिरूपणयोः परस्परसापेक्षत्वेन परस्पराश्रय प्रसङ्गादिति । उत्तरैकावधिरिति प्रागभावस्य विनाश्यभावत्वमुक्तम् । पूर्वैकावधिरिति प्रध्वंसस्य साद्यभावत्वमुक्तम् ।

**(स.टि.)** प्राग्विधाशब्देनेवात्र धाप्रत्ययेनावान्तरभेदवन्ताविति सूचितम् ।

तत्र प्रथमोद्दिष्टत्वाद्भावविभाग एवादौ बोधनीयः । तथापि प्रथमं ज्यायस्त्वेन बुद्धावनारोहात्सूचीकटाहन्यायेनाभावविभागमेवादावाहेत्याह ॥ **द्विधेत्युक्त्येति** ॥ सूचीकटाहन्यायेनेत्युपलक्षणम् । परेणानङ्गीकृताभावाङ्गीकारणप्रसङ्गसंनिधापितोऽभाव इति तस्यैवादौ विभागप्रदर्शनमावश्यकमित्यपि निरूपणप्रयोजनमवधेयम् । मूले ''प्राक्प्रध्वंससदात्वेन'' इत्यत्र द्वन्द्वान्ते श्रूयमाणस्त्वप्रत्ययः सर्वत्रान्वेतव्य इत्याह ॥ **प्राक्त्वेनेत्यादिना** ॥ प्राक्त्वादितादात्म्यमभावस्य किमित्यतः तृतीयाया विवक्षितार्थाभिधानेन समाधिमभिधत्ते ॥ **उपलक्षित इति** ॥ व्यावर्तकधर्मोपेत इत्यर्थः । इदमुक्तम् भवति । प्रागिति ध्वंसात्यन्ता भावाभ्यां प्रध्वंसेति प्रागभावात्यन्ताभावाभ्यां अत्यन्तेति प्रागभाव प्रध्वंसाभ्यामिति परस्परव्यावर्तकमतिजनकप्रागादि विशेषणोपेतोऽभावस्त्रिविध इति । अभाव एव यदाङ्गीकर्तुम् नोचितस्तदा दूरे तद्विभागकथेत्यतः प्रामाणिकत्वान्नागणनीय इति भणति ॥ **इष्यत इति** ॥ अनुवादोऽन्वयप्रदर्शनाय । बुद्धिमत्त्वावच्छेदेनेदं संमतमिति वक्तुं तत्रापेक्षितं पूरयति ॥ **प्रामाणिकैरिति शेष इति** ॥ अप्रामाणिक प्रतियोगिकत्वेन जघन्यत्वात् प्रामाणिक प्रतियोगिकत्वेन कैश्चिदङ्गीकृतत्वेऽपि प्रामाणिकाप्रामाणिकप्रतियोगिकत्वाद्गौरवात् ततः प्राक्केवलप्रामाणिक प्रतियोगिकौ प्रागभावध्वंसौ निरूप्यौ । तत्रापि धर्मितोऽपि पूर्वभावी तथा निरूप्य इति तथैव मूलकृन्निर्दिदेश । तमेवानुसृत्य प्राक्त्वेन प्रध्वंसत्वेन सदात्वेनेति टिटीकिरे टीकाकृत्पादा इति बोध्यम् । निर्देशानुसारात्ताँ ल्लक्षयति ॥ **उत्तरैकावधिरिति** ॥ उत्तरः स्वाधिकरण-

कालापेक्षयाऽनन्तरभावी प्रतियोग्यधिकरणकालः । स एकः केवलं अवधिः मर्यादाभूतो यस्य स प्रागभाव इत्यर्थः । अभाव इत्येवोक्ते निरवधिकेऽत्यन्ताभावेऽतिव्याप्तिः । तन्निरासार्थमवधिमानित्युक्तम् । तावत्येवोदिते प्रध्वंसाभावेऽतिव्याप्तिः । तन्निराकृत्या उत्तरेति चोक्तम् । उत्तरावधित्वं प्रागभावस्य लक्षणमित्येवोक्ते घटसामग्रयामतिव्याप्तिः । तत्परिजिहीर्षुरभाषताभाव इति । घटनिष्ठान्योन्याभावपराकृत्या एकेति पदम् । इदं चानित्यगत भेदस्यानित्यत्वमिति टीकापक्षमाश्रित्येति ज्ञेयम् ।

उत्तरैकावधिरित्येवोक्ते प्रागभाववर्तिप्रमेयत्वाभिधेयत्वसत्त्वादिष्वतिव्याप्तिः स्यात्तदर्थमभावेति वर्णयाम्बभूवुः । प्रागभावनिष्ठाभिधेयत्वादेर्निष्प्रतियोगिकत्वेन भावत्वादभाव इत्यनेन तद्व्यावृत्तिः । विशिष्टस्य घटप्रागभावनिष्ठान्योन्याभावेऽतिव्याप्तिरिति चेन्न । विवक्षावशाद्धर्म्यतिरिक्ताभावस्यैवाभावपदेन ग्रहणात् । एकपदं स्वरूपकथनपरमिति ज्ञेयम् । तदेवोपपादयति ॥ **प्रतियोग्युत्पत्तेरिति** ॥ उत्पत्तेः **प्राक्** पूर्वम् । **अभावः** घटाभावः । **तस्मिन्** घटे । **उत्पन्ने** स नास्तीति कृत्वा उत्तरैकावधिरभावः प्रागभाव इत्यर्थः । क्रमागतं प्रध्वंसं लक्षयति ॥ **पूर्वैकावधिरिति** ॥ स्वाधारकालात्पूर्वभाव्येकोऽवधिर्मर्यादारूपः प्रतियोग्यधिकरणान्तिमक्षणात्मकः कालो यस्य सोऽभावः प्रध्वंसः । अत्यन्ताभावेऽतिव्याप्तितिरस्कृत्या अवधिमानिति । प्रागभावेऽतिव्यापनापनुत्यै पूर्वपदम् । घटे च तां विघटयितुमभावपदम् । पूर्ववत्पूर्वैकावधिरित्युक्ते ध्वंसगतप्रमेयत्वादौ सत्वाल्लक्षणस्यातिव्याप्तिरिति तद्व्युदासायाभावपदम् । न च विशिष्टस्य ध्वंसगतान्योन्याभावेऽतिव्याप्तिरितिवाच्यम् । अभावस्य धर्म्यतिरिक्तस्यैव पूर्ववद्विवक्षणादनतिव्याप्तेः । एकपदमेकं पूर्ववदेव स्वरूपोपष्टंभकं ज्ञेयम् । लक्ष्ये लक्षणमुपपादयति ॥ **प्रतियोगीति** ॥ प्रतियोगी घटः । तद्ध्वंसानन्तरं अत्र प्रतियोगी ध्वंस्यतेऽनेनेति व्युत्पत्त्या प्रध्वंसशब्दः प्रध्वंसजनकाव्यवहितपूर्ववृत्तिमुद्गरप्रहारादिरूपसामग्रीपरो बोध्यः । तेन प्रध्वंसस्योत्तरावधिशून्यत्वात्कथं प्रध्वंसानन्तरमित्युक्तिरिति परास्तम् । **प्राक्** प्रध्वंसात्पूर्वम् ।

**(पां.टि.)** ननु च अभावस्य त्रैविध्यं प्रतिज्ञाय विधात्रयमुद्दिष्टं भवति। एकविधामात्रप्रदर्शनं तु अनुचितमित्यतो द्वन्द्वान्ते श्रूयमाणस्य त्वप्रत्ययस्य प्रत्येकमभिधानान्न दोषः इत्याशयेनाह **प्राक्त्वेनेति** ॥ कर्तृत्वकारणत्वयोर-संभवात् कथं प्राक्प्रध्वंससदात्वेनेति तृतीया? इत्यतः इत्थंभूतलक्षणे तृतीया इत्याह **उपलक्षित इति** । प्राक्त्वादेः कालवृत्तित्वेन अभाववृत्तित्वाभावात् कथं तेन रूपेण अभावविभागः? इत्यतः सदात्वोपलक्षित इति इत्यप्याहुः । तेन रूपेण अप्रामाणिकाङ्गीकारस्य स्वोक्तविभागासमर्थकत्वादाह **प्रामाणिकैरिति शेष इति** । लक्षणावतीकारोक्तं प्रागभावलक्षणमनुवदति उत्तरेति। उत्तरः प्रतियोग्युत्पत्तेः इति शेषः । स एव, अवधिः अविद्यमान-समयः यस्येत्यर्थः । उत्पत्तिशब्दश्च सकलकारणसमवधानार्थ एव विवक्षितो न तु असतः सत्तासम्बन्धार्थः अतो न सत्तासम्बन्धदशायां प्रागभावा-सम्भवादसम्भवः ॥ ततश्च प्रतियोग्युत्पादकसकलकारणसमवधाना-नन्तरमेव असन् अभावः प्रागभावः इति फलितोऽर्थः ॥ अत्र घटसामग्र्या-मतिव्याप्तिपरिहारार्थमभावपदम् । अत्यन्ताभावनिवृत्त्यै असदिति । तस्य च सदातनत्वेन असत्त्वाभावान्न तत्रातिव्याप्तिः ॥ असन् अभावो ध्वंसोऽपि इति तत्रातिव्याप्तिनिवृत्त्यै प्रतियोग्युत्पादकसकलकारणसमवधानानन्तर-मित्युक्तम् । तावत्युक्ते ध्वंसेऽतिप्रसङ्ग एव । घटलक्षणप्रतियोग्युत्पादक-सकलकारणसमवधानानन्तरं घटध्वंसस्यासत्त्वात् । अत एवपदम् । ततश्च घटध्वंसस्य प्रतियोगिसत्तादशायामविद्यमानत्ववत्, तत्प्रागभावदशायामप्य-विद्यमानत्वेन, प्रतियोग्युत्पादकसकलकारणसमवधानानन्तरमेव विद्य-मानत्वाभावात् न तत्रातिप्रसङ्गः । प्रतियोगिवत्तत्प्रागभावस्यापि ध्वंस-विरोधित्वात् । मृदाद्युत्पादकसकलकारणसमवधानान्तरमपि वर्तमानत्वात् घटप्रागभावस्य, असम्भवो मा भूदिति प्रतियोगिपदम् । उत्पत्तिपदं तु प्रागभावस्योत्पत्तिपर्यन्तमनुवृत्तिः, न तु ततः प्राक्निवृत्तिः इति दर्शयितुं, न तु लक्षणान्तर्गतम् । न हि घटात्पूर्वभावी घटोत्पत्त्यनन्तरमभावी घटप्राग-

भावादन्यः कश्चिदभावोऽस्ति । यद्व्यावृत्तये उत्पत्तिपदमावश्यकं स्यात् । अनन्तरपदाभावे तु प्रतियोग्युत्पादकसकलकारण-समवधानात्पूर्वमित्यप्यापद्येत । ततश्च ध्वंसेऽतिव्याप्तिः । तन्निवृत्यर्थमनन्तरमित्युक्तमिति सर्वं सार्थकम् ॥

मूले लक्षणानुक्त्या न्यूनत्वं परिहर्तुमुद्देशेनैव सूचितं तल्लक्षणमाह **प्रतियोग्युत्पत्तेरिति ।** अनेन योऽभावो वस्तूत्पत्तेः प्रागेवास्ति स प्रागभावः इति लक्षणं सूचितं भवति । अत्रापि घटसामग्र्यादावतिव्याप्तिवारणाय अभावपदम् । घटप्रागभावस्य मृदाद्युत्पत्त्यनन्तरमपि सत्त्वेन असम्भवो मा भूदिति प्रतियोगिपरं वस्तुपदम् । उत्पत्तिपदं तु प्राग्वन्न लक्षणान्तर्गतम् ।

प्राक्पदाभावे उत्पत्तेः इति पञ्चमीबलात् परतः इत्यप्यापद्येत । ततश्च ध्वंसेऽतिव्याप्तिस्तन्निवृत्यर्थं प्रागितिपदम् । घटप्रतियोगिकान्योन्याभावरूपे घटध्वंसे घटोत्पत्तेः पूर्वमपि विद्यमाने अतिव्याप्तिपरिहारार्थमेवेत्युक्तम् ॥ इति सकलमनवद्यम् ॥

तदुक्तमेव ध्वंसलक्षणमनुवदति **पूर्वेति ।**

पूर्वः प्रध्वंससामग्रीकालः, एव एकः, अवधिः अविद्यमानत्व- समयः यस्य सः अभाव प्रध्वंसाभावः इत्यर्थः । अत्र एकपदानुक्तौ घटप्रागभावे अतिप्रसङ्गः । घटप्रागभावस्य प्रध्वंससामग्रीकाले अविद्यमानत्वात् । तत्परिहारार्थमेक इति । ततश्च घटप्रागभावस्य प्रतियोगिध्वंससामग्रीकाले इव प्रतियोगिध्वंसकालेऽपि अविद्यमानत्वेन, प्रतियोगिध्वंससामग्रीसमये एव विद्यमानत्वाभावात् न अतिप्रसङ्गः । अन्यत् समानम् । **प्रतियोगिप्रध्वंसानन्तरमेवेति ।** एतदपि पूर्ववत् लक्षणान्तरमेव ।

तत्र प्रागभावे अतिव्याप्तिपरिहारार्थं परतः इति पदम् । विनाशसामग्र्युत्तर कालादौ तत्परिहाराय अभावपदम् । पूर्ववत् असम्भवपरिहाराय वस्तुपदम् । प्रध्वंसे 'सादिः' इत्यनेन च विनाशसामग्री लभ्यते । तच्च विनाशकाल-

सामग्रीसमवधानानन्तरमेव प्रध्वंसः' इति दर्शयितुमेव लक्षणान्तर्गतमिति ध्येयम् ॥

प्राञ्चस्तु ननु उत्तरावधित्वेनैव प्रध्वंससदाभावयोः अतिव्याप्तिवारणात् एकपदवैयर्थ्यम् । न च घटादिरूपे प्रागभावप्रध्वंसे अतिव्याप्तिवारणात् एकपदमिति वाच्यम् । तथा सति घटादिरूपे प्रध्वंसप्रागभावे अव्याप्त्या पातात् । न च प्रमेयान्तरस्यैव प्रागभावस्य लक्ष्यत्वेन, घटादिरूपस्य तस्य अलक्ष्यत्वात् न अव्याप्तिः इति वाच्यम् तथा सति प्रध्वंसप्रागभावे अविद्यादौ अतिव्याप्तेः । अभावपदेन तन्निरासाय अभावपदस्य प्रमेयान्तरभूत अभावपरत्वस्य आवश्यकत्वे, घटादिरूपे प्रागभावप्रध्वंसे अतिव्याप्तिशङ्काऽनवकाशात् इत्याशङ्क्य; 'उत्तरैकावधिः' इत्यस्य पूर्वावधिरहितत्वे सति अवधिमत्त्वमर्थः । उत्तरपदस्य केवलार्थक एकपदसमभिव्याहृतस्य पूर्वावधि निषेधमात्रपरत्वात् । पूर्वैकावधिः इत्यस्य च उत्तरावधिरहितत्वे सति अवधि मत्त्वमर्थः ॥ ततश्च पूर्वावधिरहितत्वे सति अवधिमदभावत्वं प्रागभावत्वम् । उत्तरावधिरहितत्वे सति अवधिमदभावत्वं प्रध्वंसाभावत्वम्' इति लक्षणं इह विवक्षितम् । तत्र आद्ये लक्षणे पूर्वावधिरहितत्वेन ध्वंसाभावस्य, अवधि-मत्त्वेन सदाभावस्य, अभावपदेन च अविद्याया निरासः । द्वितीय-लक्षणेऽपि, सत्यन्तेन प्रागभावस्य, अवधिमत्त्वेन सदाभावस्य, अभावपदेन च पुराणादेः व्यावृत्तिः इति न कस्यापि वैयर्थ्यम् ॥ इत्याहुः । उत्तरैकावधिः इत्यस्य 'यः अभावः प्रतियोगिकालापेक्षया प्राक् एव अस्ति सः प्रागभावः' इति फलितं लक्षणवाक्यार्थमभिप्रेत्य, लक्ष्ये उपपादयति **प्रतियोग्युत्पत्ते-रिति** । पूर्वैकावधिः इत्यस्य 'यः अभावः प्रतियोगिकालापेक्षया उत्तरकाले एव अस्ति सः प्रध्वंसाभावः' इति फलितं लक्षणवाक्यार्थमभिप्रेत्य लक्ष्ये उपपादयति **प्रतियोगीति** । फलितोपपादकवाक्यमेव एतद्द्वयमित्यप्याहुः ।

पूर्वस्य विनाश्यभावत्वम् अर्थः, उत्तरस्य प्रागभावप्रतियोग्यभावत्वम् अर्थः इत्यपि केचित् ॥

(**का. टि.**) उत्तरमूलमवतारयति ॥ **द्विधेति** ॥ अन्यथा द्वावित्यवक्ष्यदिति भावः । सूचितमित्यनन्तरमतो भावाभावविभागो वक्तव्य इति पूरणीयम् । तथापि क्रमोल्लङ्घनं कुत इत्यत आह ॥ **तत्रेति** ॥ भावाभावनिरूपणयोर्मध्य इत्यर्थः । यद्वा भावाभावयोर्मध्य इत्यर्थः । अभावमित्यनेन सम्बन्धः । अल्पस्य प्राथम्यनियामकत्वे युक्तिः ॥ **सूचीति** ॥ द्वन्द्वात्परत्वप्रत्ययस्य प्रत्येकमभिसम्बन्ध इति भावेनाह ॥ **प्राक्त्वेनेति** ॥ अत्र प्राक्त्वादेरभेदेन विधान्वयसम्भवेऽपि प्राक्त्वादिविशिष्टाभावत्वस्य प्रागभावादिलक्षणत्वलाभायोपलक्षित इत्यनेनाभावेऽन्वय उक्तः । न च प्राक् सदात्वयोः कालधर्मत्वात्कथमभावविशेषणत्वमिति वाच्यम् । प्रागित्यादेः प्राक्तनादिपरत्वात् । नन्वेवं किञ्चिदपेक्षया प्राक्तनत्वस्य प्रध्वंसादिसाधारणत्वादतिव्याप्तिः । स्वप्रतियोगिप्राक्कालवृत्तित्वविवक्षायामपि प्रध्वंसादेः स्वात्मकस्वनिष्ठभेदप्रतियोगिभाविवस्तुप्राक्कालवृत्तित्वेनातिव्याप्तेः । स्वप्रतियोगिप्राक्कालवृत्तित्वविवक्षायामपि प्रध्वंसादेः स्वात्मकस्वनिष्ठभेदप्रतियोगिभाविवस्तुप्राक्कालवृत्तित्वेनातिव्याप्तेः । स्वप्रतियोगिप्राक्कालमात्रवृत्तित्वविवक्षणे च प्रागभावस्यापि स्वात्मकस्वनिष्ठभेदप्रतियोगिभूतातीतवस्तूत्तरवृत्तित्वेनासम्भवात् । यत्किञ्चित्प्रतियोगिप्राक्कालमात्रवृत्तित्वविवक्षणे च गौरवमित्यतो निष्कृष्टलक्षणमाह ॥ **उत्तरैकावधिरिति** ॥ उत्तरः काल एव अवधिर्यस्यासौ तथा । अवधित्वं च स्वाव्यवहितपूर्वोत्तरकालसाधारणः स्वनिरूपको धर्मविशेषः । न चैकपदावधिपदयोर्वैयर्थ्यं सोत्तरत्वे सति अभावत्वस्यैव सम्यक्त्वादिति वाच्यम् । पूर्वावधिशून्यत्वे सति सावधिकाभावत्वरूपलक्षणन्तरलाभाय तदुपादानात् । प्रध्वंसवारणाय सत्यन्तनिवेशः । अत्यन्ताभाववारणाय सावधित्वम् । तावन्मात्रस्य घटादावतिव्याप्त्यभावेऽपि भावरूपाज्ञानादिवारणायाभावत्वमुपात्तम् । न च पूर्वत्वस्य प्रागभावाधिकरणकालत्वरूपत्वादात्माश्रयः । एवमुत्तरत्वस्य ध्वंसाधिकरणकालत्वरूपत्वात् ध्वंसत्वस्य च पूर्वत्व-

घटितत्वात् अन्योन्याश्रय इति वाच्यम् । पूर्वत्वोत्तरत्वयोः कालगताखण्डोपाधिविशेषत्वात् । यथोक्तम**आचार्यैः, स्वत एव काले विशेषाङ्गीकृतेश्चे**ति ।

एवं चोत्तरत्वनिरूपकाभावत्वं पूर्वत्वानिरूपकत्वे सति अवधित्वनिरूपकाभावत्वं वा प्रागभावत्वमिति निष्कर्षः । न च घटात्मके घटध्वंसप्रागभावे अव्याप्तिः । घटप्रागभावात्मके घटभेदेऽतिव्याप्तिश्चेति वाच्यम् । आद्यस्यालक्ष्यत्वात् द्वितीयस्य च लक्ष्यत्वात् । न चातीतकालविशिष्टात्यन्ताभावेऽतिव्याप्तिः । विशेष्यस्य निरवधिकत्वेऽपि विशिष्टस्योत्तरैकावधित्वादिति वाच्यम् । विशिष्टस्य पदार्थान्तरत्वेन भावत्वात् । अतीतकालविशिष्टात्यन्ताभावस्य वर्तमानकालविशिष्टात्यन्ताभावप्रागभावतया लक्ष्यत्वमेवेत्यप्याहुः । एतल्लक्षणस्य यथाश्रुतोद्देशलब्धलक्षणनिष्कृष्टार्थत्वं व्यञ्जयन् लक्ष्ये लक्षणसत्त्वमुपपादयति ॥ **प्रतियोगीति** ॥ पूर्वेणान्वयः । एतेन **योऽभावो वस्तूत्पत्तेः प्रागेवास्ति स प्रागभावः** इति **तत्वविवेकटीका**विसंवादोऽपि निरस्तः । तस्य यथाश्रुतलक्षणत्वात् । अस्य च निष्कृष्टलक्षणत्वात् । एवमग्रेऽपि ॥ **पूर्वैकावधिरिति** ॥ सपूर्वाभावत्वमुत्तरावधिशून्यत्वे सति सावधिकाभावत्वं वा प्रध्वंसत्वमित्यर्थः । व्यावृत्त्यादिकमुक्तप्रायम् ॥ **प्रध्वंसानन्तरमिति** ॥ प्रध्वंससामग्र्युत्तरकालमित्यर्थः । प्रतियोग्युत्तरकालमिति यावत् ।

### प्रागभावप्रध्वंसपरम्परया अनवस्थाशङ्का तन्निरासश्च

**(टी.) नचैवं प्रागभावप्रध्वंसः प्रध्वंसप्रागभाव इति प्रवाहौ प्रसज्येते । प्रतियोगिन एव प्रागभावप्रध्वंसत्वेन प्रध्वंसप्रागभावत्वेन चाङ्गीकृतत्वात् । तर्हि घटप्रध्वंसो नाम प्रागभावनिवृत्तेर्निवृत्तिरिति प्रागभावोन्मज्जनप्रसङ्ग इति चेन्न । घटवत् घटप्रध्वंसस्यापि तद्विरोधित्वात् ।**

**निरवधिकोऽभावः सदाभावः । सदाऽभावोऽस्तीति कृत्वा । अथात्यन्ताभाव इति प्रसिद्धसंज्ञातिक्रमेण सदाभाव इति संज्ञान्तरकरणं**

**किमर्थम् । लक्षणस्याप्युद्देशेनैव सूचनार्थम् । यच्चान्यैरत्यन्ताभावस्वरूपमुक्तं संसर्गप्रतियोगिकाभावोऽत्यन्ताभाव इति यथैतद्धटैतद्भूतलसंसर्गाभाव इति तदपि निराकर्तुमेतत् । तस्य निरवधिकत्वाभावात् । तर्ह्युदाहृतश्चतुर्थः स्यादिति चेन्न । तस्यापि यथासम्भवं प्रागभावादिष्वन्तभार्वात् ।**

(रा.टि.) प्रागभावनाशः प्रतियोगिनोन्यः प्रध्वंसप्रागभावोपि तथेत्युपेत्य शङ्कते ।। **न चैवमिति ।।** प्रागभावप्रध्वंसयोर्नाशप्रागभावाङ्गीकार इत्यर्थः । कुत एतदित्यतस्तृतीयार्थमाह ।। **सदाभावोस्तीति कृत्वेति ।। यथा सम्भवमिति ।।** यदि घटसंसर्गो भावी तदा प्रागभावः । यदि भूतः तदा ध्वंसः । न कदापि चेत्तदात्यन्ताभाव इत्येवं यथासम्भवमित्यर्थः ।

(श्री. टि.) तत्र प्रागभावप्रतियोगिकध्वंसो ध्वंसप्रतियोगिकप्रागभावश्च प्रतियोग्यतिरिक्त एवेति मत्वाशङ्कते ।। **न चैवमिति ।** तथा च घटप्रागभावस्य विनाश्यभावत्वात्तस्य परः प्रागभावः । तस्यापि विनाश्यभावत्वेन परःप्रध्वंसः । तस्यापि पुनः सादित्वेन परः प्रागभाव इत्येकः प्रवाहः । तथा घटप्रध्वंसस्यापि प्रागभावप्रतियोग्यभावत्वेन परस्तत्प्रागभावः तस्यापि विनाश्यभावत्वेन परः प्रध्वंसः तस्य च प्रागभावप्रतियोगित्वेनापरः प्रागभाव इत्यपरप्रवाह इति द्वौ प्रवाहौ द्वेपरंपरे प्रसज्येते इत्यर्थः । तथा च प्रवाहद्वयेप्यनवस्था स्यादिति भावः । कुतो न प्रसज्येते इत्यत आह ।। **प्रतियोगिन एवेति ।** स्यादेवं घटप्रागभावध्वंसो घटातिरिक्तस्स्यात् । न चैवम् । प्रतियोगिनो घटस्यैव प्रागभावध्वंसरूपत्वात् । यथाहुराचार्याः । प्रतियोग्यापत्तेरेवाभावप्रतिपत्तित्वस्य प्रागभावे दृष्टत्वादिति । तथा च घटप्रवाहप्रयुक्ता नानवस्था । तथा घटप्रध्वंसप्रागभावोऽपि न घटातिरिक्तः प्रतियोगिनो घटस्यैव प्रध्वंसप्रागभावत्वेन द्वितीयप्रवाहप्रयुक्तानवस्थापि नास्तीत्यर्थः ।।

**प्रागभावनिवृत्तेर्निवृत्तिरिति** । घटप्रागभावनिवृत्तिरूपो घटस्तन्निवृत्तिरूपो घटध्वंस इत्यर्थः ।। **उन्मज्जनमिति** । नष्टस्य पुनरापत्तिरित्यर्थः । अभावाभावे भाववत् घटप्रागभावध्वंसनिवृत्तौ च घटप्रागभावस्यैवापत्तिस्स्यादिति भावः ।। **घटवदिति** । यथा घटसत्तादशायां घटप्रागभावो नास्ति । घटस्य प्रागभावविरोधित्वात् । एवं घटप्रागभावनिवृत्तेर्निवृत्तिर्नाम घटध्वंस एव तत्सत्तादशायां न प्रागभावापत्तिः । घटध्वंसस्यापि प्रागभावविरोधित्वादित्यर्थः ।। **निरवधिक इति** । प्रतियोगिकालावधिकपूर्वत्वापरत्वरहिताभावः । तथाच योऽभावः कालत्रयेऽस्ति सोऽत्यन्ताभाव इति निर्गलितोऽर्थः । इममेवार्थमभिप्रेत्य लक्ष्ये उपपादयति ।। **सदेति** । नित्ये गगनादावतिव्याप्तिपरिहारायाभावपदम् । प्रागभावध्वंसयोरतिव्याप्तिपरिहाराय कालत्रयेऽस्तीत्युक्तमित्यवगन्तव्यम् । शङ्कते ।। **अथेति** । उत्तरमाह ।। **लक्षणस्यापीति** । यद्यपि अत्यन्ताभाव इत्युद्देशेऽपि अत्यन्तपदार्थविचारे सत्ययमेवार्थो लभ्यते । कालत्रयार्थकसदाशब्दार्थतात्पर्यकत्वात्तस्यापीत्यविशेष एव । तथापि अविलम्बेन लक्षणोपस्थित्यर्थं तथोक्तमिति ध्येयम् । प्रसिद्धसंज्ञातिक्रमे निमित्तान्तरं वक्तुमाह ।। **यचान्यैरित्यादिना** ।। **संसर्गप्रतियोगिकेति** । अन्योन्याभावस्य तादात्म्यप्रतियोगिकत्वेन संसर्गप्रतियोगिकत्वाभावात् । प्रागभावप्रध्वंसयोश्चैतन्मते संसर्गाभावत्वाभावेन न कुत्राप्यतिव्याप्तिरिति भावः । तदुदाहरति ।। **यथैतद्धटेति** । इह भूतले घटो नास्तीत्येवंरूप इत्यर्थः ।। **एतदिति** । सदाभावपदमित्यर्थः । अत्रापि यद्यप्यत्यन्ताभाव इत्युद्देशेपि परमतनिराकरणं लभ्यत एव । अत्यन्तसदाशब्दयोर्विचार्यमाणे एकार्थत्वात् । तथापि स्फुटतया तल्लाभार्थमेतदुक्तमित्यवगन्तव्यम् । कथमनेन तन्निराकरणमित्यत आह ।। **तस्येति** । सदाभावशब्दस्य निरवधिकाभावार्थकत्वेनैतद्धटैतद्भूतलसंसर्गप्रतियोगिकाभावस्योत्पत्ति विनाशप्रतीतिबलेन प्रतियोगिकालावधिकपूर्वत्वापरत्वराहित्यरूपनिरवधिकत्वाभावेन त्रैकालिकनिषेधरूपसदाभावत्वाभावादित्यर्थः ।।

**तर्हीति** । इह भूतले घटो नास्तीति प्रतीतिसिद्धस्यैतद्धटैतद्भूतलसंसर्गाभावस्योत्पत्तिविनाशशीलत्वेन प्रागभावादित्रितयभिन्नतया तुरीयाभावो भवद्भिरङ्गीकार्यः स्यादित्यर्थः ॥ **तस्यापीति** । एतद्धटैतद्भूतलसंसर्गाभावस्यापीत्यर्थः ॥ **यथासम्भवमिति** । एतद्धटैतद्भूतलसंसर्गस्य भावित्वे प्राक् तदभावः । प्रागभावे तस्यातीतत्वे पश्चात्तदभावो ध्वंसे कदाप्यसत्त्वनिश्चये तदभावोत्यन्ताभावेऽन्तर्भवतीत्यर्थः ।

ननु घटप्रतियोगिक एवायमभावो न संसर्गप्रतियोगिकः । घटस्यैव प्रतियोगित्वेन व्यवहारादिति चेन्न । संसर्गवत् घटस्यापि संसर्गाभावविरोधितया भूतले घटाभाव इति व्यवहारे घटपदे उपचारेण संसर्गस्यैव विवक्षितत्वादिति । न हि घटस्य प्रतिषेध्यस्वरूपत्वरूपं प्रतियोगित्वं सम्भवति । तथाहि । भूतले घटो(ना)स्तीति प्रतीतौ घट सम्बन्धवद्भूतले घटो नास्तीत्यत्रापि घटसम्बन्धाभावस्य प्रतीतेः । किञ्चेह भूतले घटो नास्तीति बुद्धेर्घटाभावविषयकत्वे न तावदयं घटप्रागभावो ध्वंसो वा प्रतियोगिसमानकालीनत्वादेतस्य । नाप्यत्यन्ताभावः । कदाचित्तत्र घटस्य सत्वात् । संसर्गस्य भूतत्वे ध्वंसः भावित्वे प्रागभावः कदाप्यभावे अत्यन्ता भाव इति न काप्यनुपपत्तिरित्युक्तम् । अत्र कश्चित् घटात्यन्ताभाव एवायं घटकाले त्वसम्बन्धान्न भाति । घटात्यन्ताभावस्य भूतलेन सह सम्बन्धश्च तत्संयोगध्वंस एवेत्याह । तत्तुच्छम् । सम्बन्धान्तरमन्तरेण तदुपाश्लिष्टभावत्वरूपक्लृप्तसम्बन्धत्यागेन संयोगध्वंसस्य सम्बन्धत्वकल्पने आवश्यकसंयोगध्वंसादेरेवैतद्धीविषयत्वोपपत्तेः । अन्यथा घटस्य कपाले अत्यन्ताभाव एव । घटकाले त्वाश्रयाश्रयिभावध्वंसरूप सम्बन्धस्य वा घट सम्बन्धप्रागभावरूपध्वंसस्य वाऽभावान्न प्रतीतिरिति घटात्यन्ताभावः केवलान्वयी स्यादिति । अपरस्तु उत्पत्तिविनाशशीलोऽयमपर एव तुरीयो घटाभावः प्रतीयत इत्याह ।

तदपि मन्दम् । घटाभावनांशस्य घटस्वरूपतायाः प्रागुक्तत्वेन घटाभावस्य घटसमानकालीनत्वानुपपत्तिः । नाशस्य स्वप्रतियोगिभिन्नकालीनता नियमात् । तदेवं भूतले घटो नास्तीत्यत्र घटतत्सम्बन्धभानेऽपि नास्तीत्यत्र संसर्ग एव निषिध्यते । घटस्य तु तत्काले सत्वेन प्रतियोगित्वासम्भवेऽपि विरोधितासाधर्म्येण मुख्यत एव प्रतियोगिताव्यवहार इत्युक्तमेव युक्तम् । उक्तं चोदयनेनापि । इह भूतले घटो नास्तीत्यत्र संयोग एव निषिध्यते इति । न च वाच्यं घटवत्तत्संयोगस्याप्यन्यत्र सत्त्वेनाप्रतियोगित्वमिति । एतद्भूतलैतद्घटसंसर्गस्य निषेधकाले कुत्राप्यभावादिति संक्षेपः ॥

**(स.टि.)** घटध्वंसघटप्रागभावयोः पूर्वैकावधिरुत्तरैकावधिरिति लक्षणे प्रागभावप्रतियोगिकध्वंसध्वंस प्रतियोगिकप्रागभावयोरपि प्रसक्तौ तत्प्रवाहौ स्यातामित्याशङ्क्य परिहरति ॥ **न चैवमिति** ॥ प्रतियोगिनो घटादेः प्रागभावप्रध्वंसरूपत्वेन स्वध्वंसप्रागभावत्वेन चाङ्गीकृतत्वेन प्रावाहिक्याः परंपराया अप्रसक्तेः ॥ **तर्हीति** ॥ यदि प्रतियोगिनः प्रागभावनिवृत्तिरूपत्वं तर्हीत्यर्थः ॥ **प्रागभावेति** ॥ घटप्रागभावेत्यर्थः । निवृत्तेः तद्ध्वंसस्य । तस्यैव प्रागभावसामग्रीत्वेन प्रागभावस्य पुनरुन्मज्जनं प्रत्यावृत्तिः स्यादित्यर्थः । कारणसामग्र्यां सत्यां कार्यावश्यंभावनैयत्यादित्यनिष्ठापादनमित्यत्र तात्पर्यं ज्ञेयम् । यथा घटस्य प्रागभावकालान्यकालिकत्वेन स्वप्रागभाव विरोधित्वं तथा घटप्रध्वंसस्यापि स्वप्रागभावकालान्यकालिकत्वेन तद्वत्प्राग भावविरोधिनि तदुन्मज्जनानापत्तेरित्युत्तरयति ॥ **घटवदिति** ॥ यथा घटसत्तादशायां घटप्रागभावोनास्ति । घटस्य प्रागभावविरोधित्वात् । एवं घटप्रागभावनिवृत्तिर्नाम घटप्रागभावध्वंसः । स घट एव । तन्निवृत्तिर्नाम घटध्वंस एव । तत्सत्तादशायां न प्रागभावापत्तिः । घटध्वंसस्यापि प्रागभाव विरोधित्वादित्यर्थ इत्याहुः । अवशिष्टमभावं लक्षयति ॥ **निरवधिक इति** ॥ उत्तरैकावधिक प्रागभाव पूर्वैकावधिकप्रध्वंसाभावयोरनतिव्याप्त्यै निरवधिक इति ।

निष्क्रान्तोऽवधेरिति निरवधिक इति । अव्याकृताकाशेश्वरादिव्युदासाया भाव इति । न चाकाशादिनिष्ठान्योन्याभावेऽतिव्याप्तिरिति वाच्यम् । धर्मिभिन्नाभावेति विवक्षणात् । तन्निमित्तमुत्तंभयति ।। **सदाभावोऽस्तीति कृत्वेति** ।। अत्यन्ताभावो निरवधिक इति सम्बन्धः । किं लोकप्रसिद्धा-त्यन्ताभावसंज्ञां विहाय, विधाय च नामपूर्वं निर्दिदेश देशिकवर इति शङ्कते ।। **अत्यन्ताभाव इतीति** ।। उत्तरमीरयति ।। **लक्षणस्येति** ।। लक्षणस्य अत्यन्ताभावलक्षणस्य निरवधिकाभाववत्वस्य । ज्ञापनार्थमित्यर्थः । मतान्तर निराकरणमपि विलक्षणलक्षणकरणफलमिति परपराकरणप्रकारव्युत्पादनं विनाऽनुवादेन न शक्यज्ञानमिति तदनुवदति ।। **यच्चेति** ।। **उक्तं** स्वग्रन्थे प्रतिपादितम् । तदेव प्रतिपादयति ।। **संसर्गप्रतियोगिकाभाव इतीति** ।। निदर्शयति ।। **यथेति** ।। एतद्घटस्यैतद्भूतलस्य च यः संसर्गस्तदभावो त्यन्ताभाव इति । अतिप्रसङ्गवारणायोभयत्रैतत्पदम् । **तदपि** तल्लक्षणमपि । एतत् विलक्षणलक्षणकरणम् । निराकरणप्रकारं दर्शयति ।। **तस्येति** ।। संसर्गप्रतियोगिकाभावस्य । घटोऽत्र नास्तीति प्रतीतिविषयस्य घटैतद्भूतल-संसर्गाभावस्य घटानयनापनयनयोर्नाशजन्मनोः सम्भवेन निरवधिकाभावत्वं नोपपद्यत इत्याशयः । त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिकाभाव इति मतं यद्यपि पर्यवस्यति सदातनाभावत्व इति तथापि तत्र प्रामाणिकस्य घटस्य प्रतियोगित्वं प्रतियोग्यवरुद्धो विद्यमानोऽपि न स्फुरत्यभाव इति मन्वते । मन्मते त्वप्रामाणिकस्यैव प्रतियोगित्वं, प्रतियोगिना प्रामाणिकेन यथा भावस्य विरोधस्तथा तत्सदृशेनापि विरोध इति न घटवत्यपि घटो नास्तीत्यतिप्रसक्त्यापत्तिदोष इत्यावयोर्विशेषः । विशेषस्तु ''निर्दोषाशेष-सद्गुण''मिति तत्वनिर्णयटिप्पण्यादितो ज्ञेयः । **तर्हि** निरवधिकाभावत्वेना-त्यंताभावाङ्गीकारे । उदाहृतः प्रमेयविशेषः संसर्गप्रतियोगिकाभावः । **उत्तर-**माह ।। **तस्यापीति** ।। संसर्गप्रतियोगिकाभावस्यापि ।। **यथासम्भवमिति** ।। प्रागभावादिषु यथासम्भवमन्तर्भावो वाच्यः । यद्भूतलं घटेन न संयुज्यते तत्र

घटप्रागभाव इति तत्रान्तर्भावः । यदा वियुज्यते तदा प्रध्वंसे । यद्भूतलं कदापि घटेन न संयुज्यते तत्र संसर्गाभावस्यात्यन्ताभावेऽन्तर्भावो ज्ञेयः ।

**(पां.टि.)** प्रागभावप्रतियोगिकध्वंसप्रतियोगिकौ ध्वंसप्रागभावौ प्रतियोग्यतिरिक्तौ इति सम्भ्रान्तः चोदयति न चैवमिति । उत्पन्ने प्रतियोगिनि प्रागभावो नास्ति' इत्याद्युक्त्या, प्रतियोगिकाले प्रागभाव-निवृत्तिरूपः प्रागभावप्रध्वंसः अङ्गीकृतः । तथा घटप्रागभावप्रतियोगिक-प्रध्वंसस्यापि कार्यत्वेन, कार्ये प्रागभावप्रतियोगित्वस्य आवश्यकत्वात्, तत्प्रतियोगिकः प्रागभावः स्वीकृतः । पुनः उभयत्रापि एवमेव इति 'प्रागभावप्रध्वंसः, प्रध्वंसप्रागभावः' इति प्रवाहौ प्रसज्येते इति न च इत्यर्थः । कुतो न? इत्यत आह **प्रतियोगिन एवेति** । अयमाशयः भवेदेतदेवं यदि प्रागभावप्रध्वंसः घटातिरिक्तः घटसमानकालीनः अङ्गीकृतः, घटध्वंस प्रागभावः घटातिरिक्तः घटसमानकालीनः अङ्गीकृतः । न च एतत् अस्ति । गौरवेण अभावप्रतियोगिक–अभावान्तरानभ्युपगमात् । तथा च नोक्तदोषः इति । **तर्हीति** । यदि प्रतियोगिनः प्रागभावनिवृत्तिरूपत्वं, तर्हि; इत्यर्थः ।। **प्रागभावेति** । घटप्रागभाव इत्यर्थः ।। न च इष्टापत्तिः । उत्पन्नस्यापि यथा-पूर्वम् सामग्रीसत्त्वेन पुनः उत्पादप्रसक्तिः इत्यत्र तात्पर्यात् । न प्रागभावस्य उन्मज्जनापत्तिः । यथा हि घटस्य घटाभावान्यकालीनत्वे प्रागभाव-विरोधित्वम्, तथा घटध्वंसस्यापि घटप्रागभावान्यकालत्वात् घटप्रागभाव-विरोधित्वेन सति विरोधिनि तदुन्मज्जनानुपपत्तेः इति भावेन परिहरति **घटवदिति** । यथा घटस्य स्वप्रागभावेन घटसमवायिदेशवर्तिना दैशिक-विरोधाभावेऽपि प्रागभावान्यकालरूपः कालिकविरोधः, तथा घटध्वंस-स्यापि घटप्रागभावेन घटसमवायिदेशवर्तिना सह दैशिकविरोधाभावेऽपि घटप्रागभावान्यकालत्वरूपकालिकविरोधात्, तस्य स्वसमानकालीन-प्रागभावासहत्वमित्याशयः ।

सदाभावं लक्षयति **निरवधिक इति** । प्रतियोगिकालावधिकपूर्वत्वापरत्वरहितः अभावः इत्यर्थः । प्रागभावस्य सेत्स्यमानप्रतियोग्यवधित्वात् । प्रध्वंसस्य उत्पन्नप्रतियोग्यवधित्वात्, युक्तं सावधित्वम् । अत्यन्ताभावस्य तु अवधिभूतप्रतियोगिन एव असत्त्वात् निरवधिकत्वमित्याशयः । प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्ववानित्यर्थः । इत्यपि आहुः ।। तदुपपादयति **सदेति** । ननु प्राक्, प्रध्वंसः इति प्रसिध्द्यनुसारेण यथा संज्ञा कृता तथा तदनुसारेण अत्यन्ताभावः इत्येव संज्ञा कार्या । न च तत्त्वविवेकानुसारेण इयं संज्ञा इति वाच्यम् । तथा सति तदनुसारेण 'पूर्व-अपर' इति प्रागभावादौ अपि तदापातात्, अविशेषात् । क्वचित् तत्त्वविवेकानुसरणस्य क्वचित् प्रसिध्द्यनुसरणस्य च अयुक्तत्वात् इत्याशङ्कते **अथेति** ।।

उत्तरमाह **लक्षणस्यापीति** ।। **लक्षणस्यापि** निरवधिकसदाभावत्वापरपर्यायस्य अप्रामाणिकप्रतियोगिक अभावत्वरूपलक्षणस्य इत्यर्थः ।। यद्यपि 'अत्यन्ताभावः' इति उद्देशेऽपि अत्यन्तपदार्थविवेकतात्पर्यतः सः अर्थः लभ्यते एव इति अविशेषः तथापि अविलम्बेन लक्षणोपस्थित्यर्थं तथा उक्तमिति ध्येयम् । यद्वा एतदस्वरसादेव संज्ञान्तरकरणस्य प्रयोजनान्तरमाह **यच्चेति** । यद्यपि अत्र परमतनिराकरणं तथा उद्देशे लभ्यते एव, तथापि स्फुटतया न लभ्यते इत्याशयः ।। **यथेति** । घटवति भूतले घटापसरणानन्तरम् 'इह-भूतले अयं घटो नास्ति' इति प्रतीत्या 'एतद्भूतले एतद्घटसंसर्गस्य अभावः एव विषयीक्रियते इति वाच्यम् । अन्यथा 'इह भूतले' इति अधिकरणसप्तमी न स्यात् । किञ्च न तावदयम् तद्घटान्योन्याभावः । तादात्म्यानुल्लेखात् । न च तद्घटप्रागभावप्रध्वंसौ । प्रतियोगिसमानकालीनत्वात् । नापि सदातनस्थः तदत्यन्ताभावः । प्रतियोगिसमानदेशत्वात् । पुनस्तत्र घटाऽऽनयनेऽपि तस्य सत्वेन प्रतीतिप्रसङ्गाच्च । न हि तदा सः अन्यत्र गतः अमूर्तत्वात् । नापि नष्टः नित्यत्वात् । अथ सन्नपि प्रत्यासत्तिविरहात् न गृह्यते । एवं 'समयविशेषसंसर्गिणा घटस्य

संसर्गाभावेन उपपत्तौ न संसर्गप्रतियोगिकसदातनाभावकल्पनम्' इति चेत् न, तथा सति प्रागभावप्रध्वंसयोः उच्छेदप्रसङ्गात् । पूर्वोत्तरसमयसंसर्गिणा तदत्यन्ताभावेनैव 'भविष्यति, विनष्टः' इति प्रतीत्योः उपपत्तेः । न च 'उत्पादविनाशशीलः तुरीयः एव अयमभावः' इति वाच्यम् । तादृश-अभावकल्पने मानाभावात् । न च 'एवं घटात्यन्ताभावः क्वचिदपि न सिध्येत्, इति वाच्यम्, दृष्टत्वात् । अत एव 'संसर्गोऽत्र निषिध्यते' इति संसर्गनिषिद्धत्वप्रतिपादकउदयनवचनं च उपपन्नमित्याशयः ।

**एतदिति** । संज्ञान्तरकरणम् । सदाऽभावः' इति संज्ञान्तरकरणस्यैव तन्मतनिराकरणं प्रयोजनमित्यर्थः । तथा च 'ससंर्गप्रतियोगिकाभावोऽत्यन्ता भावः' इति अनुपपन्नमित्याशयः ।। तत् कथम्? इत्यत आह **तस्येति** । संसर्गाभावस्य निरवधिकत्वाभावात् । अत्यन्ताभावस्य तु उक्तरीत्या निरवधिकत्वसिद्धेः न संसर्गाभावः अत्यन्ताभावः इत्यर्थः ।

तर्हि संसर्गाभावविशेषात्यन्ताभावस्य भवदभ्युपेत-अभावत्रिकान्तर्भावासम्भवात्, तम् आदाय चातुर्विध्ये प्रसङ्गः इत्याशङ्कते **तर्हीति** ।

कुतो न? इत्यत आह **तस्यापीति** । अत्यन्ताभावत्वेन अभिमतस्य संसर्गाभावस्य इत्यर्थः । **यथासम्भवमिति** । यदि एतद्भूतले एतद्घटसंसर्गः उत्तरत्र भावी, तत्र 'नास्ति' इति प्रतीतेः संयोगप्रागभावो विषयः यदि पूर्वं जातः । तदा तद्ध्वंसः । यदि च कदाऽपि न तदा अत्यन्ताभावः । इति यथासम्भवमित्यर्थः ।

**(का.टि.)** प्रागभावप्रध्वंसयोरतिरिक्तत्वेऽनवस्थामाशङ्क्य निराचष्टे ।। **नचेति** ।। **एवं** ध्वंसप्रागभावयोः पूर्वोत्तरावधिसत्त्वे ।। **प्रवाहाविति** ।। घटादेर्यः प्रागभावस्तस्य प्रध्वंसस्तस्य प्रागभाव इत्येकः । घटादेर्यः प्रध्वंसस्तस्य प्रागभावस्तस्य प्रध्वंस इत्यपरश्च प्रवाहः प्रसज्यत इत्यर्थः ।। **प्रतियोगिन एवेति** ।। घटस्यैव घटप्रागभावध्वंसरूपत्वात् घटध्वंस-

प्रागभावरूपत्वाच्च नानवस्थेति भावः । शङ्कते ॥ **तर्हीति ॥** घटस्यैव घटप्रागभावध्वंसरूपत्व इत्यर्थः ॥ **प्रागभावोन्मज्जनप्रसङ्ग इति ॥** नष्टस्य पुनरुत्थानं स्यादित्यर्थः । तद्विरोध्यनधिकरणकालस्य तदधिकरणत्वनियमात् । घटध्वंसकालस्य घटप्रागभावविरोधिघटात्मकध्वंसानधिकरणत्वादिति भावः । इदमुपलक्षणम् । घटध्वंसविरोधिघटात्मकप्रागभावानधिकरणे घटप्रागभावकाले घटध्वंससत्त्वप्रसङ्ग इत्यपि बोध्यम् ॥ **प्रध्वंसस्यापि तद्विरोधित्वादिति ॥** घटध्वंसस्यापि घटप्रागभावविरोधि- त्वादित्यर्थः । एवं च घटप्रागभावस्य घटध्वंसविरोधित्वमपि सिद्धमेवेति नोक्तदोष इति भावः । न चैवमपि घटध्वंसकाले घटप्रागभावो नास्तीति प्रतीतिर्न स्यात् । घटप्रागभावध्वंसरूपविषयाभावादिति वाच्यम् । घटध्वंसस्यैव तदभावत्वेन तद्विषयत्वात् । न चैवं घटध्वंससमये घटप्रागभावो ध्वस्त इति प्रतीत्यापत्तिरिति वाच्यम् । प्रतियोगिन एव ध्वंसत्वेन प्रागभावप्रतियोगिकत्वाभ्युपगमात् ॥ **निरवधिकोऽभाव इति ॥** अवधित्वानिरूपकत्वे सत्यभावत्वमत्यन्ताभावत्वमित्यर्थः । ध्वंसादेर्गगनादेश्च वारणाय सत्यन्तविशेष्ययोर्निवेशः । अथवोक्तरैकावधिरित्यादेः ध्वंसप्रतियोग्यभावत्वं प्रागभावाप्रतियोगित्वे सति अभावप्रतियोग्यभावत्वं वा प्रागभावत्वम् । प्रागभावप्रतियोग्यभावत्वं ध्वंसाप्रतियोगित्वे सति अभावप्रतियोग्यभावत्वं वा ध्वंसत्वमभावाप्रतियोग्यभावत्वमत्यन्ताभावत्वमित्यर्थः । नन्वाद्ययोः प्रागभावध्वंसलक्षणयोः प्रध्वंसत्वप्रागभावत्वप्रवेशादन्योन्याश्रयः । द्वितीययोश्चात्माश्रयः । एवमत्यन्ताभावत्वे अप्रतियोगित्वं प्रतियोगित्वात्यन्ताभाव इत्यात्माश्रय इति चेदुच्यते । ध्वस्त इत्याद्यनुगतप्रतीतिनियामकं हि ध्वंसत्वादिकमखण्डोपाधिः । अन्यथा घटादेर्भावस्य ध्वंसत्वद्यानुपपत्त्या घटप्रागभावो ध्वस्त इत्यादिप्रतीत्यनुपपत्तेः । उक्तं च विजयीन्द्रतीर्थैः प्रागभावत्वादिकमखण्डोपाधिरिति ॥ एवं च तादृशध्वंसत्वादेरेव निरुक्तप्रागभावादिलक्षणघटकत्वान्नोक्तदोषः । एवं नास्तीत्यनुगतप्रतीतिनियामकं

यत्प्रागभावादित्रयसाधारणमभावत्वं तदेवात्यन्ताभावत्वघटकमिति न कश्चिद्दोषः । अधिकमन्यत्रानुसन्धेयम् ।

**केचित्तु** उत्तरैकावधिरित्यस्य प्रतियोग्युत्तरकालनिष्ठाभावप्रतियोगित्वे सति स्वप्रतियोगिप्राक्कालवृत्तित्वे च सत्यभावत्वमित्यर्थः । ध्वंसादिवारणाय सत्यन्तद्वयम् । तत्र प्रथमसत्यन्ताभावे घटादिध्वंसस्य स्वात्मकभेद-प्रतियोगिभविष्यद्वस्तुप्राक्कालवृत्तित्त्वादतिव्याप्तिः । द्वितीयसत्यन्ताभावेऽपि स्वात्मकभेदप्रतियोग्यतीतवस्तूत्तरकिञ्चित्कालनिष्ठाभावप्रतियोगित्वात्तत्रैवाति-व्याप्तिः । न चैवमुक्तरीत्या भूतभाविप्रतियोगिद्वयमादाय सत्यन्तद्वयस्य सत्वादुक्तातिव्याप्तिस्तदवस्थैवेति वाच्यम् । स्वस्य यत्प्रतियोग्युत्तरकाल-निष्ठाभावप्रतियोगित्वं तत्प्रतियोगिप्राक्कालवृत्तित्वस्य विवक्षितत्वात् । न च स्वस्य यत्कालनिष्ठाभावप्रतियेगित्वं तत्प्राक्कालवृत्तित्वस्यैव प्रागभावलक्षणत्वं सम्भवतीति वाच्यम् । यथासन्निवेशेनास्य लक्षणान्तरत्वात् । घटादि-प्राक्कालवारणायाभावत्वप्रवेशः । एवं पूर्वैकावधिरित्यस्य स्वप्रतियोगि-प्राक्कालनिष्ठाभावप्रतियोगित्वे सति स्वप्रतियोग्युत्तरकालवृत्तित्वे च सत्य-भावत्वमित्यर्थः । प्रागभाववारणाय सत्यन्तद्वयम् । तत्र प्रथमसत्यन्ताभावे घटप्रागभावस्य स्वात्मकभेदप्रतियोग्यतीतवस्तूत्तरकालवृत्तित्वादतिव्याप्तिः । द्वितीयसत्यन्ताभावेऽपि स्वात्मकभेदप्रतियोगिभविष्यद्वस्तुप्राक्कालनिष्ठा-भावप्रतियोगित्वात्तत्रैवातिव्याप्तिः । अत्रापि स्वस्य यत्प्रतियोगिप्राक्काल-निष्ठाभावप्रतियोगित्वं तत्प्रतियोग्युत्तरकालवृत्तित्वं विवक्षणीयम् । तेन न पूर्ववद्दोषः । घटाद्युत्तरकालवारणायाभावत्वप्रवेशः । एवं निरवधिक इत्यस्य प्रतियोग्यवधिकपूर्वत्वोत्तरत्वरहिताभावत्वमित्यर्थः । प्रागभावप्रध्वं-सयोर्वारिणाय रहितान्तम् । नित्यसादृश्यादिवारणायाभावत्वनिवेशः । अत्यन्ताभावस्य च प्रतियोग्यसत्त्वेन सदातनत्वाल्लक्षणसमन्वय इत्याहुः ।

स्वानधिकरणकालपूर्ववृत्त्यभावत्वं प्रागभावत्वम् । स्वानधिकरण-कालोत्तरवृत्त्यभावत्वं ध्वंसत्वम् । सर्वकालवृत्यभावत्वमत्यन्ताभावत्व-मित्यप्याहुः ।

सदाऽऽभाव इत्यपूर्वसंज्ञाकरणे कारणं पृच्छति ॥ **अथेति** ॥ यद्यपि सदाऽऽभाव इति मूले नास्ति तथापि प्राक्कालादिना विशेषितोऽभाव इत्यर्थानुवादात्प्रागभावादि **लक्षणस्येति** ॥ नन्वत्यान्ताभाव इत्युद्देशेऽप्यत्यन्तपदेन सदातनत्वविवक्षायामुक्तलक्षणं लभ्यत एवेत्याशङ्कानिरासार्थ **मुद्देशेनैवेत्युक्तम्** ॥ व्याख्यानादिनिरपेक्षोद्देशेनेत्यर्थः । अत्यन्तपदमनेकार्थत्वान्नोक्तोद्देशेनैव लक्षणप्रत्यायकमिति भावः ।

मतान्तरनिराकरणमप्युक्तसंज्ञाकरणप्रयोजनमिति वक्तुं मतान्तरमनुवदति ॥ **यच्चेति** ॥ **स्वरूपमिति** ॥ सर्वात्यन्ताभावसाधारणरूपमित्यर्थः । लक्षणं तु निरवधिकाभावत्वमेव । तेन संसर्गध्वंसप्रागावयोर्नातिव्याप्तिः ॥ **एतद्धटेति** ॥ यद्भूतले यद्धटस्य यदाकदाचित्संयोगोऽस्ति तत्रापि तद्धटो नास्तीतिप्रतीतिविषयस्तद्धटससर्गाभावोऽप्यत्यन्ताभाव एवेत्यर्थः । न च घट एवास्तु तत्प्रतियोगी । संयोगेन घटात्यन्ताभावस्य घटसंयोगप्रतियोगिकत्वावश्यम्भावात् । अभावप्रतियोगितायाः प्रतियोगितावच्छेदकान्तर्भावेन पर्याप्त्यङ्गीकारात् ॥ **तस्येति** ॥ उक्ताभावस्येत्यर्थः । निरवधिकत्वाभावाद्धेतोर्निराकर्तुमेतत्संज्ञाकरणमिति सम्बन्धः । उक्ताभावस्य घटभूतलसंसर्गकालावधिकत्वादिति भावः ।

ननु निरवधिक एवायमभावः । न चैवं भूतले घटसत्त्वेऽपि घटो नास्तीति प्रतीतिप्रसङ्ग इति वाच्य । तदानीमभावसत्त्वेऽपि तत्सम्बन्धाभावात् । तत्कालान्यकालविशिष्टविशेषणताया एतत्सम्बन्धत्वात् । अन्यथा तत्रोत्पादविनाशशाल्यभावान्तरकल्पनापत्त्या अभावत्रैविध्यभङ्गादित्याशयेन शङ्कते ॥ **तर्हीति** ॥ **उदाहृतः** भूतभाविघटसंसर्गवति भूतले घटो नास्तीतिप्रतीतिसिद्धाभावः ॥ **चतुर्थः स्यादिति** ॥ पूर्वोत्तरावधिमत्वेन प्रागभावादित्रयानन्तर्भावादिति भावः । **यथासम्भवमिति** ॥ अत्र घटो नास्तीति प्रतीतौ यदि भावी घटसंसर्गः प्रतियोगितया भासते तदा तत्प्रागभावो विषयः । यदि भूतस्तदा तद्ध्वंसः । यदि तु वर्तमानस्तदा तदत्यन्ताभाव एव भासते । तत्र

वर्तमानकाले घटसंसर्गासत्वादिति भावः । न च घटो नास्तीति साक्षाद्धटस्यैव प्रतियोगितया भानात्तस्य च देशान्तरे वर्तमानत्वान्न प्रागभावादेर्विषयत्वसम्भव इति वाच्यम् । घटसंसर्गप्रागभावादेरपि घटप्रतियोगिकत्वाभ्युपगमात् । न चैवमत्र घटप्रागभावोऽस्तीत्यादिप्रतीत्यापत्तिः । प्रागभावत्वादिना घटप्रतियोगिकत्वानभ्युपगमात् ।

स्यादेतत्, कदापि घटसंसर्गशून्ये घटो नास्तीति प्रतीयमानस्तान्न प्रागभावादिः । ध्वंसप्रागभावयोः प्रतियोगिसमानदेशत्वनियमात् । नाप्यन्त्यन्ताभावः । तस्यासन्मात्रप्रतियोगिकत्वात् । घटादेश्च सत्त्वादिति चेदत्राहुः । तत्र घटो नास्तीत्यादौ तद्देशघटसंसर्ग एव प्रतियोगितया भासते । तस्य चासत्वात्तत्प्रतियोगिकात्यन्ताभाव एव तत्र विषय इति । यदि तु घट एव तद्देशनिष्ठात्यन्ताभावप्रतियोगितया भासते तथापि तद्देशारोपित एव तथा । न चैवं घटवत्यपि घटो नास्तीति प्रतीत्यापत्तिः । प्रतियोगिनोऽसत्त्वादिति वाच्यम् । प्रतियोगिनेव प्रतियोग्यारोपप्रधानेनाप्यभावस्य विरोधात् । घटवति च प्रतियोग्यसत्त्वेऽपि प्रधानभूतघटस्यैव सत्वात् । प्रधानत्वादेव च तस्यापि प्रतियोगित्वव्यवहार इति दिक् ।

### अभावविभागे मतान्तरद्वयम् तन्निरासश्च

**(टी.) एके ब्रुवते, संसर्गाभावोऽन्योन्याभावश्चेति द्विविध एवाभाव इति । अन्ये तु प्राक्प्रध्वंसात्यन्तान्योन्याभावात्मा चतुर्विध इति । तदुभयं निराकर्तुमिष्यते इत्युक्तम् । अन्योन्याभावो हि भेद एव । स च स्वरूपमेवेत्यन्यत्रोपपादितम् । कार्यकारणयोः संसर्गस्यान्यत्र निराकृतत्वेन प्रागभावप्रध्वंसाभावयोः संसर्गाभावत्वानुपपत्तेश्चेति ।**

(रा.टि.) ॥ **द्विविध एवेति** ॥ संसर्गाभावोऽपि प्रागभावादिभेदेन त्रिविध इत्यपि ध्येयम् ॥ **अन्यत्रेति** ॥ तत्वविवेकादौ ।

**भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् ।**

इत्यादिनेति भावः । प्रागभावादेस्संसर्गाभावत्वं वदतां मतं निराह ॥ **कार्येति ॥** तन्तुपटयोस्संसर्गप्रतियोगिकः प्राचीनः प्रागभावः । उदीचीनः प्रध्वंसः । उभावपि तन्त्वादिसमवायिकारणनिष्ठतया प्रतियोगिना समानदेशौ भिन्नकालीनाविति मतमयुक्तम् । उपादानोपादेययोरभेदप्रतिपादनेन संसर्गस्य अन्यत्र **तत्वविवेकादौ** निरस्तत्वेनेत्यर्थः ।

**(श्री.टि.) द्विविध एवेति ।** एतन्मते संसर्गाभावत्वादिकं तु संसर्गाभाव विभाजकोपाधिरिति द्रष्टव्यम् ॥ **चतुर्विध इति ।** एतन्मते प्रागभावत्वादिकमभावविभाजकोपाधिरेव न संसर्गाभाव विभाजकोपाधिरिति ज्ञातव्यम् । भावाभावस्वरूपत्वान्नान्योन्याभावतापृथगित्युक्तत्वेन पक्षद्वयेप्यन्योन्याभावस्य भावप्रभेदरूपत्वादित्याह ॥ **अन्योन्याभावो हीति ॥ अन्यत्रेति ।** तत्वनिर्णयादावित्यर्थः । मतद्वयेऽपि प्रागभावप्रध्वंसाभावयोरपि संसर्गाभावत्वं नास्तीत्याह ॥ **कार्यकारणयोरिति ।** उपादानोपादेययोरित्यर्थः ॥ **संसर्गस्येति ।** सम्बन्ध्यतिरिक्तस्य समवाय रूपस्य संसर्गस्येत्यर्थः । इदमुक्तं भवति । संसर्गाभावत्वं नाम संसर्गप्रतियोगिकाभावत्वं वा । नाद्यः । सति हि उपादानोपादेययोः संसर्गे उपादाने पूर्वकालसम्बन्धः । उपादेयसंसर्गप्रतियोगिकोऽभावः प्रागभावः । तथोत्तरकालसम्बद्ध उपादेयसंसर्गप्रतियोगिकोऽभावः प्रध्वंस इति स्यात् । नचैवम् । उपादानोपादेययोरभेदाङ्गीकारेण संसर्गस्यैवाभावात् । प्रागभावादीनां घटप्रतियोगिकत्वोपलम्भेन संसर्गप्रतियोगिकत्वस्य त्वयानङ्गीकाराच्च । नद्वितीयः । मृत्पिण्डे घटसंसर्गो यःकश्चिदारोप्यते उत समवायः । नाद्यः । संसर्गसामान्यस्य सत्त्वेन आरोपासम्भवात् । न द्वितीयः । समवायस्याप्यन्यत्र निराकृतत्वादिति । ननु भावोऽपीत्यपि शब्दो नाभावद्वित्वसमुच्चयार्थः ।

**(स.टि.)** इष्यत इत्यस्य निराकार्य परमतव्युत्पादनेन साफल्यं सम्पादयितुमवतारयति ॥ **एक इति ॥** संसर्गाभावोऽन्योन्याभावश्चेति द्विविधाभाव इति वैशेषिकभाषितं साक्षादभावविवक्षया । संसर्गाभावीय-

त्रिरूप्यान्योन्याभावेनैकेनाधिकेन च सह चातुर्विध्यमिति ध्येयम् । प्रागभावत्वादिकं तु संसर्गाभावान्तरालिकोपाधिरिति च । अपरे त्वक्षचरणानुसारिणः प्राक्प्रध्वंसात्यन्ताभावा अन्योन्याभावश्चेति चत्वार इति जगदुः । अत्राभावविभाजकोपाधिः प्रागभावत्वादिरेवेति पक्षद्वयेऽप्यभावचतुष्कताऽऽविष्कृता भवतीति वेदितव्यम् । इष्यते प्रामाणिकैरिति शेषः । तदप्रामाणिकत्वस्थेम्ने दूषणप्रकारमाकारयति ॥ **अन्योन्याभावो हीति ॥** यतोऽन्योन्याभावो भेदः स च धर्मिस्वरूप एव । **अन्यत्र** तत्वनिर्णयादौ । तथा च तस्य पृथक्त्वेन वचनमनुचितमिति भावः । मतद्वयेऽपि दूषणान्तरमाह ॥ **कार्यकारणयोरिति ॥** उपादानोपादेययोरित्यर्थः । **संसर्गः** सम्बन्धिभिन्नः समवायरूपः। तस्य **अन्यत्र** ''समवायाभ्युपगमाच्च साम्यादनवस्थिते''रित्यादिसूत्रभाष्यादौ ।

इदमत्राकूतम् । संसर्गाभावत्वं संसर्गप्रतियोगिकाभावत्वं वा संसर्गारोपपूर्वक प्रतीतिविषयाभावत्वं वा । न प्रथमः । उपादानोपादेययोः संसर्गे सत्युपादाने प्राक्कालसम्बन्धस्तत्संसर्गप्रतियोगिकोऽभावः प्रागभावस्तथोत्तर सम्बन्धो ध्वंस इति च स्यात् । तयोरभेदाङ्गीकारात्संसर्गस्यैवाभावान्नैव मङ्गीकर्तुं शक्यम् । प्रागभावादीनां घटादिप्रतियोगिकतयैवोपलम्भेन संसर्ग प्रतियोगिकत्वस्य त्वयाप्यनङ्गीकाराच्च । न द्वितीयः । मृत्पिण्डे यः कश्चिद्धट संसर्ग आरोप्यत उत समवायः । नाद्यः । विरोधिनः संसर्गसामान्यस्य सत्त्वेनारोपो दुरुपपादः । न द्वितीयः । समवायस्यानङ्गीकारपराहतत्वात् । विस्तरस्त्वदृश्यत्वाधिकरण सुधातोऽवगन्तव्यः ।

**(पां.टि.)** उक्तरीत्या प्रागभावप्रध्वंसाभावसदाभावेषु अन्तर्भावात् न संसर्गाभावस्य चतुर्थत्वमित्याशयः ।

**अन्यत्रेति** । 'भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् ।' इत्यादिना तत्त्वविवेकादौ इत्यर्थः । तस्मात् न तमादाय द्वैविध्यं चातुर्विध्यं वा युक्तमिति भावः ॥

**कार्यकारणयोरिति** । उपादानोपादेययोः इत्यर्थः ॥ **संसर्गस्येति** । समवायरूपस्य इत्यर्थः ॥ सति हि उपादानोपादेययोः संसर्गे तत्संसर्ग प्रतियोगिकत्वाद्वा तत्संसर्गावच्छिन्नप्रतियोगिकत्वाद्वा प्रागभावप्रध्वंसयोः संसर्गाभावत्वं वाच्यम् । उपादानोपादेययोरभेदे तत्संसर्गस्यैवाभावे तु न तयोः संसर्गाभावत्वमिति भावः ॥

**(का.टि.)** पक्षान्तरनिरासार्थत्वेन **इष्यते** इति मूलमावतारयितुमाह ॥ **एक इति** ॥ प्रागभावादेरन्यविधत्वव्यवच्छेदाय **द्विविध एवे**त्येवकारः । प्रागभावादित्रयस्यैव संसर्गाभावत्वादिति भावः । अथ भूतले संयोगेन घटो नास्तीति प्रतीतेरत्यन्ताभावस्य संसर्गाभावत्वमस्तु । ध्वंसप्रागभावयोस्तु कथम् । ध्वस्तो भविष्यतीति प्रतीत्योः संसर्गानुल्लेखादिति चेदुच्यते । अस्ति तावदिदानीं कपाले समवायेन घटो नास्तीति प्रतीतिः । तद्विषयस्तु नात्यन्ताभावः । प्रतियोगिध्वंसप्रागभावाधिकरणे तदनङ्गीकारात् । किं तु ध्वंसादिरेव तथा । तथा च घटादेः समवायेन ध्वंसादिप्रतियोगित्वे समवायस्यापि तथात्वम् । न चैवं समवायस्यानित्यत्वापत्तिः । प्रतियोगितावच्छेदक घटकतया प्रतियोगित्वेऽपि साक्षादतथात्वेन दोषाभावादित्याशयः ॥ **अपरे त्विति** ॥ एतन्मते ध्वंसप्रागभावयोर्न संसर्गाभावत्वम् । ध्वंसादिकालावच्छेदेन घटात्यन्ताभावस्वीकारेणोक्तप्रतीतिनिर्वाहादिति ध्येयम् । मतद्वयसिद्धमन्योन्याभवस्य पार्थक्यमादौ दूषयति ॥ **अन्योन्येति** ॥ यद्यप्यन्योन्याभावः स्वरूपमेवेत्येव वक्तुमुचितम् ।

**भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् ।**

इति तत्वविवेके तथैवोपपादितत्वात् । तथापि

**स्वरूपं वस्तुनो भेदो यन्न तस्य ग्रहेऽग्रहः ।**

**इत्यनुव्याख्याना**द्युक्तयुक्तिसूचनार्थमन्योन्याभावो हि भेद एवेत्युक्तम् । यद्वा अन्योन्याभावशब्देन घटपटादीनामन्योन्यसंसर्गाभावपरिग्रहनिरासाय

तथोक्तमित्यवगन्तव्यम् । प्रथमपक्षे दोषान्तरमाह ॥ **कार्यकारणयोरिति** ॥ उपादेयोपादानयोरभेदेन समवायसम्बन्धस्य **तत्वविवेकादौ** नितस्तत्वेनेत्यर्थः । कपाले समवायेन घटो नास्तीति प्रतीतिश्चासिद्धैवेति भावः । इदमुपलक्षणम् । अत्यन्ताभावस्यापि निष्प्रतियोगिकत्वेन संसर्गाभावत्वानुपपत्तेरित्यपि द्रष्टव्यम् ॥ **इत्यभावनिरूपणम् ।**

भावविभागः

**(टी.) भावं विभज्य दर्शयति**

**चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः ॥ २ ॥**

**न केवलमभावो भेदवान् । किन्तु भावोऽपीत्यपिशब्दः ।**

चेतनाचेतनलक्षणम्

**चेतयतीति चेतनः । अनेवंविधोऽचेतनः । तेन विष्णोश्चेतनत्वमभावस्याचेतनत्वं च ज्ञातव्यम् । सर्वमचेतनं चेतनार्थमिति चेतनस्य प्राधान्यात्पूर्वमुद्देशः ।**

सर्वचैतन्यवादनिरासः

**मृदब्रवीदित्यादिवचनात्सर्वं चेतनमेवेतिमतनिरासाय मत इत्युक्तम् । तच्चाभिमान्यधिकरणे निरस्तम् । चेतनादिविभागस्य नित्यादिविभागादभ्यर्हितत्वात्स एवादावुदाहृतः ।**

**(रा.टि.)** ॥ **चेतयतीति** ॥ स्वार्थे णिच् । चिती संज्ञाने । चेतते सम्यग्जानातीति बहुलग्रहणात्कर्तरि ल्युट् । यद्वा हेतुमत्येव णिच् । परान् बोधयतीत्यर्थः । चिती संज्ञान इत्यतो ण्यन्तात् 'ण्यासश्रन्थो युज्' इति ण्यन्तात्स्त्रियां युच्प्रत्यये अनादेशे णेरनिटीति णिलोपे चेतनेति रूपम् । अर्श आद्यच्प्रत्यये चेतना संज्ञा तद्वांश्चेतन इति रूपमिति भावः । अनेवंविधो ज्ञानहीन इत्यर्थः ॥ **तेनेति** ॥ एवं निर्वचनेनेत्यर्थः ॥ **चेतनार्थमिति** ॥

तदद्दृष्टजत्वादिति भावः । अथातो विभूतयोऽस्य पूरुषस्येत्युक्तदिशा भगवद्भोगार्थत्वाद्वेति भावः ॥ **अभिमान्यधिकरण इति** ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामिति युक्तिपादीयतृतीयाधिकरणे मृदब्रवीत् आपोऽब्रुवन् तत्तेज ऐक्षत, ओषधयस्संवदन्त, इत्यादिवाक्यमप्रमाणम् । मृदादिकं न वक्तृत्वादिमत् जडत्वान्मृत्वादिति युक्तिविरुद्धत्वादिति प्राप्ते निर्दोषवेदवाक्यस्य निरवकाशयुक्तेश्चाप्रामाण्यायोगात् प्रमाणभूतोभयान्यथानुपपत्त्या मृदादिशब्दानां तदभिमानिचेतनपरत्वस्यावश्यं कल्प्यत्वादित्युक्तत्वान्न मृदादिजडस्यैव वक्तृत्वादिना चेतनत्वं कल्प्यमिति निरस्तमित्यर्थः ॥ **अभ्यर्हितत्वादिति** ॥ **नित्यानित्यविभागेने**ति वक्ष्यमाणविभागस्याचेतनविषयत्वाच्चेतनस्योक्तदिशा प्राधान्याद्वा मोक्षोपयोगत्वाद्वा अभ्यर्हितत्वमिति भावः ।

**(श्री.टि.)** अभावे त्रित्वस्योक्तत्वादित्यतोऽवान्तरभेदवत्तामात्रसमुच्चायकोऽयमपिशब्द इत्याशयेनाह ॥ **न केवलमिति** । ननु चेतनाचेतनयोर्लक्षणाकथनान्न्यूनतेत्याशङ्कापरिहरन् संज्ञानिरुक्त्यैव लक्षणे लब्धे इत्याह ॥ **चेतयतीत्यादिना** । जानातीत्यर्थः । ज्ञानाधिकरणत्वमिति यावत् ॥ **अनेवंविध इति** । न जानातीत्यचेतनः । ज्ञानानधिकरणमिति यावत् ।

ननु चेतनशब्दः ''प्राणी तु चेतनो जीवो जन्तुजन्यशरीरिण'' इत्यभिधानबलात् जीव एव प्रसिद्धः । तथा च विष्णोश्चेतनत्वं न स्यात् । तथाऽचेतनशब्दो घटादिभावपदार्थ एव प्रसिद्धः । तथाचाभावस्याचेतनत्वं न स्यादित्याशङ्कां परिहरन्नाह ॥ **तेनेति** । चेतनलक्षणाक्रान्तत्वेनेत्यर्थः । तथा चेतनाचेतनशब्दयोर्यौगिकत्वेन विष्ण्वभावयोश्चेतनाचेतनत्वे नानुपपन्ने इति भावः । चेतनस्य पूर्वमुद्देशे निमित्तमाह ॥ **सर्वमचेतनमिति** । धनधान्यघटादिकमित्यर्थः ॥ **चेतनार्थमिति** । चेतनोद्देश्यकमित्यर्थः ॥ **मृदब्रवीदित्यादीति** । मृदब्रवीदापोब्रुवन्नोषधयः संवदन्त इत्यादिवचनादित्यर्थः ॥ **सर्वमिति** । मृन्न वक्त्री जडत्वादित्यनुमानविरुद्धत्वेनाचेतने मृदादौ

वचनक्रियायोगात् तदन्यथानुपपत्त्या मृदादिकं सर्वं चेतनमित्यर्थः ।। **तच्चेति ।** अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामित्यधिकरणे मृदादिशब्दानां तदभिमानिदेवतावाचित्वसमर्थनेन तन्मतं निरस्तमित्यर्थः । ननु नित्यानित्यादिभेदेनाचेतनविभागमादावकृत्वा चेतनविभाग एवादौ कस्मादुत्तरग्रन्थे क्रियत इत्यत आह ।। **चेतनादीति ।** चेतनविभागस्य आदिपदेन चेतनप्रभेददुःखस्पृष्टादिविभागस्येत्यर्थः । नित्यादीत्यादिपदेन अनित्यादिग्रहणम् । तथा च नित्यमनित्यं नित्यानित्यमेवमचेतनविभागादित्यर्थः ।। **अभ्यर्हितत्वादिति ।** सर्वमचेतनं चेतनोद्देश्यकमिति चेतनस्य प्राधान्यादित्यर्थः ।। **उदाहृत इति ।** दुःखस्पृष्टमित्याद्युत्तरग्रन्थे नेति शेषः ।

**(स.टि.)** ननु ''भावोऽपी''त्यत्रत्यापिशब्दस्याभावेऽपि द्वित्वसमुच्चायकत्वम् ''प्राक्प्रध्वंस सदात्वेने''त्यादिकेन विरुद्धम् । नेतः समुच्चेयान्तरमस्ति । अतो वैयर्थ्यापरपर्यायवाक्यालङ्कारताङ्गीकार एव शरणमित्यतः भावीय चेतनाचेतनत्वरूपावान्तरविभागस्य तत्समुच्चेयस्य सत्त्वान्न व्यर्थोऽपिरित्याह ।। **न केवलमिति ।।** शब्द्यते कथ्यत इति शब्दशब्दोऽर्थपरः। शब्द उपसर्गादाविष्कारे च अनुपसर्गाच्चेति चुरादिशब्दधातोः कर्मणि घञ् । ततश्चापेः शब्दोऽपेरर्थ इत्यर्थः ।

तेन ''किन्तु भावोऽपीत्यपिशब्द'' इति टीकानन्वयशङ्का पराकृता ज्ञेया । इतीत्यस्येत्यर्थ इति विवक्षणाद्वा समाधिर्बोध्यः । ननु परतन्त्रावान्तरभेदस्य भावस्य चेतनाचेतनरूपावान्तरभेदवत्त्वे भगवतोऽभावस्य च चेतनाचेतनत्वे क्रमान्नोक्ते स्याताम् । न च तयोर्न स्त एव ते इति वाच्यम् । तथा सति ''चेतनश्चेतनाना''मित्याद्यागमेन, अभावीयाचेतनत्वग्राहकप्रत्यक्षेण च विरोधापत्तेः । ज्ञापकाभावेऽप्यङ्गीकारे विष्णोरभावस्य चाचेतनत्वं चेतनत्वं च किं नस्यादित्यतः अस्य मूलस्यान्यनिषेधपरत्वाभावेन भावश्चेतनोऽचेतनश्चेति द्विविधः । न पुनरेकविधोनापि त्रिविध इत्येवं परत्वाद्भगवदभावादीनां चेतनाचेतनत्वादिकं वक्तुं शक्यत इत्याह ।। **चेतयतीतीति ।।** एतेन

चेतनशब्दस्य "प्राणी तु चेतनो जन्मी"त्याद्यभिधानेषु जीवे रूढत्वात्कथमनेन मूलेन भगवतश्चेतनत्वसिद्धिरिति निरस्तम् । उक्त रीत्या तस्य यौगिकत्वात् । एतेनैव च चेतनाचेतनयोर्लक्षणाकथन प्रयुक्तन्यूनतापि निरस्तेति बोध्यम् । चिती संविज्ञान इत्यस्मान्नन्द्यादिल्यौ, "युवोरनाका" वित्यनेनाने च, चेतनेति भवति । ज्ञातृत्वं चेतनत्वमित्युक्तम् भवति ।

क्रमप्राप्तमचेतनलक्षणमाह ॥ **अनेवंविध इति** ॥ अज्ञातेत्यर्थः । यदर्थं विग्रहप्रदर्शनं तदाह ॥ **तेनेति** ॥ विष्णोः भगवतः । चेतनत्वं अजीवत्वेऽपि ज्ञातृत्वम् । अभावस्याज्ञातृत्वरूपमचेतनत्वं ज्ञेयम् । अतो न न्यूनतेति भावः। चेतनस्यादौ निर्देशे निमित्तकथनपर "सर्व"मिति वाक्यस्यावतारिका तु भावप्राथम्यहेतुप्रदर्शनपरटीकाफक्किका पातनिकेव बोध्या । चेतनार्थम् । सर्वस्यापि जडस्य साक्षात्परंपरया वा चेतनोपभोगसाधनत्वादित्यर्थः । नन्वचेतनो नाम पदार्थ एव नास्ति । यया चापौरुषेयत्वेनानाशङ्कितदोषलेशया वाचा भवदभिलषितं साध्यते तत्सजातीयया "मृदब्रवी"दित्यादिकया श्रुत्या वचनकर्तृत्वरूपचेतनव्यापारोपपादनात्सर्वं चेतनमेवेति सर्वचैतन्यवादो प्रामाणिक इत्यभिप्रेत्य "मत"इत्यूचे सुचेता इत्याह ॥ **मृदब्रवीदित्यादिवचनादिति** ॥ न हि वाङ्मात्रेणार्थसिद्धिरित्यत आह ॥ **तच्चेति** ॥ अभिमानिनये हि मृदादिशब्दैर्मृदाद्यभिमानिदेवतानामेव श्रुतावभिधानान्न सर्वं चेतनमिति मतं सम्भवतीत्यानुषङ्गिकसिद्धान्तत्वेन सर्वचेतनत्वमतं निरस्तमित्यर्थः । अभिमान्यधिकरण इत्युपलक्षणम् । प्रकृत्यधिकरणे चेत्यपि द्रष्टव्यम् । सर्वस्य चेतनत्वपक्षे घटादिरूपचेतनस्य नित्यत्वमुच्यतेऽथानित्यत्वम् । नाद्यः । तन्नित्यभावस्यानादितया दण्डचक्रादिचक्रवैयर्थ्यापत्तेः । मुद्गराभिघातानन्तरं नाशानुभवविरोधाच्च । द्वितीये उक्तरीत्या सादित्वे वक्तव्ये घटादिचेतनं प्रति कपालादिचेतनमुपादानं वक्तव्यम् । विनोपादानं भावसृष्टेः क्वाप्यदृष्टेः । तथा च चेतनानामुपादानोपादेयत्वं सर्वप्रमाणविरुद्धत्वान्नाङ्गीकारार्हमिति तदधिकरणानुषङ्गिक-

सिद्धान्तार्थस्य स्थितत्वादिति भावः । उपपादितं चैतत्तदधिकरणे ''न चोर्णनाभि जनितृमातृणां च विकारिता । चेतनत्वादित्यनुव्याख्यानसुधायां स्वविकल्पितपक्षचतुष्टयनिरासकचेतनत्वहेतूपपादनमुखेन ।

ननु सर्वथाऽवर्जनीयो नित्यानित्यविभागः । स किमर्थमादौ न कृतः । न चानित्यस्याचेतनत्वं नैवं सति स्यादिति तदपाकरणम् । हन्त तर्ह्येवङ्करणे चेतनस्य नित्यत्वमपि न स्यादिति साम्यात् । अतः केन निमित्तेनैवंविधस्य विभागस्य प्राथम्यमित्याशंक्य रमातत्वादीनां चेतन विभागस्थत्वेनाभ्यर्हितत्वादित्याशयेनाह ॥ **चेतनादिविभागस्येति** ॥ भावाभावविभागादप्यस्य चेतनाचेतनविभागस्यादितः प्रयोज्यत्व प्रयोजकत्वेन तदपेक्षया चेतनाचेतनविभागप्राथम्यमेव न्याय्यमिति शङ्का तु वादिविप्रतिपत्तिभावाभावविशेषादिति वदताऽशेषसंविदा टीकाकृतैव प्राक्प्रकटं पराकृतेति ज्ञेयम् ।

**(पां. टि.)** ननु भावोऽपि इति अपिशब्दः अनर्थकः । न च अभावभेदसमुच्चयार्थकत्वात् न अनर्थकमिति वाच्यम् । अभावस्य त्रैविध्याभिधानेन तेन सह समुच्चयासम्भवात् इत्यतः अवान्तरविधायकत्वमात्रे भावाभावयोः समुच्चयार्थः अपिशब्दः इत्याह **न केवलमिति** । ननु परतन्त्रावान्तरभेदस्य चेतनाचेतनौ यदि अवान्तरभेदौ स्यातां तर्हि विष्णोः चेतनत्वमभावस्य अचेतनत्वञ्च न स्यात् । परतन्त्रावान्तरभेदभावभेदत्वेन चेतनत्वे परतन्त्रत्वस्य, अभावस्य अचेतनत्वे तस्य भावावान्तरभेदत्वेन अभावस्य भावत्वस्य च प्रसङ्गात् । न च भावाभावयोः परतन्त्रप्रभेदत्वेऽपि विभागस्य 'परतन्त्रं द्विविधमेव' इत्येवं परत्वेन विष्णोः भावत्वस्य व्युत्पादितत्वात्, तन्न्यायेनैव चेतनाचेतनयोः भावावान्तरभेदत्वेऽपि विभागस्य 'भावः चेतनत्वादिना द्विविध एव; न पुनः अनेकविध एव, नापि त्रिविध एव' इत्येवंपरत्वेन 'भाव एव चेतनत्वादिना द्विविधः' इत्येवं परत्वाभावेन विष्ण्वादेः भावत्वादेरिव चेतनत्वादेरपि उपपत्तिः' इति वाच्यम् । भावलक्षणाक्रान्तत्वेन विष्णोः भावत्वोपपत्तावपि, 'प्राणी तु चेतनो जन्मी जन्तुर्जन्यशरीरिणः ।'

इत्यभिधानसिद्धचेतनत्वस्य विष्णोः अभावेन चेतनत्वादेः असम्भवेन, विभागस्य अन्ययोगव्यवच्छेदकत्वाभावेऽपि लक्षणानुपपत्त्या एव विष्ण्वभावयोः अयोगात् इत्यतः चेतनशब्दस्य क्लृप्त अवयवशक्त्या एव जीवे प्रयोग प्रत्यययोः उपपत्तौ अक्लृप्तसमुदायशक्तेः अकल्पनीयत्वेन, चेतनशब्दस्य रूढ्या जीवपरत्वाभावेन जीवत्वस्य चेतनलक्षणत्वासिद्धेः ज्ञानकर्तृत्वतदभावयोः एव तल्लक्षणत्वेन वाच्यत्वात्, तयोश्च ईश्वरादौ अपि सत्त्वात्, न लक्षणानुपपत्त्याऽपि तयोः चेतनत्वाद्यभावप्रसङ्गः इत्याशयवान् आह **चेतयत इति चेतन इत्यादिना ।**

चेतयते जानाति इत्यर्थः । चिति सञ्चेतने इत्यस्य चौरादिकस्य इदं रूपम् । **तेनेति ।** संज्ञानिरुक्तिलभ्यलक्षणसत्त्वेन इत्यर्थः ॥ चेतनस्य अचेतनापेक्षया पूर्वनिर्देशे नियामकमाह **सर्वमचेतनमिति ।** अचेतनजातीयम्, चेतनजातीयम्; इत्यर्थः । **मृदिति ।** आदिपदेन 'आपोऽब्रुवन्', 'ता आप ऐक्षन्त' इत्यादेः सङ्ग्रहः ॥ **अभिमानीति ।** 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इत्यत्र इत्यर्थः । तत्र मृदादीनां वचनबुध्यादिकर्तृत्वप्रतिपादकवेदभागस्य 'मृत् न वक्त्री जडत्वात्' इत्यनुमानविरोधेन अप्रामाण्ये प्राप्ते, 'मृदादिशब्दानां तदभिमानिपरत्वेन तादृशवेदभागस्य प्रामाण्यम्' इति सिद्धान्तितं भगवता बादरायणेन । यदि च सर्वं चेतनम्, तदा अयं पूर्वः पक्षः सिद्धान्तश्च युक्तः स्यात् । अतः सर्वचैतन्यमतं सूत्रकृता निरस्तप्रायमिति भावः । ननु प्रागुक्तरीत्या 'भावोऽपि द्विविधः नित्योऽनित्यश्च, नित्योऽपि द्विविधः । चेतनोऽचेतनश्च' इत्येवं विभागः कुतो न कृतः? अनित्यस्य अचेतनत्वमेवं सति न उक्तं स्यात्' इति चेत्, तथा सति चेतनस्य नित्यत्वं न उक्तं स्यात्' इति समत्वात् । लक्षणत्वेन तज्ज्ञानं तु उभयत्र तुल्यम् । अतः केन विशेषेण चेतनादिविभागस्य प्राथम्यमित्यत आह **चेतनादिविभागस्येति ॥ अभ्यर्हितत्वादिति ।** श्रीतत्त्वानां चेतनविभागस्थत्वादिति भावः । यद्यपि भावाभावविभागादपि

अस्य अभ्यर्हितत्वात् प्राथम्यम् उचितं तथापि भावविभागप्राथम्यं बहुविप्रतिपत्तिसद्भावादेव इति प्रागेव समर्थितमिति ध्येयम् ॥

**(का. टि.)** मूले **भावोऽपी**त्यपिशब्दान्न केवलमभावो द्विविधः किं तु **भावोऽपी**ति प्रतीयमानसमुच्चयासङ्गतेराह ॥ **न केवलमिति** ॥ **इत्यपिशब्द इति** ॥ एकदेशसमुच्चयार्थोऽपिशब्द इत्यर्थः । ननु चेतनाचेतनयोर्भावप्रभेदत्वे स्वतन्त्रस्य चेतनत्वानुपपत्तिः । न च स्वतन्त्रस्य भावत्वाङ्गीकारान्नानुपपत्तिरिति वाच्यम् । परतन्त्रभावस्यैव विभाज्यत्वात् । अन्यथा चेतनविभागे दुःखास्पृष्टत्वेन रमामात्रग्रहणानुपपत्तेः । एवमभावस्याचेतनत्वानुपपत्तिश्चेति चेन्न । परतन्त्रभाव एवैवंविध इति विशेष्यावधारणविवक्षया दोषाभावादित्याशयेन स्वतन्त्राभावसाधारणे चेतनाचेतनत्वे निर्वक्ति ॥ **चेतयतीतीति** ॥ जानातीत्यर्थः । यद्यपि रूढ्या चेतनाचेतनपदाभ्यां चित्वजडत्वरूपजातिविवक्षापि सम्भवति तथापि ज्ञातृत्वाज्ञातृत्वरूपव्यावर्तकलक्षणलाभाय योगाश्रयणम् । ज्ञातृत्वं च ज्ञानस्वामित्वं ज्ञानाश्रयत्वस्यान्तकरणसाधारणत्वादित्यवधेयम् ॥ **तेनेति** ॥ तादृशचेतनत्वविवक्षणेनेत्यर्थः ॥ **चेतनार्थमिति** ॥ चेतनानामर्थः प्रयोजनं यस्मात्तत्तथा चेतनभोग्यमिति यावत् । भोक्तृभोग्ययोर्भोक्तुः प्राधान्यं प्रसिद्धमेवेति भावः । यद्यप्यचेतनस्य चेतननिरूप्यत्वाच्चेतनस्य प्रथममुद्देश इत्यपि सुवचम् । तथाप्युक्तप्राधान्यक्रमस्य मुख्यत्वात्तदेव निमित्तमुक्तम् ॥ **मृदब्रवीदित्यादीति** ॥ वक्तृत्वस्य ज्ञातृत्वं विना अनुपपत्तेरिति भावः । ननु श्रुतिविरुद्धत्वात्कथमत्र सम्मतिरत आह ॥ **तच्चेति** ॥ सर्वचैतन्यमतं हि निरस्तम् । अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामिति सूत्रे मृन्न वक्त्री जडत्वादिति युक्तिविरुद्धत्वाद्वेदस्याप्रामाण्यमिति प्राप्ते, मृदित्यादिभिरभिमानिदेवताव्यपदेश एव । तासां च शक्तिविशेषाददृश्यत्वमभिमन्यमानव्याप्तिवादभिमानित्वं च युज्यत इति सिद्धान्तितत्वादिति भावः । ननु भावो द्विविधो नित्योऽनित्यश्च । नित्यो द्विविधश्चेतनोऽचेतनश्चेत्येव विभागः कुतो न कृत इत्यत आह ॥ **चेतनादि-**

**विभागस्येति ॥** चेतनाचेतनविभागस्येत्यर्थः ॥ **अभ्यर्हितत्वादिति ॥** उक्तरीत्या चेतनस्य प्राधान्येन विप्रतिपत्तिसद्भावेन चावश्यवेद्यत्वादित्यर्थः।

**चेतनाविभागः तल्लक्षणं च**

**(टी.) यथोद्देशं चेतनविभागमाह**

**दुःखस्पृष्टं तदस्पृष्टमिति द्वैधैव चेतनम् ।**

**कदाचिद्दुःखसम्बद्धमेव दुःखस्पृष्टम् । कदापि दुःखासम्बद्धं तदस्पृष्टम् ।**

मूलगतैवकारकृत्यम्

**कल्पितत्वाद्दुःखादीनां न किञ्चिद्दुःखस्पृष्टमित्येके । ईश्वरातिरिक्तं सर्वमपि दुःखस्पृष्टमेवेत्यन्ये । तदुभयनिरासायैवकारः । आद्यस्य प्रत्यक्ष-विरुद्धत्वाद्द्वितीयस्यागमविरुद्धत्वात् । परमेश्वरस्य दुःखास्पृष्टत्वं स्वातन्त्र्येणैव सिद्धम् ।**

**(रा.टि.) ॥ आगमेति ॥** तत्वविवेकरूपागमेत्यर्थः ।

नित्यानन्दज्ञानबला देवा नैवं तु दानवाः ।

इत्याद्यगमेति वार्थः । यद्वा 'द्वौ वा व सृत्यनुपक्रमौ प्रकृतिश्च परमश्च । द्वावेतौ नित्यमुक्तौ' इत्याद्यागमेत्यर्थः ।

**(श्री.टि.)** न्यूनतापरिहारायोद्देशेनैव तयोर्लक्षणं लब्धमित्याह ॥ **कदा-चिदिति ।** मुक्तेष्वव्याप्तिपरिहाराय कदाचिदित्युक्तम् । तेषां पूर्वं दुःख-सम्बन्धसद्भावान्नाव्याप्तिः ॥ **कदापीति ।** मुक्तेष्वतिव्याप्तिपरिहारायोक्तं कदापीति । दुःखसम्बन्धात्यन्ताभाववदित्यर्थः । तथा च नातिव्याप्तिरिति भावः । केचित्तु दुःखस्पृष्टलक्षणे सर्वदा दुःखसम्बन्धस्याभावात्तत्परिहाराय कदाचिदित्युक्तमित्याहुः । तन्न । दुःखसम्बन्धवदित्येवोक्ते कदाचिद्दुःख सम्बन्धमादाय लक्ष्ये लक्षणसत्वेनासम्भवशङ्कानवकाशात् । सर्वथा

लक्षणस्य लक्ष्यावृत्तित्वे ह्यसम्भवः । दुःखशब्देन दुःखयतीति व्युत्पत्त्या प्रकृतिसम्बन्धरूपायास्संसृतेर्विवक्षितत्वेन संसारिणि सुषुप्त्यवस्थायां तत् सद्भावेनातिव्याप्तेरप्यसम्भवाच्च । अत एव तत्वविवेके सृतियुगिति व्यवहृतमिति द्रष्टव्यम् ॥

**सर्वमपीति** । तथा च रमाया अपि दुःखस्पृष्टत्वमेवेति तेषामभिप्रायः ॥ **आद्यस्येति** । दुःखादीनां कल्पितत्वस्य तत्सत्यताग्राहिप्रत्यक्षादिप्रमाण-विरुद्धत्वादित्यर्थः ॥ **द्वितीयस्येति** । रमाया अपि दुःखस्पृष्टत्वाभिप्रायेण ईश्वरातिरिक्तस्य सर्वस्यापि दुःखस्पृष्टत्वमिति पक्षस्य तत्वविवेकाख्यागम-विरुद्धत्वादित्यर्थः । यथोक्तं तत्वविवेके ॥ श्रीर्नित्यमुक्तेति । ननु रमायाः अस्वतन्त्रचेतनस्य दुःखास्पृष्टत्वलाभेऽपि ईश्वरस्य दुःखास्पृष्टत्वमलब्ध-मित्यपेक्षायामाह ॥ **परमेश्वरस्येति** । स्वतन्त्रमस्वतन्त्रं चेति आदौ स्वातन्त्र्येण उद्देशादेव दुःखास्पृष्टत्वं सिद्धमित्यर्थः । स्वातन्त्र्यस्य दुःखा-भावोपपादकत्वादिति भावः । तथाचायं प्रयोगः । ईश्वरो न दुःखवान् । तज्जिहासुत्वे सति स्वतन्त्रत्वात् । यो यज्जिहासुत्वे सति स्वतन्त्रःसः तदभाववान् । यथा संमत इति । उक्तं चानुव्याख्याने ।

**यदधीना गुणाश्चैव दोषा अपि हि सर्वशः ।**
**गुणास्तस्य कथं न स्युःस्युर्दोषाश्च कथं पुनः ॥** इति ।

अत्र दुःखस्यापि दोषकार्यत्वाद्दोषशब्देन दुःखस्यापिग्रहणमिति ज्ञातव्यम् ।

**(स.टि.)** उद्देशक्रमेण चेतनविभागमाहेत्याह ॥ **यथोद्देशमिति** ॥ ननु मुक्ताः किन्दुःखस्पृष्टा न वा । नाद्यः । मोक्षस्य संसारसदृक्षताप्रसङ्गात् । नान्त्यः । उत्तरवाक्यानानुकूल्यापत्तेः । अतः कथमित्यतस्तेष्वपि यथा न लक्षणस्यातिव्याप्तिः स्यात्तथा किञ्चित्कदाचिदित्यध्याहृत्य स्पृष्टपदार्थं स्पष्टमाह ॥ **कदाचिदिति** ॥ तेषामपि पूर्वं दुःखस्पृष्टत्वादव्याप्तिवारणमिव

द्वितीयलक्षणाति व्याप्तिवारणञ्च ज्ञेयम् । अत्र दुःखपदं तत्वविवेकाद्युक्तदिशा संसृतिपरम् । ततोऽव्याप्त्यतिव्याप्त्योरभाव इति मन्तव्यम् । कश्चिद्दुःखादीनाम् सर्वेषामाविद्यकत्वेन कल्पितत्वेन न किमपि दुःखस्पृष्टमिति नैवं विभागः सम्भवतीति समुदाजहार । अवादीदपरो वादीश्वरातिरिक्तं सर्वं दुःखस्पृष्टमेवेति । तदुभयमपाकर्तुं ''मेवे''त्याहेत्याह ।। **कल्पितत्वाद्दुःखादीनामित्यादिना एवकार इत्यन्तेन** ।। यथाश्रुतैवकारान्वये विशेषणसङ्गतत्वप्राप्त्या चेतने तदन्यस्मिन्नचेतने दुःखस्पृष्टत्वायोगतत्स्पृष्टत्वयोः प्राप्तेरचेतने तत्स्पृष्टत्वस्य सर्ववाद्य संमतेः कथमिति चेन्न । व्युत्क्रमेणैवकारान्वये भवत्येवान्ययोगव्यवच्छेदक इत्युपपत्तेः ।

ननु रमा दुःखास्पृष्टेति वचनं किन्तस्याः स्वातन्त्र्यमङ्गीकृत्य न वा । नाद्योनवद्यो विष्णुसर्वोत्तमतावादिनाम् । नान्त्यः । परतन्त्रत्व दुःखास्पृष्टत्वयोः सामानाधिकरण्यायोगादिति पूर्वपक्ष्याशयः ।। **तदुभयेति** ।। दुःखाद्याविद्यकं सर्वमीश्वरातिरिक्तं दुःखस्पृष्टमित्युभयस्य । एवकारः द्विधेवेत्यत्रत्यः । निरासप्रकारं दर्शयति ।। **आद्यस्येति** ।। प्रत्यक्ष विरुद्धत्वात् । अहं दुःखीत्याद्यबाधितसाक्षिप्रत्यक्षविरुद्धत्वादित्यर्थः । द्वितीयस्य ईशातिरिक्तस्य सर्वस्य दुःखस्पृष्टत्वमिति नैयायिकमतस्य । समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्येत्येतत्सूत्रसंवादि ''द्वौ वावसृत्यनुपक्रमौ । प्रकृतिश्च परमश्च । जीवा एव तु दुःखिनः । श्रीर्नित्यमुक्ते''त्याद्यागमविरुद्धत्वादित्यर्थः । तर्हि रमारमारमणौ विभिन्नावुताभिन्नौ । नाद्यः । भिन्ना च न खिन्ना चेत्स्वतन्त्रतत्वद्वैरूप्यं स्यात् । न द्वितीयः । तथात्वे विभागायोग इत्याशंक्याद्यं पक्षमभ्युपेत्य परमेश्वरस्य यद्दुःखास्पृष्टत्वं तदन्यनिरपेक्षम् । रमायास्तु भगवत्तन्त्रमिति प्रमाणप्रमितत्वान्नोक्त दोष इति समाधत्ते ।। **परमेश्वरस्येत्यादिना** ।। स्वातन्त्र्येणेति वदन् ''स्वतन्त्रो हरिरेकरा''डित्याद्यागमानुगृहीतं हरिर्न दुःखस्पृष्टचेतनः । स्वतन्त्रत्वादिति व्यतिरेक्यनुमानं मानमत्रेति सूचयति । परमेश्वर इति वदन्नवदंश्च विष्ण्विति परा च सा

मा च परमा तस्या ईश्वरः स्वामी पतिर्वा । ततश्च नियतपतिपत्नीभाववतां पत्युरुत्तमत्वमिव वध्वा अधमत्वं नियतमिति रमापेक्षयौत्तम्ये हेत्वन्तरञ्चोदितं भवतीति भावमाविश्चकारेति ज्ञेयम् । ननु पूर्वमनुपदमेवोदित प्राधान्येन दुःखास्पृष्टं तत्स्पृष्टमित्येव विभागो न्याय्यः । प्राधान्यं बहुविधं श्रेष्ठत्वरूपम् । अभावप्रतियोगित्वेन तन्निरूपकतारूपं उपजीव्यत्वरूपमित्यादि । तन्मध्ये श्रेष्ठत्वं मुख्यम् । तथैवोत्तरग्रन्थात् ।

**(पां.टि.)** ननु मुक्तानां दुःखित्वे संसारित्वप्रसङ्गेन दुःखातीततया दुःखस्पृष्टत्वाभावात्, दुःखस्पृष्टावान्तरभेदत्वं वक्ष्यमाणमनुपपन्नमेव । दुःखास्पृष्टत्वेन सङ्ग्रहश्च स्यात् । न च इष्टापत्तिः । 'अन्ये तु समस्तशः' इति वक्ष्यमाणविरोधादित्यतः 'व्याप्त्यादिपदमपहाय स्पृष्टपदप्रयोगेण लब्धमर्थमाह कदाचिदिति । मुक्तेषु अतिव्याप्तिनिवृत्यर्थं विशेषणद्वयम् ।

न च एवं मुक्त्यनन्तरं कदाचिदपि दुःखसम्बन्धाभावात् मुक्तेषु अव्याप्तिः । तेषु तत एव दुःखास्पृष्टत्वम् । दुःखसंसर्गात्यन्ताभावाधिकरणत्वञ्च दुःखास्पृष्टत्वम्' इत्यत्र तात्पर्यात् ।

यत्तु सर्वदा दुःखसम्बन्धस्य असम्भवात्, कदाचित् इत्युक्तं आद्यलक्षणे । संसारिणि सुषुप्त्यादौ अतिव्याप्तिवारणाय द्वितीयलक्षणे च कदापि इत्युक्तम् इति । तन्न दुःखशब्देन प्रविबन्धरूपायाः संसृतेः विवक्षितत्वेन उक्तदोषानवकाशात् । अत एव तत्त्वविवेके 'सृतियुक्' इति व्यवहारः इति द्रष्टव्यम् ॥ इति द्वेधैव चेतनम्' इति विशेषणसङ्गतेवकारस्य अयोगव्यवच्छेदनपरत्वं प्रकटयितुं दुःखस्पृष्टतदस्पृष्टत्वरूपप्रकारद्वयस्य अयोगप्रापकं मतद्वयमुपन्यस्यति **कल्पितत्वादित्यादिना ।**

निर्दुःखब्रह्माभिन्नत्वात् जीवस्य दुःखित्वव्याघातेनैव कल्पितदुःखादेः असम्भवात्, दुःखस्पृष्टं चेतनमेव नास्ति इत्याशयः ।

**ईश्वरेति** । ईश्वरातिरिक्तं लक्ष्म्यादिकमपि दुःखास्पृष्टम्' इति वदन् प्रष्टव्यः– 'तत् स्वतन्त्रम्? परतन्त्रं वा?' इति । आद्ये स्वतन्त्रद्वयविरोधः ।

द्वितीये पारतन्त्र्यदुःखयोः अविनाभावस्य लोकदर्शनेन सिद्धत्वात्, 'परतन्त्रं दुःखास्पृष्टम्' इति कथं न व्याघातः इत्याशयः । **तदुभयेति** । तदुभयप्राप्तः यः योगः, तद्व्यवच्छेदपरत्वेन एवकारस्य सप्रयोजनत्वमिति भावः ॥ तन्निरासप्रकारं दर्शयति **आद्यस्येति** ।

निरासः इति शेषः । निर्बाधसाक्ष्यादिसिद्धसत्ताकदुःखादिप्रपञ्चमिथ्यात्व साधकश्रुतियुक्त्यादेः साक्षादिविरुद्धतया तन्मिथ्यात्वासाधकत्वादित्यर्थः ।

**द्वितीयस्येति** ॥ निरासः इति शेषः । कुतः? इत्यत आह **आगमस्येति** । ईश्वरातिरिक्तस्यापि परतन्त्रस्यापि श्रीतत्त्वस्य 'द्वौ वा व सृत्यनुपक्रमौ प्रकृतिश्च परमश्च' इत्यादिश्रुत्या, 'समना चासृत्युपक्रमादमृतत्वं चानुपोष्य' इति सूत्रेण च सर्वदुःखास्पृष्टत्वस्य सिद्धत्वेन, 'सर्वं दुःखस्पृष्टमेव' इत्यस्य तद्विरुद्धत्वादित्यर्थः ॥ ननु एवं परमेश्वरस्य दुःखास्पृष्टत्वसिद्धिः न स्यात् । दुःखास्पृष्टत्वादेः परतन्त्रचेतनविभागत्वेन उक्तत्वादित्यत आह **परमेश्वरस्येति** । अयं भावः– कदाऽपि दुःखासम्बद्धं तदस्पृष्टम् । न च उक्तदोषः । भवेत् एवं कथञ्चित् यदि 'परतन्त्रचेतनमेव द्विविधम्' इत्येवंपरः विभागः स्यात् । न च एतदस्ति । परतन्त्रचेतनं दुःखस्पृष्टतदस्पृष्टतया द्विविधमेव, न पुनः एकविधम्, नापि त्रिविधम्' इत्येवं परत्वात् विभागस्य । न च एवं अतिप्रसङ्गः । साधकभावाभावाभ्यां विशेषात् । न हि परमेश्वरस्य दुःखास्पृष्टत्वसाधकस्वातन्त्र्यवदन्यस्यापि तत्साधनं किञ्चित् अस्ति । इति । यद्वा ननु परमेश्वरस्य दुःखास्पृष्टत्वसिध्यर्थम्, अयं विभागः आदौ एव कार्यः' इत्यत आह **परमेश्वरस्येति** । दुःखित्वविरुद्धस्वातन्त्र्येण उद्देशेन एव तत्सिद्धिः इति भावः ॥

**(का.टि.)** ॥ **यथोद्देशमिति** ॥ उद्देशानुसारेणेत्यर्थः । तदपवादकप्राधान्यादेश्चाचेतनेऽभावादिति भावः । उद्देशेनैव लक्षणलाभान्न न्यूनतेत्याशयेनोद्देशलब्धलक्षणे दर्शयति ॥ **कदाचिदिति** ॥ सर्वदा दुःखसम्बन्ध-

विवक्षायामसम्भवः स्यादतः **कदाचिदित्युक्तम्** । दुःखस्यान्तःकरण-धर्मत्वात्सम्बन्धपदम् । दुःखानुभवोपलक्षितमित्यर्थः । मुक्तजीवानामपि पूर्वतनदुःखानुभवोपलक्षितत्वान्नासङ्ग्रहः ।

**ये तु** तत्सङ्ग्रहानुरोधेन दुःखसंसर्गात्यन्ताभावानधिकरणत्वं दुःख-स्पृष्टत्वमिति वर्णयन्ति । तेषां अभावस्य भावनिरूप्यत्वाद्दुःखस्पृष्टस्य प्रथममुद्देशः इत्युत्तरटीका न सङ्गच्छते । निरुक्तदुःखस्पृष्ठत्वस्यापि प्रतियोगि निरूप्यत्वात् । कथं तर्हि संसारसंसर्गात्यन्ताभावानधिकरणत्वमिति तत्वविवेकटीकामन्दारमञ्जरी सङ्गच्छत इति चेन्न । **तत्वविवेके** नित्यमुक्त-स्यैव प्रथममुद्देशेन तदुपपत्तेः । इह तद्रीत्या व्याख्यानं तु टीकाया यथा-श्रुतदुःखस्पृष्टपरतयैव सङ्गमनीयम् ।

दुःखस्पृष्टत्वं यदि दुःखासम्बन्धमात्रं तदा संसारिणि सुषुप्त्यादावति-व्याप्तेराह ॥ **कदापीति** ॥ तथा च दुःखसम्बन्धात्यन्ताभाववत्वं विवक्षित-मिति प्राञ्चः । न च नित्यमुक्तश्च सृतियुगिति तत्वविवेकानुसारेण दुःख-पदस्य प्रकृतिसम्बन्धलक्षणसंसारपरतया न सुषुप्त्यादावतिव्याप्त्यवकाश इति वाच्यं । तथा सति गरुडादीनां दुःखास्पृष्टत्वनिरासानुपपत्तेः । न हि तेषामसंसारित्वरूपदुःखास्पृष्टत्वमन्यैः स्वीकृतम् । समष्टित्वाङ्गीकार-विरोधात् । प्राप्ततमसां दुःखस्पृष्टावान्तरदुःखसंस्थप्रभेदानुपपत्तेश्च । कथं तर्हि तत्वविवेकटीकायाममुक्तप्रभेदत्वेन प्राप्ततमसां परिगणनमिति चेन्न । तत्र स्वरूपसुखाविर्भावरूपमुक्तत्वस्य विवक्षितत्वेन प्राप्ततमसां तदभावेना-मुक्तत्वसम्भवात् ।

न चैवं संसारध्वंसाधिकरणत्वं मुक्तत्वं वर्तमानसंसारत्वममुक्तत्वमिति मन्दारमञ्जरीविरोध इति वाच्यम् । स्वरूपसुखाविर्भावस्य सुप्तादिसाधारण्या न्मुक्तत्वशरीरे संसारध्वंसवत्वं, तादृशमुक्त्यभावस्य नित्यमुक्तसाधारण्या-दमुक्तत्वशरीरे संसारित्वं च निवेश्यमित्याशयेन तथाऽभिधानात् । अन्यथा

प्राप्ततमसां मुक्तेष्वेव परि गणनापत्तेः । स्वरूपाविर्भाव एव मुक्तिरिति टीकाविरोधाच्च । अत्र तु विमुक्ता दुःखादिति स्वाख्यानान्निर्दुःखत्व रूपमुक्तत्वस्य विवक्षिततया तस्य च निःसंसाररूपत्वे प्राप्ततमसां मुक्तान्तर्भावध्रौव्यात् । न च तदर्थमत्रापि स्वरूपसुखाविर्भावो निवेश्यः । दुःखपदस्य मुख्यार्थत्वेनैवोपपत्तावर्थान्तरं गृहीत्वा विशेषणान्तरदानस्यायुक्तत्वात् । न चैवं तत्वविवेकाननुसारित्वम् । सृतियुक्तत्वनित्यमुक्तत्वाभ्यां दुःख स्पृष्टत्वतदस्पृष्टत्वयोरेव सिद्धेः । शिष्यव्युत्पादनाय फलितोक्तेरमुक्तविभागादाविव सम्भवात् ।

भावचन्द्रिकारीत्या तु मुक्तेष्वतिव्याप्तिवारकतया कदापीत्यस्य सार्थक्यसम्भवाद्दुःखपदं संसारपरमेव । न च प्राप्ततमसां मुक्तान्तर्भावापत्तिः । दुःखपदस्य दुःखतत्साधनसाधारणानिष्टमात्रपरत्वात् । तत्वविवेके सृतिपदस्याप्येतदर्थत्वान्न तद्विरोधोऽपीति ।

तत्वसङ्ख्यानस्य व्याख्यानरूपत्वादेतदनुसारेण सृतिपदमेव दुःखार्थकमित्यप्याहुः ।

स्यादेतत्, दुःखसम्बन्धात्यन्ताभाववत्वं दुःखास्पृष्टत्वमित्ययुक्तम् । दुःखसम्बन्धस्य प्रतियोगित्वेनात्यन्ताभावविशेषणत्वायोगात् । सतस्तत्प्रतियोगित्वाभावत् । असतश्च व्यावर्तकत्वानुपपत्तेः । न च प्रतियोग्यसत्वेऽपि प्रतियोगित्वस्य निरूपकतया व्यावर्तकत्वसम्भवः । प्रतियोगित्वसामान्यस्य भावान्तरसाधारणत्वात् । तद्विशेषस्य चानुल्लेखात् । किं च प्रतियोगित्वं प्रतियोग्यभावयोः सम्बन्धः । न च सम्बध्यसत्त्वे सम्बन्धस्य सत्वं सम्भवत्यतिप्रसङ्गात् ।

यद्यपि तदस्पृष्टमिमूलस्य दुःखासम्बद्धमिति टीकायाश्च दुःखसम्बन्धवदन्योन्याभावार्थकतयोपपत्तेर्नोक्तविकल्पदोषः । सत एव तत्प्रतियोगित्वात् । तथापि **नित्यादुःखे**त्युत्तरमूलानुसारादत्यन्ताभावघटितमपि लक्षण-

मभिप्रेतम् । अत एव त्रैकालिकदुःखनिषेधवदिति व्याख्यानमुपपद्यते । भाव चन्द्रिकायां च दुःखसंसर्गात्यन्भावाधिकरणत्वं दुःखास्पृष्टत्वमित्युक्तम् ।

किं च नित्यमुक्त इति तत्वविवेके, यस्य न कदापि संसारसम्बन्धोऽसौ नित्यमुक्त इति टीकायां च संसारसंसर्गात्यन्ताभाववत्त्वं लक्षणमुक्तम् । तत्र चोक्तानुपपत्तिः कथं परिहरणीयेति । अत्राहुः, असत एव दुःखादि-सम्बन्धस्य प्रतियोगित्वविशेषेणात्यन्ताभावविशेषणत्वम् । सदसतोः सम्बन्धान्तराभावेऽपि विषयत्वप्रतियोगित्वादिसम्बन्धस्वीकारात् । अत एव तस्य व्यावर्तकत्वमपि । सम्बन्धविधया प्रतियोगित्वविशेषानुल्लेखस्त्वसिद्ध एवेति ।

अन्ये तु सत एव दुःखसंसर्गस्य प्रधानप्रतियोग्यनुगतनिरूपकत्वेनाभाव-विशेषणत्वम् । अत एवैतद्दुःखसंसर्गाभावस्तत्रेति प्रतीतिरुपपद्यते । न चैवमसतस्तत्प्रतियोगित्वे मानाभावः । भ्रमबाधोत्तरं 'असन्नेव दुःखसंसर्गः प्रत्यभावत्' इति प्रतीतेरेव मानत्वात् । असत्वस्यात्यन्ताभवप्रतियोगित्व-रूपत्वादित्याहुः । अधिकमन्यत्रानुसन्धेयम् ।

मायावाद्युपगतचेतनैक्यस्य तार्किकाद्युपगतपरतन्त्रचेतनैकविध्यस्य च निरासाय द्वेधैवेत्यवधारणमित्याह ॥ **कल्पितत्वादिति** ॥ दुःखादीना-मारोपितत्वात्परमार्थतो न किञ्चिद्दुःखस्पृष्टमित्यर्थः । यद्यपि चेतनाचेतनत्वेन परतन्त्रविभागादेव स्वतन्त्रचेतनान्तरसिध्या चेतनैक्यनिरासः सम्भवति । न च स्वतन्त्रस्य चेतनत्वानुक्तेर्नैवमिति वाच्यम् । स्वातन्त्र्येणैव चेतनत्वसिद्धेः। तथापि पारतन्त्र्यादीनामप्यारोपितत्वादुक्तविभागानुपपत्तिशङ्काया अपि निवर्तकोऽयमेवकार इति भावः । अत एव दुःखादीनामित्यादिपदम् ।

॥ **प्रत्यक्षविरुद्धत्वादिति** ॥ दुःखी परतन्त्रोऽहमित्यादिसाक्षिप्रत्यक्ष-विरुद्धत्वादित्यर्थः । न चेदमप्रमाणम् । बाधकाभावात् । न च नेहनानास्ती-त्यागमो बाधकः । तस्य ब्रह्मणि भिन्नगुणक्रियादिनिषेधपरत्वात् ।

अन्यथोक्तप्रत्यक्षविरोधात् । अत एव सत्यपि प्रमाणत्रयविरोधे प्रबलत्वात् प्रत्यक्षविरोध एव कण्ठत उक्तः ।। **आगमविरुद्धत्वादिति** ।। ''द्वावेतौ नित्यमुक्तौ, निर्दुःखो हि हरिर्नित्यं श्रीश्चान्ये दुःखभागिन'' इत्याद्यागम-विरुद्धत्वादित्यर्थः । तद्बलेनैव समनाधिकरणे श्रियो नित्यमुक्तत्वस्य समर्थितत्वादिति भावः ।

नन्वीश्वरस्य दुःखास्पृष्टत्वमवश्यं पतिपत्तव्यम् । तत्कुतो नोक्तमत आह ।। **परमेश्वरस्येति** ।। स्वातन्त्र्योक्तावर्थसिद्धत्वान्नोक्तमिति भावः । यद्वा ननु दुःखस्पृष्टत्वतदस्पृष्टत्वाभ्यां तत्वविभाग एव कर्तव्यो न तु परतन्त्रचेतन-विभागः । स्वतन्त्रस्य दुःखास्पृष्टत्वालाभादित्यत आह ।। **परमेश्वेरस्येति** ।। तस्मादयमेव विभागो युक्त इति भावः । यद्वा नन्वत्र परतन्त्रचेतनमेवैवं-विधमित्यवधारणं विवक्षितं न वा । आद्ये स्वतन्त्रस्य दुःखास्पृष्टत्वं न स्यात् । अन्त्ये दुःखस्पृष्टत्वं किं न स्यादित्यत आह ।। **परमेश्वरस्येति** ।। स्वातन्त्र्येण दुःखास्पृष्टत्वमेव सिद्धमतो नान्त्यपक्षे दोष इति भावः । यद्वा ननु रमाया दुःखास्पृष्टत्वे स्वातन्त्र्यापत्त्या परमेश्वरसाम्यापत्तिरत आह ।। **परमेश्वरस्येति** ।। परानपेक्षया दुःखास्पृष्टत्वं परमेश्वरस्यैव सिद्धमतो न तत्साम्यापत्तिरिति भावः । यद्वा परतन्त्रस्य दुःखास्पृष्टत्वमनुपपन्नमत आह ।। **परमेश्वरस्येति** ।। परमेश्वरस्य स्वातन्त्र्यैणैव परतन्त्रस्यापि दुःखास्पृष्टत्वं सिद्धम् । तस्य यथेष्टकर्तृत्वादिति भावः ।

**दुःखास्पृष्टस्पृष्टदुःखचेतनयोः क्रमेणोद्देशः**

**(टी.) यद्यप्यनयोर्दुःखास्पृष्टं चेतनं प्रधानं तथाप्यभावस्य भावनिरूप्य त्वात् दुःखस्पृष्टस्य प्रथममुद्देशः । तथापि प्राधान्यक्रमस्य मुख्यत्वात्तदनु-सारेण द्वे अपि निर्दिशति**

**नित्यादुःखा रमाऽन्ये तु स्पृष्टदुःखाः समस्तशः ।। ३ ।।**

**अन्ये चेतनाः । एके तु व्यष्टिसमष्टिभेदेन जीवान्परिकल्प्य गरुडानन्त-**

**विष्वक्सेनादीन्समष्टिजीवानपि नित्यादुःखानाचक्षते । तन्निरासाय समस्तश इत्युक्तम् । अत्र चागमानां प्रामाण्यम् । अत एव दुःखास्पृष्टे प्रभेदाभावाद्दुःखस्पृष्टापेक्षयैव धाप्रत्ययः पूर्वोक्तो ज्ञातव्यः ।**

(रा.टि.) ॥ **अत्र चेति** ॥ श्रीश्रीपतिभ्यामन्ये जीवाः स्पृष्टदुःखा इत्यत्र 'अतोऽन्यदार्तं, जीवा एव तु दुःखिनः' इत्याद्यागमानां प्रामाण्यं ध्येयमित्यर्थः । **अत एवे**त्यस्य विवरणं **दुःखास्पृष्टे प्रभेदाभावादिति** । सर्वस्य स्पृष्टदुःखत्वादेवेति वा अर्थः । 'सङ्ख्याया विधार्थे धा' इत्युक्तधा प्रत्ययस्य दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनमित्यत्रोक्तेरिति भावः ।

(श्री.टि.) अनयोर्दुःखस्पृष्टतदस्पृष्टयोर्मध्ये ॥ **प्रधानमिति** । तथा च तदेव प्रथममुद्देष्टव्यमिति भावः । तर्हि उद्देशानुसारेणैव निर्देशोऽपि कस्मादादौ न क्रियते इत्यत आह ॥ **तथापि प्राधान्यक्रमस्येति** । नन्वेवं प्राधान्यक्रमस्य मुख्यत्वादेव प्रथममुद्देशोऽपि तथैव कस्मान्नकृत इति चेन्न । प्रतियोगिज्ञानं विना प्रथमं दुःखास्पृष्टस्य ज्ञातुमशक्यत्वात् । न चैवं निर्देशोऽपि तथैव स्यादिति वाच्यम् । उद्देशेनोभयोर्ज्ञाने निर्देशे प्राधान्यक्रमस्यादर्तुमुचितत्वादिति भावः ॥ **द्वे** चेतने ॥ **निर्दिशतीति** । शृङ्गिग्राहिकया दर्शयतीत्यर्थः । चेतना रमाव्यतिरिक्ता । **एके** रामानुजाः ॥ **व्यष्टिसमष्टिभेदेनेति** । **व्यष्टयो** मुक्ताः । **समष्टयः** संसारिणः । अनन्तः शेषः ॥ **अत्र चेति** । श्रीश्रीपतिभ्यामन्ये जीवा दुःखस्पृष्टा इत्यत्र ''जीवा एव तु दुःखिन'' इत्याद्यागमानां प्रामाण्यमिति राघवेन्द्रीये । समष्टिजीवत्वेन परपरिकल्पितानामपि गरुडादीनां दुःखस्पृष्टत्व इत्यर्थः ॥ **आगमानामिति** । ते च अन्यत्र द्रष्टव्याः । ननु दुःखस्पृष्टं तदस्पृष्टमिति द्विधैव चेतनमिति धाप्रत्ययेन चेतनस्य प्रकारद्वयवत्त्वमुक्तम् । दुःखस्पृष्टतदस्पृष्टयोः प्रकारत्वं च तदाश्रयप्रकारिरूपव्यक्तिबाहुल्यं विना न युक्तम् । प्रकारत्वस्य स्वाश्रयव्यक्तिभेदं विनानुपपत्तेः । तथा च दुःखास्पृष्टस्यापि भेदवत्त्वं प्राप्तमत आह ॥ **अत एवेति** । तदेव विवृणोति ॥ **दुःखास्पृष्ट इति** ॥

**(स. टि.)** एवं च ''दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतन''मित्यत्र दुःखास्पृष्टचेतनस्य रमारूपस्य श्रेष्ठत्वात्तस्यैवादौ निर्देशः कार्यः । तत्कथं दुःखस्पृष्टस्य प्रथमं निर्देश इत्याशङ्कते ॥ **यद्यपीति** ॥ **प्रधानं** श्रेष्ठरूपम् । भावनिरूप्यत्वात् तज्ज्ञानाधीनज्ञानत्वादित्यर्थः । एतदेवात्राचार्याणां प्राधान्यं विवक्षितमित्याशयः । अत एव टीकायां पूर्वं ''अभावप्रतीतिर्भावप्रतीत्यधीना नियमेनेति प्राधान्या''दित्याद्युक्तम् । ननु तथापि तत्क्रमेणैव शृङ्गग्राहिकया निर्देष्टव्यम् । तत्कथं वैपरीत्यमित्यत आह ॥ **तथापीति** ॥ प्राधान्यक्रमस्य श्रेष्ठत्वरूपप्राधान्यक्रमस्य । समस्तश इत्यस्य कृत्यं वक्तुं दूषणसौकर्याय रामानुजमतमनुवदति ॥ **एके त्विति** ॥ **व्यष्टयः** मुक्ताः । **समष्टयः** संसारिणः । न हि समस्तश इत्युक्तिमात्रं दूषणमित्यत आह ॥ **अत्र चेति** ॥ **अत्र च** संकर्षणादीनां नित्यादुःखत्वाभावे, दुःखस्पृष्टत्वे चेत्यर्थः । आगमेत्यादिसामान्योक्तौ आगमस्यागमयोरागमानामिति च संभवविग्रहकत्वेन तावन्मात्रप्रतीतिः स्यात् । अतः सा मा हि भूदित्येतदर्थं समासतोऽनुक्त्वाऽऽगमानां प्रामाण्यमिति व्यासेन निर्दिदेश । ते च रमेतरविधिशेषाद्यशेषस्य दुःखस्पृष्टत्वे

**निर्दुःखो हि हरिर्नित्यं श्रीश्चान्ये दुःखभोगिनः ।**
**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**ब्रह्मा शिवः सुरेशाद्याः शरीरक्षरणात्क्षराः ।**
**लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः ।**
**ब्रह्मशेषसुपर्णेशशक्रसूर्यगुहादयः ।**
**सर्वे क्षरा अक्षरा तु श्रीरेका तत्परो हरिः ।**
**या मारुताद्गर्भमधत्त पूर्वं शेषं सुपर्णं गिरिशं सुरेन्द्रम् ।**
**नित्यादुःखा रमा स्त्रीषु पुरुषेषु हरिस्तथा ।**
**तदन्यच्चेतनं सर्वं दुःखस्पृष्टं नराधिप ।**

इति पद्मपुराण-गीता-श्रुति-स्कान्दपुराणगतभिन्नप्रकरणगतवाक्यद्वयं चेति क्रमादागमानां **प्रामाण्यं** प्रमाणत्वम् । एतद्रूपप्रमाणान्येतदर्थवेदकानि वर्तंत इति यावत् ।

दुःखस्पृष्टचेतनस्यावान्तरप्रभेदवत्वे, दुःखास्पृष्टस्य च निर्भेदत्वे बाधकाभावेन ''दुःखसंस्था इति द्विधे''ति धाप्रत्ययोदुःखस्पृष्टमात्रप्रभेदसूचक इत्याह ॥ **अत एवेति** ॥ दुःखसंस्था इति द्विधेत्यत्र पूर्वं ''दुःखस्पृष्ट''मित्युक्तत्वेनानुवादेनानुकृत तदाकारेण भवितव्यम् । तत्कथं ''स्पृष्टदुःखा'' इत्यनुवाद इत्याशङ्कायाः आहिताग्न्यादिगणनिवेशनेनास्य विशेषणविशेष्यभावस्य कामगामित्वेन स सम्भवतीति समाधिरवधेयः । यद्वा दुःखस्पृष्टाः स्पृष्टदुःखा इति निर्देश वैचित्र्येणेषदनीषद्दुःख तदात्म कत्वादिनाऽधिकारिणां वैचित्र्यमसूचयद्भगवान्भाष्यकृदिति सन्तोष्टव्यम् ।

**(पां.टि.) अनयोरिति** । दुःखस्पृष्टतदस्पृष्टयोः इत्यर्थः ॥ **अभावस्य भावनिरूप्यत्वादिति** । प्रतियोगिज्ञानाधीनज्ञानत्वादित्यर्थः । तेन 'घटाभावाभावस्य घटाभावनिरूप्यत्वेऽपि भावनिरूप्यत्वाभावात्, न इदं नियामकम् इति चोद्यानवकाशः इति ध्येयम् ।

ननु एवमुद्देशक्रमानुसारेण आदौ दुःखास्पृष्टस्य निर्देष्टव्यत्वात्, दुःखस्पृष्टस्य आदौ निर्देशः अनुपपन्नः इत्यत आह **तथापीति** । न च एवम् प्राधान्यक्रमस्य मुख्यत्वे प्रथममुद्देशोऽपि तथा किं न कृतः । तथात्वे पूर्वोत्तरग्रन्थयोः एकप्रकारत्वलाभसम्भवात्' इति वाच्यम् । निरूपकज्ञानं विना निरूप्यस्य ज्ञातुमशक्यत्वात् । न च एवम् निर्देशोऽपि तथैव स्यात् इति वाच्यम् । उद्देशेन उभयोर्ज्ञाने सति निर्देशप्राधान्यक्रमस्यैव आदर्तुमुचितत्वात् इति भावः ॥

अन्ये समस्तशः इति रमाव्यतिरिक्तानां चेतनाचेतनरूपसर्वेषामपि स्पृष्टदुःखत्वम् उच्यते इति प्रतीतिनिरासाय आह **अन्ये चेतना इति** । चेतन-

विभागस्य प्रकृतत्वेन, चेतनानामेव अत्र ग्रहीतुं योग्यत्वादिति भावः ॥ व्यष्टिसमष्टिभेदेनेति । **व्यष्टयः** मुक्ताः, **समष्टयः** संसारिणः इति विवेकः । **आगमानामिति ।**

**दुःखासम्पीडितत्वात्तु मध्यमो वायुरुच्यते ।**
**दुःखस्य योगतो भोगाद्रुद्रवीन्द्रादयोऽधमाः ।**

इत्यादीनामित्यर्थः । अत एव इत्यस्यैव विवरणम् 'दुःखास्पृष्ट-प्रभेदाभावादेव' इति । गरुडादीनां दुःखास्पृष्टत्वे हि दुःखास्पृष्टेऽपि प्रभेदः स्यात् । न च एवम्, तस्य 'समस्तशः' इत्यनेन निरस्तत्वादित्यर्थः ।

धाप्रत्यय इति । 'धा' प्रत्ययस्य एधाचो धाल्भावः । यथा च प्रकार-द्वैविध्योक्तिः सत्यपवादे तद्विषयान्ये अवान्तरभेदसूचनेनापि उपपन्ना न अपवादविषये अवान्तरभेदं सूचयति, तथा उपपादितमधस्तात् ।

**(का. टि.)** ननु प्राधान्यक्रमेण दुःखास्पृष्टस्यैव प्रथममुद्देशः कार्य इत्या शङ्कते ॥ **यद्यपीति ॥ अनयो**र्दुःखस्पृष्टतदस्पृष्टयोर्मध्ये । अत्र निरूपक-क्रमेणोद्देश इति समाधत्ते ॥ **तथापीति ॥ अभावस्य** दुःखास्पृष्टत्वस्य दुःखस्पृष्टत्वरूपभावनिरूप्यत्वाद्भावाभावज्ञानयोः पौर्वापर्यनियमात्प्रथमं भावोद्देश इति भावः ।

ननु प्राधान्यक्रमस्य मुख्यत्वात्तदनुसारेणोद्देश एव युक्तः । न च भावज्ञानं विना कथमभावज्ञानमिति वाच्यम् । दुःखास्पृष्टपदघटकदुःखस्पृष्टपदेनैव भावज्ञानसम्भवात् । न हि दुःखास्पृष्टमित्येतदबोधकमिष्यत इति चेत्सत्यम् । तथापि दुःखस्पृष्टत्वस्य दुःखास्पृष्टत्वनिरूपकत्वं ज्ञापयितुमेव प्रथमोद्देशः कृतः । अन्यथा दुःखस्पृष्टतदस्पृष्टशब्दयोर्नदीवृध्यादिशब्दवत्संज्ञामात्रत्व शङ्का स्यात् । अत एव दुःखास्पृष्टमिति स्पृष्टमनुद्दिश्य तदस्पृष्टमित्युद्देशः कृतः । अन्यथा दुःखस्पृष्टशब्दः संज्ञैव । दुःखास्पृष्टशब्दस्तु तदन्यार्थक इति शङ्कापत्तेः । यथोद्देशे तु तच्छब्दस्य दुःखपदार्थपरामर्शकत्वानुरोधेन

दुःखस्पृष्टशब्दस्य यौगिकत्वलाभात् । न च प्राधान्यज्ञापनाय दुःखास्पृष्टस्यैव प्रथमोद्देशः किं न कृत इति वाच्यम् । तस्योत्तरमूलेन ज्ञापनात् । न चैवमुत्तरमूले नित्यादुःखा स्पृष्टदुःखाः इत्यर्थानुवादादेवोद्देशस्य संज्ञामात्रत्व शङ्कानिराससम्भवाद्व्यर्थं निरूपकक्रमानुसरणमिति वाच्यम् । तस्य फलितार्थानुवादकत्वेन शब्दार्थाबोधकत्वात् । फलितार्थानुवादान्यथानुपपत्त्यैव शब्दार्थकल्पने तु प्रयासगौरवमिति सार्थकं निरूपकक्रमानुसरणम् ।

प्रकान्तक्रमपरित्यागबीजं दर्शयन्नुत्तरमूलमवतारयति ॥ **तथापीति** ॥ मुख्यत्वं च क्रमान्तरादवश्यज्ञेयत्वेन ज्ञेयम् ।

जडस्य दुःखस्पृष्टत्वायोगादाह ॥ **चेतना इति** ॥ **व्यष्टीति** ॥ मुक्तामुक्तभेदेनेत्यर्थः ॥ **आगमानामिति** ॥

**न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ।**
**निर्दुःखो हि हरिर्नित्यं श्रीश्चान्ये दुःखभागिनः ।**
**दुःखासम्पीडितत्वात्तु मध्यमो वायुरुच्यते ।**
**दुःखस्य योगतो भागाद्रुद्रवीन्द्रादयोऽधमाः ॥**

इत्याद्यागमानामित्यर्थः । **अत एव** रमातिरिक्तानां सामस्त्येन दुःखस्पृष्टत्वादेव दुःखास्पृष्टे परतन्त्रचेतने भेदाभावः । ततश्च दुःखस्पृष्टानां प्रभेदवत्त्वाभिप्रायेणैव द्वेधैवेति धाल्प्रत्यययोग इत्यर्थः । अन्यथा 'द्वे चेतने' इत्यवक्ष्यदिति भावः । अत एवेत्यस्याभावादित्यन्तं विवरणमित्यप्याहुः ।

स्पृष्टदुःखचेतनविभागस्तल्लक्षणं च

(टी.) अत एव तद्विभागमाह

**स्पृष्टदुःखा विमुक्ताश्च दुःखसंस्था इति द्विधा ।**

**विमुक्ता दुःखात् । दुःखसंस्था वर्तमानदुःखाः । चशब्दो दुःखसंस्था इत्यतः परं योज्यः । अत्र प्राधान्यक्रमेणोद्देशः ।**

**(रा.टि.) ॥ अत एवेति ॥** धाप्रत्ययेऽवान्तरभेदस्य सूचनादेवेत्यर्थः ॥

**(श्री.टि.) अत एव तद्विभागमिति ।** धाप्रत्ययेन दुःखस्पृष्टेष्वान्तर-भेदस्य ज्ञापितत्वादेव । तज्जिज्ञासायां तद्विभागमाहेत्यर्थः । विमुक्ताश्चेत्यत्र विमुक्तशब्देन रमाया अपि प्राप्तिं परिहर्तुमाह ॥ **विमुक्ताः दुःखादिति ।** तथा च दुःखध्वंसवन्त इत्यर्थः । विनामपि पूर्वं दुःखसंस्थत्वादाह ॥

**वर्तमानदुःखा इति ।** एते एवानयोर्लक्षणे । एवमुत्तरत्रापि संज्ञानिरुक्त्यैव लक्षणं लभ्यत इति द्रष्टव्यम् ॥ **योज्य इति ।** विमुक्ता दुःख संस्थाश्चेति योज्य इत्यर्थः ॥ **प्राधान्यक्रमेणेति ।** दुःखमुक्तदुःखसंस्थयोर्मध्ये दुःख-मुक्तानां प्राधान्यादित्यर्थः ।

**(स. टि.)** विमुक्ता इत्यस्यावधिमाह ॥ **दुःखादिति ॥** दुःखपदं च तत्कारणमविद्याद्युपलक्षयत्सुषुप्तव्यावर्तकम् । दुःखस्पृष्टा इति विभाग-योग्योक्तिः । ते च विमुक्ता दुःखसंस्था इति द्विधेत्यन्वयः । दुःखसंस्था इत्यत्र दुःखेषु सम्यक् तिष्ठन्तीति दुःखसंस्था इति विग्रहो न हि सुग्रहः । जीवानामेव दुःखाधिकरणत्वेन दुःखस्य तदधिकरणत्वानौचित्यादित्या-शङ्क्य, सम्यक् स्थितिः संस्था, दुःखस्य संस्था येषु ते दुःखसंस्थाः । आतश्चोपसर्ग इत्यङ् । वर्तमानदुःखा इति । अत्रापि पूर्ववद्दुःखकारणेन सुप्तसंग्रहोऽपि भवति । वर्तमानदुःखपदेन दुःखप्रागभाव एव विवक्षित इत्याहुः । यथाश्रुतं च शब्दान्वये दुःखसंस्थाः स्पृष्टदुःखा विमुक्ताश्चेति द्विधेति विभागोऽवगतो भवेत् । विमुक्ताश्च दुःखस्पृष्टा दुःख संस्था इति वा भवेत् । न चेष्टापत्तिः । पूर्वं दुःखस्पृष्टप्रभेद प्रसक्तिविरोधापत्तेरित्यतो भिन्नक्रमेण चशब्दान्वयमाह ॥ **चशब्द इति ॥** ततश्च दुःखस्पृष्टा विभाग-योग्याः विमुक्ता दुःखसंस्थाश्चेति द्विधेति तद्विभागोक्तिरिति मन्तव्यम् । इत्यतःपरं एतदुपरि सम्बन्धनीय इत्यर्थः । ननूत्तरत्र "दुःखसंस्था मुक्ति-योग्या" इति भणनात्तदानुगुण्येन पूर्वमपि स्पृष्ट दुःखा दुःखसंस्था विमुक्ता

इति वा । यथापूर्वन्यासं ''देवर्षिपित्रि''ति भेदो वाऽऽदौ निर्देश्यः । कथमनानुगुण्येन निरूपणमित्यतो निमित्तमाह ॥ **अत्रेति** ॥ प्राधान्यक्रमेण उत्कृष्टत्वक्रमेण ।

**(पां. टि.)** अत एव आह **अत एवेति** । अपवादाभावेन दुःखस्पष्टावान्तरभेदस्य प्रकारद्वित्वोक्त्या सूचितत्वात् एव इत्यर्थः ॥ मूले विमुक्ताः इत्यस्य संसारात् मुक्ताः इत्यर्थकत्वे तमः प्राप्तानाम् अपि संसारात् मुक्तत्वेन तेषामपि अत्रैव प्राप्तौ 'ते च प्राप्तान्धतमसः' इत्युत्तरग्रन्थवैयर्थ्यमित्यतः व्याचष्टे **विमुक्ता दुःखादिति** । तमःप्राप्तानां दुःखविमुक्तत्वाभावात् न तेषामत्र ग्रहणमिति न उत्तरग्रन्थवैयर्थ्यम् । इति भावः । 'दुःखसंस्थाः' इति मूलं दुःखे, संस्थाः वर्तमानाः' इति भाति । तदनुपपन्नम् । जीवानामेव दुःखाधिकरणत्वेन दुःखाऽऽधेयत्वाभावात् इत्यतः तद्व्याचष्टे **दुःखसंस्था इति** ॥ 'सम्यक् तिष्ठति' इति संस्थम्=वर्तमानमिति यावत् । संस्थं दुःखं येषां ते ॥ 'वाऽऽहिताग्न्यादिषु' इति विशेषणस्य परत्वात् । तेन 'दुःखसंस्थाः' इति मूलस्य वर्तमानदुःखाः इति व्याख्याने न उक्तानुपपत्तिः इत्यभिप्रायः । न च सुषुप्त्यवस्थापन्नेषु अव्याप्तिः । तत्रापि शरीरेन्द्रियादिरूपस्य दुःखस्य वर्तमानत्वादित्याहुः । वर्तमानदुःखपदेन दुःखप्रागभाव एव विवक्षितः इत्यपि आहुः ॥ स्पृष्टदुःखत्वेन विमुक्तत्वेन च दुःखसंस्थानामयं विभागः इत्याभाति । तत् प्रकृतानुपयुक्तम् । दुःखस्पृष्टानां भेदस्य प्रक्रान्तत्वात् । इत्यतः न अत्र यथास्थितः चशब्दः किन्तु भिन्नक्रमः इत्यभिप्रेत्य आह **चशब्द** इति । दुःखसंस्थाः इत्यतः परं दुःखसंस्थाः इत्येतदनन्तरम्, योज्यः ॥ ननु अत्र मूले दुःखसंस्थानां प्रथमग्रहणं भवेत्, न मुक्तानाम् । अनुपदमेव दुःखसंस्थप्रभेदकथनानन्तरं मुक्तप्रभेदकथनात् । तत् कथं मुक्तानामादौ निर्देशः इत्यत आह **अत्रेति** । तर्हि प्राधान्यक्रमानुसारेण एव प्रथमं मुक्तभेदः कथनीयः इत्येतत्तु अनुपदमेव आशङ्क्य निराकरिष्यते इत्यवधेयम् ।

(का.टि.) ॥ **अत एवेति** ॥ दुःखस्पृष्टापेक्षया धाल्प्रत्ययप्रयोगादेवेत्यर्थः । निगडमुक्तवारणायाह ॥ **दुःखादिति** ॥ दुःखमुक्तत्वस्य सुषुप्त्यादिसाधारण्यादात्यन्तिकदुःखनिवृत्तिलाभाय विशब्दः । आत्यन्तिकत्वं च दुःखप्रागभावानवच्छिन्नत्वम् । तथा च दुःखप्रागभावानवच्छिन्नदुःखाभावविशिष्टत्वं दुःखविमुक्तत्वमिति निष्कर्षः । दुःखवृत्तित्वरूपदुःखसंस्थत्वस्य जीवेष्वसम्भवादाह ॥ **वर्तमानदुःखा इति** ॥ ननु दःखविमुक्तानामपि कदाचिद्वर्तमानदुःखत्वात्कथमयं विभागः । विभिन्नदेशयोरेव विभाजकत्वदिति चेन्न । समानकालविभिन्नदेशयोरिव विभिन्नकालसमानदेशयोरपि धर्मयोर्विभाजकत्वे बाधकाभावात् । समानदेशयोः परस्परधर्मिव्यावर्तकत्वाभावत्कथं विभाजकत्वमिति चेन्न । परस्परोपलक्षितधर्मिस्वरूपव्यावर्तकत्वाभावेऽपि परस्परविशिष्टव्यावर्तकत्वेन विभाजकत्वोपपत्तेः । अत एवायं विशिष्टविभाग इति गीयते । नन्वेवं सुप्तिविशिष्टानामुभयत्राप्रवेशात् त्रैविध्यापत्तिरिति चेन्न । दुःखपदस्य दुःखप्रागभावपरत्वादिति केचित् । दुःखहेत्वविद्यापरत्वादित्यन्ये । वस्तुतस्तु एतत्कल्पप्रागभावानधिकरणकालवृत्तिदुःखोपलक्षितत्वं वर्तमानदुःखत्वम् । सृज्यजीव सङ्ग्रहायैतत्कल्पवृत्तित्वमुपेक्षितम् । तेषामेतत्कल्पीयदुःखशून्यत्वेऽपि एतत् कल्पप्रागभावानधिकरणीभूतोत्तरकल्पीयदुःखवत्वात्तत्सङ्ग्रहः । सुप्तानामपि दुःखोपलक्षितत्वान्नोक्तदोषः । न च तादृशदुःखोपलक्षितत्वस्य दुःखविमुक्त साधारण्यात्साङ्कर्यमिति वाच्यम् । प्राक्कल्पीयमुक्तानामेव दुःखविमुक्तपदेन ग्रहणात् । न चैवं दुःखविमुक्तत्वस्यैतत्कल्पीयमुक्तेष्वतिव्याप्तिरिति वाच्यम् । एतत्कल्पीयदुःखासमानाधिकरणदुःखध्वंसवत्वरूपविमुक्तत्वस्य विवक्षितत्वात् ।

न चैवं सृज्यजीवेष्वतिव्याप्तिः । तेषामेतत्कल्पीयदुःखासमानाधिकरणोत्तरकल्पीयदुःखध्वंसवत्वादिति वाच्यम् । पूर्वकल्पीयत्वेन दुःखस्यैतत्कल्पीयत्वेन वा दुःखध्वंसस्य विशेषणीयत्वात् । अत एव ध्वंसपद-

मप्यर्थवत् । दुःखाभावमात्रोपादाने दुःखप्रागभावमादाय सृज्येष्वतिव्याप्तेः । एवं च साङ्कर्याभावात्तमोयोग्यविभागग्रन्थवत्स्वरूपविभागपर एवायं ग्रन्थ इत्यवधेयम् । **विमुक्ताश्चेति** चशब्दस्य स्पृष्टदुःखसमुच्चायकत्वप्रतीतिनिरासायाह ॥ **चशब्द इति** ॥ तथाचोक्तसमुच्चायकेनानेन विवक्षितस्य विमुक्तदुःखसंस्थसमुच्चयस्य लाभ इति भावः । यद्यपि तत्र चान्यत्र च प्रसिद्धानामित्यादौ चशब्दस्य वक्ष्यमाणसमुच्चायकत्वमप्यस्ति तथाप्युक्तसमुच्चायकशब्दान्तरसमभिव्याहृतस्यैव तथात्वमित्याशयेन दुःखसंस्थसमुच्चायक इत्यनुक्त्या दुःखसंस्था इत्यतः परं योज्य इत्युक्तम् । मुक्तानां प्रथमोद्देशे नियामकमाह ॥ **अत्र चेति** ॥ बद्धमुक्तयोर्मुक्तस्य प्राधान्यं प्रसिद्धमेवेति भावः ।

### दुःखसंस्थचेतनविभागस्तल्लक्षणं च

**(टी.) दुःखसंस्थानां प्रभेदमाह**

## दुःखसंस्था मुक्तियोग्या अयोग्या इति च द्विधा ॥ ४ ॥

**अयोग्या मुक्तेः । अयोग्या इत्यतः परं चशब्दो ज्ञातव्यः । अत्रापि तदेवोद्देशक्रमे निमित्तम् । ननु च प्राधान्याद्विमुक्तभेदः प्रथमं वक्तव्यः । सत्यं, योग्यायोग्यभेदस्य दुःखसंस्थेष्वेव भावात्तदभिधानानन्तरं मुक्तियोग्यभेदकथनस्य सौकर्यात्क्रमोल्लङ्घनम् ।**

(रा.टि.) **अत्रापि तदेवेति** ॥ प्राधान्यमेवेत्यर्थः ॥ **दुःखसंस्थेष्वेवेति** ॥ न तु मुक्तेष्विति भावः । योग्यतायाः स्वभावत्वेन मुक्तेष्वपि मुक्तियोग्यतायाः सत्वान्मुक्तियोग्यभेदकथनस्येत्युक्तावविरोधः । यद्वा **एवं विमुक्तियोग्या** इत्येतदभिप्रायमिदम् ।

(श्री.टि.) ननुपूर्वं दुःखसंस्थानां द्वैविध्यस्यानुक्तत्वेन इति च द्विधेति द्वैविध्यसमुच्चयः कथमित्यत आह ॥ **अयोग्या इत्यतः परमिति** । अयोग्या-

श्चेतीत्यर्थः । तदेव प्राधान्यमेव । मुक्तियोग्यतदयोग्ययोर्मध्ये मुक्तियोग्यानां प्राधान्यात्त एवादौ निर्दिष्टा इत्यर्थः ।। **ननु चेति ।** ''स्पृष्टदुःखाविमुक्ताश्च दुःखसंस्थाश्चे''ति प्राधान्यक्रमेण विमुक्तानां प्रथममुद्दिष्टत्वात्तदनुसारेण विमुक्तानां प्रभेद एवादौ वक्तव्यः । तमनुक्त्वा दुःखसंस्थामुक्तियोग्या इति अनन्तरोद्दिष्टदुःखसंस्थानां आदौ विभाग कथने किं निमित्तमित्यर्थः । **तदभिधानानन्तरमिति** दुःखसंस्थानां योग्यायोग्यभेदकथनानन्तरमित्यर्थः । अयं भावः । यदिदेवर्ष्यादि भेदेन पञ्चधा विमुक्तिभेदमादावभिधाय पश्चादुःखसंस्थानां योग्यायोग्यप्रभेदमुक्त्वा मुक्तियोग्यापुनर्देवर्ष्यादिभेदेन पञ्चविधत्वमुच्येत । तदोक्तिगौरवम् । यदि तु दुःख संस्थानां योग्यायोग्य-विभागकथनानन्तरं विमुक्तानां पञ्चविधत्वमुक्त्वा एवं विमुक्तियोग्याश्चेति मुक्तियोग्येषु तदतिदिश्यते तदोक्तिलाघवमिति । ननु कथमेवं अतिदेष्टुं शक्यम् । विमुक्तानां पञ्चविधत्वकथनानन्तरं विमुक्तानामपि दुःखसंस्थवत् योग्यायोग्यप्रभेदवत्त्वे मुक्ताः द्विविधाः । योग्या अयोग्याश्चेति तत्कथनस्यै-वोचितत्वेन मुक्तानां पञ्चविधत्वकथनानन्तरं एवं विमुक्तियोग्यश्चेत्यति-देशानवकाशात् । तथा च मुक्तानां पञ्चविधत्व कथनानन्तरं मुक्तानां योग्यायोग्यविभागमुक्त्वाऽनन्तरमेवं विमुक्तियोग्याश्चेत्यतिदेशात् गौरव-मेवेत्यत उक्तम् ।। **योग्यायोग्यभेदस्य दुःखसंस्थेष्वेव भावादिति ।** तथा च मुक्तेषु दुःखसंस्थवत् योग्यायोग्यभेदस्य भावेन विमुक्तानां देवर्ष्यादिभेदेन विभाग कथनानन्तरमेवं विमुक्तियोग्याश्चेत्यति देशो युक्त एवेत्युक्ति-लाघवमुपपन्नमिति भावः ।

**(स.टि.)** अयोग्याः पूर्वप्रकृतत्वान्मुक्तेरिति शेषः । दुःखसंस्था इति मूले ''अयोग्या इति च द्विधे''तीतिशब्दानन्तरं चशब्दः श्रूयते । तत्रैव तस्यान्वये पूर्वं दुःखसंस्थविभागः कथितस्तत्रैव पुनरयमेको विभाग इति प्रतीतिः स्यात् । न च तद्विभागः कथित इति तस्य विहितस्थलेऽन्वयं दर्शयन्व्याचष्टे ।। **अतः परञ्चशब्द इति ।।** ज्ञातव्यः अयोग्याश्चेत्यनेन

योग्यान्वयो ज्ञेय इत्यर्थः । मुक्तियोग्या अयोग्या इत्येवं निर्देशे पूर्वोक्तं निमित्तं स्मारयति ॥ **अत्रापीति ॥ तदेव** प्राधान्यमेव । यदि प्रधानत्वं प्राथम्ये निमित्तं तर्हि विमुक्तभेद आदावावेदनीयः । स कुतो नावेदितोऽत्रेति शङ्कते ॥ **नन्विति ॥** अर्धाङ्गीकारेण परिहरति ॥ **सत्यमिति ॥** तथापीत्यध्याहारः । **योग्यायोग्यभेदस्य** मुक्तियोग्यतदयोग्यविभागस्य । दुःखसंस्थप्रभेदत्वेन तदभिधानानन्तरं दुःखसंस्थविभागाभिधानानन्तरं मुक्तियोग्यविभागकथनं सुशकमिति सौकर्यार्थं प्राधान्यक्रमोल्लङ्घनम् । अन्यथा चैवमित्यतिदेशायोगो गौरवं च स्यादिति भावः ।

**(पां.टि.)** दुःखसंस्थाः इति मूले अयोग्या इति च द्विधा इत्यत्र इतिशब्दानन्तरं चशब्दः श्रूयते । तेन न केवलं पूर्वोक्तरीत्या दुःखसंस्थाः द्विविधाः, 'मुक्तियोग्याः अयोग्या' इति च द्विधा'' इति द्वैविध्यसमुच्चयः क्रियते इति भाति । न च तद्युज्यते । पूर्वं दुःखसंस्थानां द्वैविध्यस्य अनुक्तत्वेन द्वैविध्यसमुच्चयानुपपत्तेः इत्यत आह **अयोग्या इति ।** तथा च 'मुक्तियोग्याः अयोग्याश्च इति दुःखसंस्थाः द्विविधाः' इत्यर्थलाभात् न उक्तदोषः इति भावः ॥ **अत्रापीति ।** अयोग्यापेक्षया मुक्तियोग्यानाञ्चादौ निर्देशेऽपि प्राधान्यमेव अभिमतमित्यर्थः । यद्यपि अत्र अभावस्य भावनिरूप्यत्वमपि मुक्तियोग्यानामादौ निर्देशे निमित्तम् इत्यपि वक्तुं शक्यते इति प्राधान्यम् एव इति अवधारणमयुक्तम् इत्याभाति तथाऽपि न अत्र एव शब्देन अन्यनिमित्तं निषिध्यते, किन्तु 'किं मतान्तरगवेषणया? प्राधान्यमेव सम्भवति' इत्येवं बोध्यते इत्यदोषः ॥ **सत्यमिति ।** यदि मुक्तभेदं देवर्ष्यादिभेदेन आदौ अभिधाय पश्चात् दुःखसंस्थानां योग्यायोग्यविभागमुक्त्वा मुक्तियोग्यानामपि देवर्ष्यादिभेदेन पञ्चविधत्वमुच्येत, तदा उक्तिगौरवम् । यदि तु दुःख संस्थानां योग्यायोग्यविभागान्तरं विमुक्तानां पञ्चविधत्वमुक्त्वा मुक्तियोग्येषु एवं विमुक्तियोग्याश्च' इति तत् अतिदिश्येत, तदा उक्तिलाघवमिति ।

ननु न एवम् अतिदेष्टुं शक्यम् । विमुक्तानां पञ्चविधत्वकथनानन्तरं

तेषामपि दुःखसंस्थवत् योग्यायोग्यप्रभेदवत्त्वेन तत्कथनस्यैव उचितत्वेन, तदनन्तरमेव अतिदेशावकाशात् । तत्कथनानन्तरं च अतिदेशे गौरवम् एव इत्यतः, स्यादेवम् यदि दुःखसंस्थवत् मुक्तानामपि योग्यायोग्यभेदवत्त्वं स्यात् । न च एवम् । अतः मुक्तभेदकथनानन्तरमेव अतिदेशापत्तेः लाघवमेव इत्याह **योग्येति** । यद्वा मुक्तियोग्यानां दुःखसंस्थप्रभेदतया दुःखसंस्थविभागकथनेन मुक्तियोग्यानां ज्ञाने सति 'देवर्षिः' इत्यादिना मुक्तामुक्तदेवर्ष्यादिभेदस्य 'एवं विमुक्तियोग्याश्च' इति मुक्तियोग्येषु अतिदेशेन कथनं सुकरं भवति । प्राधान्यमनुसृत्य विमुक्तभेदस्य प्रथममुक्तौ तु, दुःखसंस्थविभागस्थमुक्तियोग्याज्ञानेन 'एवं विमुक्तियोग्याश्च' इत्यति देशायोगेन योग्यप्रभेदकथनं सुकरं न स्यात् । प्राधान्यात् विमुक्तभेदकथनानन्तरं दुःखसंस्थान् विभज्य तत्प्रभेदानाम् मुक्तियोग्यानां 'देवर्षिपितृपनरा इति योग्यास्तु पञ्चधा' इति विभागोपदेशः दुष्करः स्यात् । अतः निर्देशसौकर्यात् तत्क्रमोल्लङ्घनमित्यर्थः । यद्यपि प्राधान्येन विमुक्तभेदकथनानन्तरं दुःखसंस्थान् विभज्य तत्प्रभेदविमुक्तियोग्यानां 'योग्याः विमुक्तवत् भिन्नाः' इति अतिदेशः शक्यते कर्तुम्, तथाऽपि 'एवं विमुक्तियोग्याश्च' इत्यनेनैव विभागविशेषातिदेशः सिध्यति'' इत्यभिप्रायकः अयं ग्रन्थः । अत एव वक्ष्यति 'देवर्ष्यादिभेदेनेत्यस्यानुकर्षणार्थश्चकारः' इति ।

**(का.टि.)** अत्र कचिदयोग्यत्वस्य मुक्तियोग्येष्वपि सम्भवात्कचिदप्ययोग्यत्वस्य तमोयोग्येष्वप्यसम्भवादाह ॥ **अयोग्या मुक्तेरिति** ॥ अत्र मुक्तियोग्यत्वं मुक्तिप्रयोजकदृढभक्त्यादिरूपत्वं, अतद्रूपत्वं तद्विरोधिद्वेषादि रूपत्वं वा मुक्त्ययोग्यत्वमिति ध्येयम् । अत्र चशब्दस्य द्वैविध्यान्तरसमुच्चायकत्वायोगादाह ॥ **अयोग्या इत्यतः परं इति** ॥ **अत्रापीति** ॥ दुःखसंस्थविभागेऽपि मुक्तियोग्यानां प्रथमोद्देशे प्राधान्यमेव मुख्यं नियामक मित्यर्थः । तेन निरूप्यनिरूपकभावरूपनियामकान्तरसत्वेऽपि नैवकारविरोधः । निरुक्तद्वितीयकल्पे तदभावाच्चेति ध्येयम् ।

॥ **प्राधान्यादिति** ॥ यद्यप्युद्देशक्रमादित्यापि सुवचं तथापि प्राधान्यक्रमस्योद्देशक्रमबाधकत्वेन मुख्यत्वात्स एवोक्तः । समाधत्ते ॥ **सत्यमिति** ॥ विमुक्तानां प्राधान्यमित्येतत्सत्यम् । तथापि विमुक्तभेदकथनाव्यवहितोत्तरं मुक्तियोग्यभेदकथनस्यातिदेशलघवात् क्रमोल्लङ्घनम् । अन्यथा विमुक्तविभागानन्तरं योग्यायोग्यभेदेन दुःखसंस्थान्विभज्य योग्येषु व्यवहितविमुक्तभेदस्य **एवमित्याद्यतिदेशायोगाद्विशिष्य** देवर्ष्यादिभेदेन पञ्चविधत्वस्य कथनीयतया ग्रन्थगौरवं स्यादिति भावः । ननु योग्यायोग्यभेदादिना मुक्तानेव विभज्य दुःखसंस्थेष्वेव तदतिदेशलाघवसम्भवात्कुतः क्रमोल्लङ्घनमित्याशङ्कापरिहारायोक्तम् ॥ **योग्यायोग्येत्यादि** ॥

**मुक्तचेतनविभागस्तल्लक्षणं च**

**(टी.) इदानीं मुक्तानां प्रभेदमाह**

**देवर्षिपितृपनरा इति मुक्तास्तु पञ्चधा ।**

**पान्तीति पाश्चक्रवर्तिनः । नरा मनुष्योत्तमाः । तुशब्दोऽवधारणे । तेन ये मोक्षे तारतम्यं न मन्यन्ते तन्मतं निराचष्टे । गन्धर्वादीनां केषाञ्चिदेष्वेवान्तर्भावात् केषाञ्चिदविवक्षितत्वान्न ग्रन्थान्तरविरोधः ।**

**(रा.टि.)** ॥ **पान्तीति पा इति** ॥ पा रक्षणे, पचाद्यच् आतो लोप इटि चेत्याकारलोपः ॥ **केषाञ्चिदिति** ॥ देवगन्धर्वाणां कर्मजाजानजदेवानां चेत्यर्थः ॥ **केषाञ्चिदिति** ॥ मनुष्यगन्धर्वादीनामित्यर्थः ॥ **ग्रन्थान्तरेति** ॥ तैत्तिरीयादिग्रन्थान्तरेत्यर्थः ।

**(श्री.टि.)** पितृपत्वमेकोपाधिरिति भ्रान्तिं निवारयितुमाह ॥ **पान्तीति पा इति** । तथा च ''पा पालन'' इति धातोः पाःपालकाश्चक्रवर्तिन इत्यर्थः। **अवधारण इति** । इत्येव नान्यथेत्यवधारण इत्यर्थः ॥ **तेनेति** । मुक्ताः देवऋष्यादिभेदेन पञ्चधातरतमभावेन स्थितानान्यथेति वचनेनेत्यर्थः ॥ ये रामानुजाः । ननु गन्धर्वादीनामपि ग्रन्थान्तरे मुक्तेरुक्तत्वात्तेप्यत्र कुतो

नोक्ताः । अतो विभागन्यूनतेत्यत आह ॥ **गन्धर्वादीनामिति** । आदिपदेन अप्सरस्स्त्रीणामपि ग्रहणम् ॥ **एष्वन्तर्भावादिति** । एषु ऋषिपितृपादिषु गन्धर्वाद्यास्तदन्तरा इति वचनादिति भावः ॥ **केषाञ्चिदिति** । असुर-गन्धर्वासुराप्सरस्त्रीणामित्यर्थः । आसुरगन्धर्वा एव न सन्तीति वदतां श्रीमन्महाभारततात्पर्यनिर्णयविरोधः । यथोक्तं भगवत्पादैः ॥ ''कोटित्रयं स निजघान तथासुराणागन्धर्वजन्मभरतेनेति ॥

**(स.टि.)** क्रमप्राप्तत्वेन मुक्तियोग्यविभाग एवोच्यत इति वारयितु-मवतारयति ॥ **इदानीमिति** ॥ दुःखसंस्थविभागानन्तरम् । मूले देवर्षि-पितृपनराः देवाश्च ऋषयश्च पितरश्च पान्तीति पाश्चक्रवर्तिनश्च नरा मनुष्योत्तमाश्च ते तथा । अभ्यर्हितत्वाद्देवशब्दस्यादौ निर्देशः । न च पान्तीति पाश्चक्रवर्तिन इति न भवेत् । आतोऽनुपसर्गे क इत्यनुपसर्गे कर्मण्युपपदे सत्याकारान्ताद्धातोः कप्रत्ययविधानात् । प्रकृत उपपदस्याभावान्न कप्रत्यय-सम्भव इति वाच्यम् । आत इति योगविभागाद्वा मूलविभुजादित्वाङ्गीकारेण कप्रत्यये वा ''अन्येभ्योऽपि दृश्यत'' इति डप्रत्यये वा रूपस्य सूपपाद-त्वात् । पः पातरि समीरेऽर्के पः पुमान्पवने पातरीति पैकविश्वैकाक्षर-निघण्टू । पान्ति रक्षयन्ति प्रजा इति पाश्चक्रवर्तिनः पृथ्वाद्याः । देवादि-साहचर्यान्नायं मनुष्यसामान्यवाची नरशब्दः किन्तु तद्विशेषपर इति व्याख्याति ॥ **मनुष्योत्तमा इति** ॥ शर्मणा नृपत्नीरिति ऋग्भाष्याख्यायां ''नरो देवाः प्रधानपुरुषत्वा''दिति देव ग्रहणवन्मुख्यनयेन मनुष्योत्तमग्रहणं ज्ञेयम् ॥ **तुशब्द इति** ॥ अवधारणे अवधारणरूपार्थे वर्तत इत्यर्थः । तुशब्दस्तु विशेषे स्यात्स्वसिद्धान्तेऽवधारणे इत्यभिधानात् । अवधारण इत्यनन्तरं स च पञ्चधेत्यनेनान्वेतीति शेषः । अवधारणार्थकत्वे लब्धमर्थमाह ॥ **तेनेति** ॥ अवधारणार्थकतुशब्दस्य पञ्चधेत्यनेनान्वयकरणेनेत्यर्थः । परमं साम्यमुपैतीत्यादिश्रुतीनामन्यार्थकत्वस्य स्थितत्वादिति भावः । संसार-दशायां तारतम्योपेते ब्रह्मादौ प्रसिद्ध देवर्ष्यादिशब्दैरेवोद्देशात्तारतम्यमुक्त-प्रायमिति भावः । ननु

**क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।**
**आजानजाः कर्मजाश्च देवा इन्द्रः पुरन्दरः ।**
**रुद्रः सरस्वती वायुर्मुक्ताः शतगुणोत्तराः ।**
**नृपाद्याः शतधृत्यन्ता मुक्तिगा उत्तरोत्तरम् ।**
**गुणैः सर्वैः शतगुणा मोदन्त .......।**

इति ग्रन्थान्तरे गन्धर्वादीनामधिकानामपि श्रवणात्तद्विरोध इत्यत आह ।। **गन्धर्वेत्यादिना ।। एष्वेवान्तर्भावादिति ।** अत्र देवपदेन तात्विकानामिव कर्मजाजानजानामपि देवानां ग्रहणात् । तुम्बुरु प्रमुखशतगन्धर्वाणा-मुर्वश्याद्यप्सरसाश्चाजानदेवेष्वन्तर्भावः । तुम्बुरु प्रमुखा ये च तथो-र्वश्यादिका अपि । आजानदेवास्ते प्रोक्ता इत्युक्तेः । तुम्बुरुप्रमुखेभ्योऽधि-काष्ट गन्धर्वाणां तु कर्मजदेवेष्वन्तर्भावः । कर्मदेव गणा अष्टगन्धर्वा-स्तत्परेशतमित्याद्युक्तेः । तदन्येषाङ्गन्धर्वाणां चात्र विवक्षाभावेन ग्रन्थान्तर-विरोधाभावादित्यर्थः । यद्वा भागवता दौ पूतनाकंसनरकशिशुपालादीनां मुक्तत्वप्रतिपादनात्तेषामत्रा कथनात्कथं न तद्विरोध इत्यत आह ।। **केषाञ्चिद विवक्षितत्वादिति** ।। पूतनादीनां मुक्तत्वेनेदानीमविवक्षितत्वादित्यर्थः ।।

**(पां.टि.)** पितृपत्वमिति कः विभाजकोपाधिः इति भ्रान्तिं निवारयति **पान्तीति ।।** नरशब्दस्य सर्वमनुष्यपरत्वभ्रान्तिवारणाय आह **मनुष्योत्तमा इति ।।** यद्यपि 'देवर्षि' इत्यादिवाक्ये विभागः एव प्रतीयते स्फुटं न तारतम्यम् तथाऽपि संसारदशायां तारतम्योपेते ब्रह्मादौ प्रसिद्ध देवर्षि आदि संज्ञया एव उद्देशात्, तारतम्यमुक्तप्रायमिति भावः ।। ननु पञ्चधा इति अयुक्तम्, गन्धर्वाणाम्, कर्मदेवानाम्, उर्वश्याद्यप्सरसाम्, आजानदेवानां मुक्तप्रभेदत्वस्य

**क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।**
**आजानजाः कर्मजाश्च तत्विकाश्च ।।**

इत्यादिना उक्तत्वात् । अन्यथा बृहद्भाष्यविरोधापातादित्यत आह **गन्धर्वादीनामिति ।** अत्र देवपदेन तात्त्विकानामिव कर्मजानामाजानजानां च देवनामपि ग्रहणात् ।

**तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि ।**
**आजानदेवास्ते प्रोक्ताः .... .....॥**

इत्युक्तेः तुम्बुरु प्रमुख–गन्धर्वाणामुर्वश्यादि अप्सरसां च आजानदेवेषु अन्तर्भावात् । तुम्बुरु प्रमुखेभ्यः अपि उत्तमगन्धर्वाणां च अष्टानां ''कर्मदेव गणा अष्ट गन्धर्वास्तत्परं शतम् । आजानदेवाः इत्युत्त्या कर्मदेवेषु अन्तर्भावात् तदन्येषां च देवगन्धर्वादीनां तारतम्योक्तिपरे अस्मिन् विभागवाक्ये विवक्षाविरहात् न 'क्षितपा' इत्यादिग्रन्थान्तरविरोधः । न हि विभागवाक्यस्य इव अस्यापि न्यूनाधिक सङ्ख्याव्यवच्छेदे तात्पर्यम् । किन्तु 'देवर्ष्यादिभेदेन तारतम्योपेता एव' इत्यत्र एव । न च ग्रन्थान्तरविरोधः अस्ति इति ध्येयम् । अत एव तत्त्वविवेके हि अत्र–

'**.... ....... .... ब्रह्मान्ता उत्तरोत्तरम् ।**
**'मुक्ताः शतगुणाः प्रोक्ताः ...... ..... ॥'**

इति तारतम्यमेव उक्तम् ॥ इदमपि अत्र अपि टीकायां तेन इत्यादिना मोक्षे न तारतम्यम् इति मतनिराकरणपरत्वेन व्याख्यातम् ॥ इति ।

**(का. टि.)** तथापि देवर्ष्यादिभेदेन मुक्तियोग्यान् विभज्य तदतिदेश एव मुक्तेषु किं न कृत इत्यत आह ॥ **इदानीमिति ॥** दुःखसंस्थविभागानन्तर-मित्यर्थः ॥ मुक्तामुक्तभेदेन दुःखस्पृष्टविभागे कृते तदुभयविभागस्यैवाकाङ्क्षितत्वादिति भावः । पितृपत्वमेको विभाजकोपाधिरिति भ्रान्तिनिरासायाह ॥ **पान्तीति ॥** पातृत्वस्य देवादिसाधारण्यान्न विभाजकतेत्यतो विवक्षितार्थमाह ॥ **चक्रवर्तिन इति ॥** देवत्वादिजातिवच्चक्रवर्तित्वजातेरेव विभाजकत्वमिति भावः । सर्वमनुष्याणां मुक्त्ययोगादाह ॥ **मनुष्योत्तमा इति ॥ तेनेति ॥**

यद्यपि पञ्चधैवेत्यवधारणेन मुक्तानामेकजातीयत्वनिरास एव लभ्यते तथापि तारतम्योपपादकत्वेनैव पञ्चविधत्वावधारणात्साम्यनिरासोऽपि सिध्यति । तथा हि 'ब्रह्मान्ता उत्तरोत्तरम् । मुक्ताः शतगुणोद्रिक्ताः' इति तत्वविवेकोक्त मुक्ततारतम्यमनुपपन्नम् । युवा स्यादित्यादिमूलश्रुतौ मनुष्यत्वादिजाति विशिष्टानामेव तारतम्योक्तेः । मुक्तौ च तदपायात्' इति मतं न श्रद्धेयम् । मुक्तानामपि मनुष्यत्वादिजातिविशिष्टत्वेन तारतम्योपपत्तेरिति ।

ननु **पञ्चधे**त्युक्तं गन्दर्वादीनामधिकत्वात् ।

**क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।**
**आजानजाः कर्मजाश्च देवा इन्द्रः पुरन्दरः ॥**
**रुद्रः सरस्वती वायुर्मुक्ताः शतगुणोत्तराः ।**

इत्यादौ तेषामपि मुक्तत्वोक्तेः । अत आह ॥ **गन्धर्वादीनामिति ॥** देवगन्धर्वादीनां देवादिष्वेवान्तर्भावादित्यर्थः । आजानजकर्मजतात्विक-देवगन्धर्वाप्सरःप्रभृतिसाधारणदेवत्वादेरेव विभाजकत्वेन विवक्षितत्वादिति भावः । नन्वेवमसुरगन्धर्वादीनामसङ्ग्रह इत्याशङ्क्योक्तम् ॥ **केषाञ्चिद-विवक्षितत्वादिति ॥** उक्तवचनेऽपि तेषामविवक्षितत्वान्न तद्विरोध इत्यर्थः । अत्र देवाद्यनन्तर्भूताशेषमुक्तानां मनुष्योत्तमेष्वन्तर्भावः । देवादिभिन्न-सच्चेतनमात्रस्य मनुष्योत्तमपदेन विवक्षितत्वादित्यवधेयम् ।

केचित्तु येषां तारतम्यं विशिष्य श्रुत्यादिप्रसिद्धं तेषामत्रैवान्तर्भावा-दन्येषामविवक्षितत्वान्न विरोधः । न चैवं विभागस्य न्यूनता । तत्वविवेकानु-सारेण मुक्तास्तारतम्योपेता एवेत्यर्थे मूलतात्पर्यात् । पञ्चविधत्वं तु तारतम्यस्फुटीकरणायोपलक्षणत्वेनैवोक्तमित्याहुः । यद्यपि मन्दमध्यमोत्तम-त्वेन त्रैविध्याभिधानेऽपि समस्तमुक्तसङ्ग्रहादिसम्भवः । अवान्तरजातीनां विशिष्य वक्तव्यत्वेऽपि देवर्ष्यादिप्रभेदेन मुक्ता बहुधा इत्येव वक्तुमुचितं तथापि 'देवविशेषाः पितरो मनुष्यविशेषाश्चक्रवर्तिनः' इत्यादिमतनिरासाय पञ्चविधत्वाभिधानमिति ।

मुक्तविभागस्य मुक्तियोग्येष्वतिदेशः

(टी.) दुःखसंस्था मुक्तियोग्यायोग्यभेदाद्द्विधा इत्युक्तम् । तत्र मुक्तप्रभेदं योग्येष्वतिदिशति

**एवं विमुक्तियोग्याश्च .......।**

**देवर्ष्यादिभेदेन पञ्चधा इत्यस्यानुकर्षणार्थश्चकारः ।**

**(श्री.टि.) मुक्तप्रभेदमिति ।** मुक्तानां देवर्ष्यादिप्रभेदं प्रकारमित्यर्थः ।

**(स.टि.) इत्युक्तमिति ॥** दुःखसंस्था मुक्तियोग्या अयोग्या इत्यादिना । **मुक्तप्रभेदं** देवर्षीत्यादिरूपम् । **योग्येषु** मुक्तियोग्येषु । चशब्दकृत्यमाह ॥ **देवर्ष्यादीति ॥** अनुकर्षणार्थः । बहुव्रीहिः ।

**(पा.भा.) मुक्तप्रभेदम्** मुक्तप्रभेदप्रकारम् ।

**(का.टि.)** मुक्तियोग्यविभागस्याप्रकृतत्वशङ्का वारयितुमाह ॥ **दुःखसंस्था इति ॥** तत्र द्विधेत्युक्त्या तद्विभागोऽपि सूचित इति भावः । **तत्र** तयोर्मध्ये । योग्येष्विति सम्बन्धः । चशब्दस्यायोग्यसमुच्चायकत्वायोगादाह ॥ **देवर्ष्यादीति ॥** यद्यपि **एव**मित्यस्यैव देवर्ष्यादिभेदेन पञ्चधेत्यर्थकत्वसम्भवः तथापि न तस्य समुच्चयार्थकत्वम् । यथा मुक्तास्तथा मुक्तियोग्या इत्युपमार्थत्वमेवाभिप्रेतम् । अन्यथा चशब्दवैयर्थ्यादिति भावेनानुकर्षः कृतः । यद्वा **एव**मित्यस्य देवर्ष्यादिभेदेनेति व्याख्यानम् । चशब्दात्पञ्चधेत्यनुकर्ष इति व्याख्येयमतो नान्यतरवैयर्थ्यम् । अत एव देवर्ष्यादिभेदेनेत्यर्थानुवाद एव कृतो न तु देवर्षिपितृपनरा इति शब्दानुवाद इत्यवधेयम् ।

मुक्त्ययोग्यचेतनविभागः

(टी.) मुक्त्ययोग्यविभागमाह

**......तमोगाः सृतिसंस्थिताः ॥ ५ ॥**

**इति द्विधा मुक्त्ययोग्याः ...........।**

**तमोगास्तमोयोग्याः । न तु प्राप्ततमसः । वक्ष्यमाणविभागविरोधात् । सृतिसंस्थिताः नित्यसंसारिणः । अयोग्यतातिशयानुसारेणोद्देशः ।**

**(रा.टि.)** ।। **वक्ष्यमाणेति** ।। दैत्येत्यादिवक्ष्यमाणेत्यर्थः ।। **अयोग्यतेति** ।। मुक्तितत्साधनादावयोग्यतातिशयेत्यर्थः ।

**(श्री.वि.)** तमोयोग्याः प्रकीर्तिता इति वक्ष्यमाणमूलानुसारेण तमोगा इत्यस्यार्थमाह ।। **तमोयोग्या इति** । ननु तमोगा इत्यस्य तमसि स्थिताः प्राप्ततमस इति यावदित्येवार्थः कस्मान्न स्यादित्यत आह ।। **न तु प्राप्ततमस इति** । कुत इत्यत आह ।। **वक्ष्यमाणेति** । दैत्यरक्षःपिशाचका इत्यादिना तमोयोग्यानां विभागस्य वक्ष्यमाणत्वेन तद्विरोधप्रसङ्गादित्यर्थः । सृतिसंस्थापेक्षया तमोयोग्यानामादावुद्देशेनिमित्तमाह ।। **अयोग्यतातिशयेति** । नित्य-संसार्यपेक्षया अयोग्यताप्रयुक्तदुःखातिशयानुसारेणेत्यर्थः ।

**(स.टि.)** क्रमप्राप्तमयोग्यविभागमाहेत्याह ।। **मुक्त्ययोग्येति** ।। तमोगा इत्येतदर्हार्थकबाहुलकडान्तमित्यभिप्रेत्याह ।। **तमोगास्तमो योग्या इति** ।। कर्तरि डान्तोऽयं शब्दः किं न स्यादित्यतो विपक्षे बाधकमुप दर्शयंस्त-न्निषेधति ।। **न त्विति** ।। प्राप्ततमसः प्राप्तं तमो यैस्ते ।। **वक्ष्यमाणेति** ।। ते च प्राप्तान्धतमसः सृति संस्था इति द्विधेति वक्ष्यमाणविरोधादित्यर्थः । तत्र सृतिसंस्थानाम् तत्प्रभेदत्वोक्तेरिति भावः । नित्यसंसारिणः मिश्रसुख-दुःखात्मकफलकमिश्रज्ञानाः । विस्तरस्तु नित्यसंसारिलिङ्गभङ्ग विषये नित्योपलब्धिसूत्रभाष्यटीकाटिप्पणीभ्यः, तथा

**नित्योपलब्धि सूत्राच्च भाषणाट्टीकणादपि ।**
**नित्यसंसारिणां लिङ्गभङ्गोऽस्तीति सतां मत् ।।**

इत्यादि वदद्भिः श्रीमत्सत्यप्रियश्रीपाद, श्रीवादिराजश्रीपादादिभिः कृत-ग्रन्थेभ्यः, तथा अस्मत्कृतनमकचमकव्याख्यानतोऽवगन्तव्यः । अत्रापि

पूर्वोद्देशोऽतिशयितमिथ्याज्ञानित्वलक्षणप्राधान्यमेव निमित्तमित्याह ॥ **अयोग्यतेति** ॥ सृतिसंस्थापेक्षयेति शेषः ।

**(पां.टि.)** उत्तरवाक्यम् अवतारयति **मुक्त्ययोग्यविभागमाहेति** ॥

तमोगाः इत्यस्य 'तमसि स्थिताः' इत्यर्थप्रतीतिनिरासाय आह तमोयोग्याः तमसोऽर्हा इति । न तु प्राप्तं अन्धतमः यैः ते तथा– तमोयोग्या इति यावत् । **वक्ष्यमाण**विरोधात् दैत्यरक्षः पिशाचकाः । मर्त्याधमाश्चतुर्धैव तमोयोग्या इत्यनेन उत्तरत्र उच्यमानतमोयोग्यविभागस्य अयोगादित्यर्थः । तमोगाः इत्यनेन प्राप्ततमसः इत्यभिधाने, तमोयोग्यानामनुक्तत्वादुत्तरवाक्येन तद्विभागकथनं न युक्तमिति भावः ।

सृतिसंस्थिताः इत्यस्य 'सृतिस्थाः' इत्यर्थपरिहाराय 'असाधारण्येन व्यपदेशाः भवन्ति' इत्याशयेन **सृतिसंस्थिता इति** । नित्यसंसारिणः नित्यम् सर्वदा, संसारवन्तः सर्वदा संसारे वर्तमानाः इति यावत् ॥

तमोयोग्यानामादौ उद्देशे किं निमित्तम्? इति जिज्ञासायामाह अयोग्यतातिशयेनेति । मुक्त्ययोग्यानाम्, अतिशयः उत्कर्षः, तदनुसारेण, **उद्देशः** तमोयोग्यानामादौ उद्देशः कृतः इत्यर्थः ।

**(का.टि.)** ॥ **तमोयोग्या इति** ॥ तमःप्रापकदृढद्वेषादिरूपा इत्यर्थः ॥ **वक्ष्यमाणेति** ॥ दैत्येत्यादिना वक्ष्यमाणतमोयोग्यविभागस्यानुपपत्तेरित्यर्थः। न च तत्र तमोयोग्यपदस्य प्राप्ततमसपरत्वेनोपपत्तिः शङ्क्या । **ते** चेत्यादिविभागविरोधादिति भावः । नन्वेवं सृतिसंस्थितानामपि तमोयोग्यत्वात्पृथग्ग्रहणानुपपत्तिरत आह ॥ **नित्यसंसारिण इति** ॥ मध्यममनुष्याणां लिङ्गभङ्गानङ्गीकारे नित्यलिङ्गालिङ्गितत्वं नित्यसंसारित्वम् । तदङ्गीकारे तु सुखदुःखाभिव्यञ्जकभक्तिद्वेषादिरूपत्वमेव तत् । 'नित्यावर्तास्तु मध्यमाः' इत्यस्यापि नित्यमिश्रफला इत्यर्थः । प्राप्ताप्राप्तफलत्वेन तेषामविभागस्तु सर्वदा संसारसमानधर्मत्वाभिप्रायेणेति ज्ञेयम् । ननु नित्यसंसार्यपेक्षया

तमोयोग्यानामधमत्वेनाप्राधान्यात्कथं प्रथमोद्देश इत्यत आह ।। **अत्रेति** ।। योग्येषु योग्यतातिशयेनेवायोग्येष्वयोग्यतातिशयेन तमोयोग्यानामेव प्राधान्य सम्भवात्प्रथमोद्देश इत्यर्थः । ननु योग्यत्वाभावरूपायोग्यत्वस्योभयत्र समानत्वात्कथमेकत्रातिशय इति चेन्न । स्वरूपतस्तदभावेऽपि फलतस्तद्भावात् । द्वेषादिरूपायोग्यतायां स्वरूपतोऽप्यतिशयसद्भावाच्च ।

**तमोयोग्यचेतनविभागः**

**(टी.) तमोयोग्यानां प्रभेदमाह**

**.... ..... .............दैत्यरक्षःपिशाचकाः ।**
**मर्त्याधमाश्चतुर्धैव तमोयोग्याः प्रकीर्तिताः ।। ६ ।।**

**मर्त्याधमा इत्यतः परमितिशब्दोऽध्याहार्यः । अप्रसिद्धत्वादस्य भेदस्या श्रद्धेयत्वं निवारयितुमेवशब्दः । प्रकीर्तिता इति अत्राऽगमसम्मतिमाचष्टे । स चान्यत्रोदाहृतो द्रष्टव्यः ।**

**(रा.टि.) ।। स चान्यत्रोदाहृत इति ।।** प्रजा ह तिस्रो अत्यायमीयुरित्यैतरेयभाष्ये । तथा तृतीयस्कन्धे एकादशतात्पर्ये च ।

**जाताऽतिकृष्णा तद्देहाद्दैत्यरक्षःपिशाचकः ।**

इत्युदाहृत इत्यर्थः ।

**(श्री.वि.)** दैत्यादिषु प्रत्येकं चातुर्विध्यान्वयभ्रमं वारयितुमाह ।। **इतिशब्दोऽध्याहार्य इति** । तथा च तमोयोग्याः दैत्यरक्षः पिशाचकाः । मर्त्याधर्माश्चेति चतुर्धेत्युक्त्या दैत्यादीनां प्रत्येकं चतुर्विधत्वभ्रमो निरस्त इति ज्ञातव्यम् ।। **एवशब्द इति** । अवधारणेनाश्रद्धेयत्वं निवारितमिति ज्ञातव्यम् । अप्रसिद्धत्वपरिहाराय प्रकीर्तिता इत्युक्तं तदभिप्रायमाह ।। **प्रकीर्तिता इति** । अत्र तमोयोग्यानामेवं चातुर्विध्ये ।

**(स.टि.)** यथाश्रुतग्रन्थे मर्त्याधमानां चातुर्विध्यं प्रतीयते । न चेष्टन्तत् । उत्तरत्र तद्विभागाकथनात् । दैत्यरक्षःपिशाचका इत्यादीनामन्वयाभावाच्चेत्यतोऽपेक्षितम् पूरयति ।। **मर्त्याधमा इति ।। इतिशब्द इति ।** इतीतिशब्द इतिशब्दः । तस्य च मर्त्याधमा इत्यनेनान्वयो भवतीति मर्त्याधमचतुष्ट्वभ्रमभ्रंश इति ज्ञेयम् । एवकारव्यावर्त्यमाह ।। **अप्रसिद्धत्वादिति ।।** ईषत् प्रसिद्धत्वादित्यर्थः । नञभावेऽनिषेधे च स्वरूपार्थेऽप्यतिक्रमे । ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोरिति विश्वः । तदन्यत्वं तदल्पतेत्यादिश्च । प्रयोगास्तु ''गङ्गामतोयाम्, अनुदरा कन्ये''त्यादयो ज्ञेयाः । यद्वा ''अप्रसिद्धत्वादस्ये''त्यस्य शङ्काग्रन्थत्वात्सामान्यतः प्रसिध्याक्षेपो बोध्यः। कथमेवशब्देन तद्वारणमित्यतोऽस्यागम प्रसिद्धत्वादित्याहेत्याह ।। प्रकीर्तिता इत्यनेनेति ।। संमतिं संवादम् । तर्हि स किं नोदाहृत इत्यतोऽन्यत्रोक्तत्वादत्र पुनस्तद्वचने गौरवं स्यादित्युपरम्यत इत्याह ।। **स चेति ।।** स चेति तच्छब्देन ''आगमसंमति'' मित्यत्र समासे गुणभूतमागमं परामृशति । सात्विका इत्याद्यारभ्य

**मर्त्याधमास्तामसास्तु दैत्यरक्षःपिशाचकाः ।**
**स्वरूपभूतविद्वेषाद्धरौ गच्छन्ति ते तमः ।।**

इत्यादि बृहत्संहितारूपोऽन्यत्र बृहद्भाष्यादावाचार्योदाहृतो द्रष्टव्यः । तामसास्तु मर्त्याधमा दैत्यरक्षःपिशाचका इति संमतिप्रमाणेऽन्वयः ।

**(पां. टि.)** दैत्य इत्यादिमूले दैत्य इत्यादीनां प्रत्येकं चातुर्विध्यम् उच्यते इति भाति, तच्च तमोगानां भेदोक्तेः प्रक्रान्तत्वात् अयुक्तमित्यत आह **मर्त्याधमा इत्यतः परमिति** । यद्वा मर्त्याधमानां चातुर्विध्यम् उच्यते इति भाति । तच्च तमोगानां भेदोक्तेः प्रक्रान्तत्वादयुक्तमित्यत आह **मर्त्याधमा इत्यतःपरमिति** । यद्वा मर्त्याधमानां चातुर्विध्यान्वयभ्रान्तिं वारयति **मर्त्याधमा इत्यतः परमिति ।। अप्रसिद्धत्वादिति ।** प्रसिद्धत्वाभावादित्यर्थः ।।

अत एव उक्तार्थे 'प्रकीर्तिताः' इति आगमप्रसिद्धिः उक्ता इत्याह प्रकीर्तिता इति। अन्यत्र=तत्त्वविवेके।

(का. टि.) दैत्यादीनां प्रत्येकं चातुर्विध्यमुच्यत इति भ्रमनिरासायाह ॥ **तमोयोग्यानामिति** ॥ तमोयोग्याश्चतुर्धेत्यन्वयो न तु प्रत्येकमिति भावः। नन्वेवं दैत्यादेरनन्वय इत्यत आह ॥ **मर्त्याधमा इति** ॥ **अप्रसिद्धत्वादिति** ॥ तन्त्रान्तरासिद्धत्वादित्यर्थः। **अस्य** तमोयोग्याश्रितस्य। अश्रद्धेयत्वमनिश्चित प्रामाण्यकत्वमप्रामाणिकत्वशङ्कामिति यावत्। नन्वेतावतैव कथं तन्निवारण मत आह ॥ **प्रकीर्तिता इति** ॥ **अत्र** मुक्त्ययोग्यप्रभेदविषये। **प्रकीर्तिता** इत्यस्य पूर्वत्रोत्तरत्र च सम्बन्धेन सर्वत्रैवाप्रामाणिकत्वशङ्कानिरास इति भावः। स चागमः

**शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः।**
**एधमानद्विडुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्॥**
**सात्विका राजसाश्चैव तामसास्त्रिविधा जनाः।**
**सात्विकास्तत्र देवाद्या राजसाः सृष्टिगास्तथा॥**
**मर्त्याधमास्तामसास्तु दैत्यरक्षःपिशाचकाः।**
**स्वरूपभूतविद्वेषा अधो गच्छन्ति ते तमः॥**

इत्यादिर्भाष्यादावुदाहृत इत्यर्थः। वीरोऽध्यवसायान्तगामी परमेश्वरः सर्वानुग्रान्दैत्यादीन्दमयन् तद्विरुद्धान्देवादीन् संसारमतिक्रम्य स्वपदं नयन् वेदादिषु श्रूयते। स एव मुक्तामुक्तनियामको मध्यममनुष्यप्रजाः संसार एवावर्तयति। न तु साधनानुष्ठानेऽपि मोचयति। यतः स्वायोग्यप्रयत्ना-देधमानान्द्वेष्टीति श्रुत्यर्थः। अत्र दैत्यादीनामयोग्यतातिशयानुसारेणोद्देश इत्युक्तप्रायम्। मर्त्याधमेभ्यो दैत्यादीनां कुत्सार्थककप्रत्ययेन बहुतरायोग्यत्वं सूचितम्। अत एव तेषां पृथगुक्तिरिति ज्ञेयम्।

### प्रकारान्तरेण तमोयोग्यचेतनविभागः

**(टी.) चतुर्विधा अप्येते प्रत्येकं द्विधा इत्याह**

## ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा ।

**ते च चतुर्विधा अपि । सृतिसंस्थाः संसारे वर्तमाना नाधुनापि तमः प्राप्ताः । योग्यतायाश्चैतन्यस्वभावत्वेन तमोयोग्यानामयं विभागो नानुपपन्नः ।**

**(रा.टि.)** ननु योग्यविभागत्वं प्राप्ततमस्कानामयुक्तम् । फलप्राप्तौ योग्यताया विनाशादित्यत **आह ॥ योग्यताया इति ॥**

**(श्री.टि.)** ननु सहकारिविरहप्रयुक्तकार्याभावरूपायोग्यतावनस्थे कोमल दण्डादौ दृष्टा । एतादृशी च योग्यता सृतिसंस्थेष्वेवास्ति । न तु प्राप्तान्धतमसेषु । तत्र सहकारिणामेव सत्त्वेन तद्विरहप्रयुक्तकार्याभावा-भावात् । अतः प्राप्तान्धतमसानां कथं तमोयोग्यप्रभेदरूपत्वमित्यत आह ॥ **योग्यताया इति ।** सिद्धान्ते योग्यताशक्तिश्च चैतन्यस्वरूपमेव । तथा च चैतन्यस्वरूपमेव योग्यता न पूर्वोक्ता । यथोक्तम् । ''स्वभावाख्यायोग्यता या ह ठाख्ये ति । तथा च प्राप्तान्धतमसेष्वपि चैतन्यस्वरूपस्यानपायेन योग्यताया अनपायात् प्राप्तान्धतमसानामपि तमोयोग्यस्वरूपत्वं नानुपन्न-मित्यर्थः ॥

**(स.टि.) एते** दैत्यादयः । दैत्यादयः प्रत्येकं प्राप्तान्धतमसः सृतिसंस्था इति द्विधा ज्ञेया इत्यर्थः । अवसमन्धेभ्यस्तमस इत्यजन्तस्याकारान्तत्वस्य ''ध्वान्ते गाढेऽन्धतमसम्'' इत्यमरादौ स्थितत्वात् ''प्राप्तान्धतमसा'' इति वक्तव्ये कथं विपरीतोक्तिरिति चेन्न । जानन्ति पूर्वराजानः, रथ्याद्भिर्लभ्यते, ऋक्पूरब्धूःपथामानक्षे इत्यादिनिर्देशात्, अश्वादिगणे राजञ्छब्दस्य ग्रहणेन च समासान्तविधेरनित्यत्वावेदनात्प्रकृतेऽपि समासान्ताजभावोपपत्तेः । यद्वा

"प्राप्तान्धतमस" इति प्रथमैकवचनमेव । तमःप्राप्तानामेकसमुदायत्वेन, सृतिसंस्थानां च बहुत्वेन विवक्षितत्वेन "ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधे"त्येकबहुवचनान्तत्वेन प्रयोगोपपत्तेः । एवञ्चोक्तसूत्रेण भवत्येव समासान्तोच्प्रत्यय इति । ननु मूले द्विधेति धाप्रत्ययार्थस्य तच्छब्दार्थेन कथमन्वयः । संख्याया विधार्थे धेति सूत्रं संख्यावाचकाद्विधाशब्दस्य योऽर्थः प्रकारस्तस्मिन्नर्थे धाप्रत्ययो भवतीति तदर्थः ।

एवं च द्विधाशब्दार्थस्य प्रकारद्वयस्य तच्छब्दार्थीभूतदैत्यादिभिस्तादात्म्याभावात्कथमेतदिति चेन्न । प्रकारवाचकस्य लक्षणया प्रकारवद्बोधकत्वसम्भवात् । यद्वा ते च प्राप्तान्धतमसः सृतिसंस्था इत्येवंरूपेण द्विधा प्रकारद्वयेन ज्ञेयाः इत्यध्याहारेण योजना । उक्तं च "सङ्ख्याया विधार्थे धे"ति सूत्रव्याख्यावसरे तत्वसुबोधिन्यां "कथं नवद्रव्यं बहुधागुण इत्यादि । अत्राप्यश्रुतापि क्रिया प्रतीयतेऽपदिश्यत इति वा भवतीति वेति हरदत्त" इति । अथवा द्विधाशब्दोत्तरविद्यमानतृतीयाया वैशिष्ट्यमर्थः । एवं च इत्येवं प्रकारद्वयविशिष्टा दैत्यादय इति । एवमेव सर्वत्र धान्तस्थले ज्ञेयम् । सृतिसंस्था इत्यस्य नित्यसंसारिभ्रमं वारयति ।। संसारे वर्तमाना इति ।। ननु तमःपतितानामेव प्राप्तान्धतमसत्वात्कथं तद्योग्य विभागयोग्यता तेषामित्यत आह ।। **नाधुनेति** ।। **चैतन्यस्वभावत्वेनेति** ।। स्वभावाख्या योग्यता या हठाख्येति द्वाविंशाध्यायश्रीमन्महाभारत तात्पर्यनिर्णयोक्तेरिति भावः ।

**(पां.टि.)** सृतिसंस्थपदेन नित्यसंसारिणामुक्तत्वात्, कथं तेषां तमोयोग्यप्रभेदत्वमित्यतः 'सृतिसंस्थाः' इति पदं व्याचष्टे **संसार इति** । प्राप्स्यमानतमसः इत्यर्थः ।। ननु च तमोयोग्यानां 'प्राप्तान्धतमसः सृतिसंस्थाः' इति विभागः न युक्तः । प्राप्तान्धतमसां तमोयोग्यत्वाभावात्, फलप्राप्तिपर्यन्तत्वात् योग्यतायाः इत्यत आह **योग्यताया इति** । 'स्वभावाऽऽख्या योग्यता या हठाऽऽख्या याऽनादिसिद्धा सर्वजीवेषु

नित्या'' इत्युक्तेः योग्यतायाः चैतन्यस्वभावत्वात्, स्वभावस्य च अनपायाददोषः इति भावः ॥

(का.टि.) मर्त्याधमानामेव ते चेत्यनेन परामर्श इति प्रतीतिं वारयति ॥ **चतुर्विधा अपीति** ॥ नन्वेवं दैत्यादिव्यावर्तकचशब्दविरोध इत्यत आह ॥ **ते चेति** ॥ चोऽप्यर्थो न त्वर्थ इति भावः । सृतिसंस्थशब्दस्य नित्यसंसारिपरत्वभ्रमनिरासायाह ॥ **संसार इति** ॥ अविद्यानुबन्धा इत्यर्थः । ननु प्राप्ततमस्कानामपि कदाचित्संसारित्वात्साङ्कर्यमत आह ॥ **अधुनापीति** ॥ तथा चैतत्कालानुभूयमानदुःखमात्राः प्राप्ततमस्काः । तदन्यत्वविशिष्टत्वं वा एतत्कल्पीयाविद्योपलक्षितत्वं वा सृतिसंस्थत्वमतो न साङ्कर्यमिति भावः । समासान्तविधेरनित्यत्वात्प्राप्तान्धतमस इति सम्भवति । ननु प्राप्तान्धतमसानां कथं तमो योग्यप्रभेदत्वम् । तत्प्रागभावाधिकरणत्वरूपतद्योग्यतायास्तत्प्राप्त्युत्तरमभावादित्याशङ्कां परिहरति ॥ **योग्यताया इति** ॥ द्वेषादिरूपयोग्यतायाः स्वरूपत्वेन सर्वदैव सत्त्वादिति भावः । अथाहुराचार्याः

''स्वभावाख्या योग्यता या हठाख्या याऽनादिसिद्धा सर्वजीवेषु नित्या ।'' इति ।

इति चेतनविभागः ।

अचेतनविभागः

**(टी.) एवं चेतनविभागं विस्तरेणाभिधायावसरप्राप्तमचेतनविभागमाह**

**नित्यानित्यविभागेन त्रिधैवाचेतनं मतम् ॥ ७ ॥**

**अत्राप्यचेतनमेवैवं विभागवदित्यर्थानभ्युपगमात् पूर्वोक्ततत्वानामपि प्रमाणान्तरेण नित्यत्वादिग्रहणं न विरुद्धम् । नित्यानित्यविभागेनेत्यस्य नित्यानित्यत्वेन तद्विभागेन चेत्यर्थः । तथा च नित्यानित्यं नित्यमनित्यं चेत्यचेतनं त्रिविधमित्युक्तं भवति ।**

(रा.टि) ॥ **पूर्वोक्तेति** ॥ चेतनानां नित्यत्वं अत्यन्ताभावध्वंसयोर्नित्यत्वं प्रागभावस्या नित्यत्वं अन्योन्याभावस्य च यथाधिकरणं नित्यत्वमनित्यत्वं चेत्यादि ध्येयमित्यर्थः ।

(श्री.वि.) **अवसरप्राप्तमिति** । चेतनाचेतनयोर्मध्ये चेतनस्याभ्यर्हितत्वेन तन्निरूपणानन्तरं प्राप्तमित्यर्थः । नन्वेवं सति स्वतन्त्रतत्वस्य विष्णोर्नित्यत्वं नोक्तं स्यात् । तस्यास्वतन्त्रप्रभेदरूपत्वात् । परतन्त्रतत्वेऽपि चेतनानां नित्यत्वं नोक्तं स्यात् । तस्याचेतन प्रभेदरूपत्वात् । तथा ध्वंसात्यन्ताभावयोर्नित्यत्वं प्रागभावस्यानित्यत्वमपि नोक्तं स्यात् । तस्यभावप्रभेदरूपाचेतनप्रभेदरूपत्वादित्यत आह ॥ **अत्रापीति** । एवं अचेतनं नित्यादिभेदेन त्रिविधमेव न पुनरेकविधं नापि चतुर्विधमित्येवार्थोऽभिमतो न पुनरचेतनमेव नित्यादिविभागवदिति । तथा च पूर्वोक्तानां विष्ण्वादितत्वानां नित्यत्वादिकं न विरुद्धमित्यर्थः । ननु नित्यानित्यविभागेनेत्यादिना विधाद्वयस्यैव लाभात् । त्रिधेति कथमुक्तमित्यत आह ॥ **नित्यानित्यविभागेनेत्यस्येति** ॥ **तद्विभागेनेति** । नित्यानित्यस्य विभागेन पार्थक्यकरणेन । तथा च नित्यत्वेनानित्यत्वेन चेत्यर्थः । तथा च नित्यानित्यं च विभागश्च नित्यानित्यविभागमिति द्वन्द्वैकवद्भावमित्युक्तं भवति ॥

(स.टि.) उत्तरमूलमवतारयति ॥ **एवमिति** ॥ **विस्तरेण** शब्दप्रपञ्चेन ॥ **अवसरप्राप्तमिति** ॥ चेतनविभागानन्तरमचेतनविभागस्य न्यायप्राप्तत्वादित्यर्थः । ननु विष्णोर्नित्यत्वस्यावश्यं वक्तव्यस्यानुक्तेर्न्यूनता स्याद्ग्रन्थस्य । न चानेनैव मूलेन तस्य तत्सेत्स्यतीति वाच्यम् । अस्यास्वतन्त्रप्रभेदत्वात् । एवमेव चेतनानां रमादीनामचेतनप्रभेद नित्यत्वालाभाच्चेत्यतो ''भावाभावौ द्विधेतर''दित्यादि मूलवाक्यानामन्य निषेधकत्वाभावेन यथा तेभ्यो विष्णोर्भावत्वादिसिद्धिः तथाऽस्मादपि विष्ण्वादीनां नित्यत्वं सम्भवत्येवेत्याह ॥ **अत्रापीति** ॥ न केवलं ''भावाभावा''वित्यादिषु किं त्वत्रापीत्यर्थः । अत एव भगवत्पादैरवधारण मचेतन एतत्प्रकारत्रयं क्वचिदपि न वियुज्यत इति

प्रदर्शनार्थं त्रिधेत्यनेनोपनिबद्धम् ॥ एवं विभागवदिति ॥ एवकारस्याचेतनपदेनान्वयमङ्गीकृत्यैवं विभागवदित्यर्थानङ्गीकारादित्यर्थः । **पूर्वोक्ततत्वानां** विष्ण्वादीनाम् । **प्रमाणान्तरेण** "नित्यो नित्यानां जीवो नित्यो धातुरस्य त्वनित्य" इत्यादि प्रमाणविशेषेण । आदिपदेनाभाव प्रभेदप्रागभावस्यानित्यत्वं ग्राह्यम् ।

ननु "नित्यानित्यविभागेने"ति मूले द्वैविध्यस्यैव प्रतीतेस्त्रिधेति कथनं कथं न विरुद्धमित्यतो नात्र नित्यमनित्यं चेति विभागेनेत्यर्थोऽभ्युपगम्यते येन विरोधः किन्तु नित्यं च तदनित्यं चेति नित्यानित्यम् । नित्यानित्यं च विभागश्च नित्यानित्यविभागः । सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः। नित्यानित्येत्येतच्च भावप्रधानम् । विभागशब्दस्य च सम्बन्धिशब्दत्वात्तदाकाङ्क्षापूरकत्वेन नित्येत्यादि । तेनाप्यन्वेतीतीममर्थसन्दर्भं मनसि निधायाह ॥ **नित्यानित्येति ॥ तद्विभागेनेति** ॥ नित्यत्वेनानित्यत्वेन चेत्येवं तस्य समस्तस्य भावप्रधानतया विभागेनेत्यर्थः । एवं वाक्यार्थोपयुक्तं पदार्थमुक्त्वा वाक्यार्थमाह ॥ तथा चेति ॥ इत्युक्तं भवति । अनेन मूलेनेति योज्यम् ।

**(पां. टि.)** ननु स्वतन्त्रतत्त्वम्, अभावतत्त्वम्, चेतनतत्त्वं च; नित्यानित्यम्, नित्यम्, अनित्यं वा? उत न त्रयमपि? त्रयस्यापि अचेतनप्रभेदत्वेन उच्यमानत्वादित्यत आह **अत्रापीति** । अनभ्युपगमादिति उपलक्षणम्; 'अचेतनं त्रिविधमेव, न पुनः एकविधं द्विविधं च' इति अर्थाभ्युपगमादित्यपि द्रष्टव्यम् । **पूर्वोक्ततत्त्वानामिति** । स्वतन्त्रचेतनतत्त्व अभावतत्त्व चेतनतत्त्वानाम् इत्यर्थः । **प्रमाणान्तरेणेति** । 'नित्यो नित्यानाम्', 'जीवो नित्यो धातुरस्य त्वनित्यः' इत्यादि प्रमाणान्तरेण इत्यर्थः ।

नित्यत्वादीति आदिपदेन नित्यानित्यत्वपरिग्रहः । प्रागभावप्रध्वंसाभावयोः नित्यानित्यत्वादिति ध्येयम् ॥ ननु 'नित्यानित्यविभागेन' इत्यनेन विधाद्वयस्य एव उक्तेः त्रैविध्योक्तिः अनुचिता इत्यत आह **नित्येत्यादि** ।

(का.टि) ॥ **अवसरप्राप्तमिति** ॥ अवश्यकर्तव्यत्वेन बुद्धिस्थमित्यर्थः । ननु भावरूपाचेतनस्यैव नित्यानित्यविभागवत्त्वे चेतनस्य नित्यत्वं प्रागभावादेर्नित्यानित्यत्वं च प्रमाणान्तरसिद्धं विरुद्धयेतेत्यत आह ॥ **अत्रापीति** ॥ यद्यपि विभाजकधर्मप्रतिपत्त्यनन्तरमेवैषा शङ्का सम्भवति तथापि विशेष्यसङ्गतत्वादस्याः प्रथमं निरासः । विशेषणव्याख्याने सति तत्सङ्गत शङ्कानिरासस्यैवावसर प्राप्तेः । नित्यानित्ययोर्विभागेनेति व्याख्याने त्रैविध्यानुपपत्तेरन्यथा व्याचष्टे ॥ **नित्येति** ॥ नित्यानित्यमिति कर्मधारयो भावप्रधानश्च । तद्धटकविशेष्यविशेषणधर्मपरविभागशब्देन द्वन्द्वैकवद्भाव इति भावः । यद्यपि नित्यानित्यत्वघटकनित्यत्वानित्यत्वयोर्नित्यानित्यसाधारणत्वान्न विभाजकत्वं तथापि विभागशब्दस्य परस्परविविक्तभागार्थकतया केवलनित्यत्वानित्यत्वे बिभाजकत्वेन विवक्षिते । स्पष्टयिष्यते चैतत् ।

(टी.) **केचित्सर्वं क्षणिकं मन्यमाना नित्यं न मन्यन्ते । अपरे तु सत्कार्यवादिनोऽनित्यं नाङ्गीकुर्वन्ति । सर्वेऽपि नित्यानित्यं विरोधान्नाभ्युपगच्छन्ति । तन्निरासायैवकारः । न प्रतिज्ञामात्रेणार्थसिद्धिरिति प्रामाणिकत्वमुक्तविभागस्य सूचयति मतमिति । तच्च लेशतो दर्शयिष्यामः। यद्यपि नित्यं नित्यानित्यमनित्यमित्युद्देशः कार्यः प्राधान्यात् । तथाप्युक्तिलाघवाय क्रमोल्लङ्घनम् ।**

(रा.टि.) ॥ **सत्कार्येति** ॥ कारणे सदेव कार्यं कुलालादिव्यापारेण व्यज्यते तत्रैव लीयत इति सत्कार्यवादिनोऽनित्यं नेति मन्यन्त इत्यर्थः ॥ **सर्वेऽपीति** ॥ वादिन इत्यर्थः ॥ **दर्शयिष्याम इति** ॥ नित्यादिवस्तुनिर्देशप्रस्ताव इति भावः ॥ **क्रमेति** ॥ नित्यानित्यं नित्यमनित्यं चेत्येवं क्रमोल्लङ्घन मित्यर्थः ।

(श्री.वि.) **मन्यमानाः** बौद्धाः । **अपरे** साङ्ख्याः ॥ **सत्कार्यवादिन इति** । मृदादौ पृथुबुध्नोदराकारादिनाऽत्यन्तसदेव घटादिकार्यं जायते तर्हि

दण्डादिकारकचक्रवैय्यर्थ्यमिति शङ्कायां अभिव्यक्त्यर्थत्वान्न वैयर्थ्यमित्यङ्गीकुर्वन्तःसांख्या अनित्यं न स्वीकुर्वन्तीत्यर्थः ॥ **लेशत इति ।** तच्च वेदानां नित्या वेदा इत्येतद्व्याख्यानसमये नित्यादिवस्तुनिर्देश प्रस्तावे दर्शयिष्याम इति भावः ॥ **प्राधान्यादिति ।** नित्यानित्याद्यपेक्षया नित्यस्य प्रधानत्वादित्यर्थः ॥ **उक्तिलाघवायेति ।** नित्यं नित्यानित्यमनित्यमित्युद्देशे उक्तिगौरवम् । नित्यानित्यविभागेनेत्युक्तौ तु लाघवम् । तदर्थं क्रमोल्लङ्घनमित्यर्थः।

**(स.टि.)** सर्वमचेतनमुक्तरीत्या त्रिविधमेव न तु सर्वं नित्यम् । नाप्यनित्यमित्ययोगव्यवच्छेदार्थकैव कारव्यावर्त्यमतानि दर्शयति ॥ **केचिदित्यादिना ॥** केचित् वैनाशिकाः । अपरे सांख्याः । मृदादौ पृथुबुध्नोदराद्याकारो घटादिः पूर्वमत्यन्तं सन्नेव दृश्यत इति वदन्तोऽनित्यं नानाभ्युपगच्छन्तीत्यर्थः ॥ **विरोधादिति ॥** सहानवस्थिति रूपात् । यत्र नित्यत्वं गमनादौ न तत्रानित्यत्वम् । यत्र च घटादावनित्यत्वं न तत्र नित्यत्वमिति तदुभयोरेकत्रानवस्थानादित्यर्थः ॥ **तन्निरासायेति ॥** अनूदितमतनिरासार्थमित्यर्थः । **एवकारः** त्रिधैवेत्यत्रत्यः । एवकारेण कथं तन्निरास इत्याशङ्क्य समाधत्ते ॥ नेति ॥ **प्रतिज्ञामात्रेणेति ।** त्रिधैवेति प्रतिज्ञामात्रेणेत्यर्थः । इति इत्यतः । **उक्तविभागस्य** नित्यानित्यविभागेनेत्युक्त विभागस्य । तच्च प्रामाणिकत्वम् । **लेशतः** लेशेन । सार्वविभक्तिकत्वात्तसेः प्रकृते तृतीयांतात्तसिरिति भावः । **दर्शयिष्यामः** नित्या वेदाः पुराणाद्या इत्येतद्व्याख्यावसर इत्यर्थः । ननु आदौ नित्यं तदनन्तरं नित्यानित्यं ततस्त्वनित्यमित्युद्देशः कार्यः । प्राधान्याप्राधान्यक्रमस्य सत्त्वात् । तथैवोत्तरत्र निर्देशस्य करिष्यमाणत्वादित्याशङ्कते ॥ **यद्यपीति ॥** प्राधान्यात् प्राधान्यक्रमात् । परिहरति ॥ **तथापीति ॥** उक्तिलाघवाय उक्तौ यल्लाघवं लघुत्वं तस्मा इत्यर्थः । **क्रमोल्लङ्घनं** पूर्वं नित्यमनुद्दिश्य नित्यानित्यस्य प्रथमतः कथनरूपमतिक्रमणम् ।

**(पां. टि.) तच्चेति ।** 'नित्या वेदाः समस्ताश्च,' 'पुराणानि तदर्थानि,' 'सर्वे निमेषा जज्ञिरे', 'विकारोऽव्यक्तजन्म हि' इत्यादिना प्रामाणिकत्वं

दर्शयिष्यामः इत्यर्थः ।। ननु अयं निर्देशः न तावत् प्राधान्यक्रमेण । तथा सति 'नित्यम् नित्यानित्यम्, अनित्यम्' इति नित्यस्य एव आदौ निर्देशप्रसक्तेः इति भावेन शङ्कते **यद्यपीति** । उपलक्षणमेतत् 'अनित्यम्, नित्यानित्यम्, नित्यम्' इति उद्देशः कार्यः अप्राधान्यात् इत्यपि द्रष्टव्यम् । **उक्तिलाघवा-येति** । नित्यानित्यस्य प्रथमोद्देशे हि विभागपदेन तद्विभागभूतयोः नित्यानित्ययोः ग्रहणसम्भवात् उक्तिलाघवं भवति । अन्यथा नित्य नित्या-नित्य अनित्यत्वेन' इत्यादिरूपेण विभागोक्तिप्रसङ्गेन गौरवं स्यादिति भावः।

(का.टि.) त्रिधैवेत्येवकारव्यावर्त्यमतान्तराण्याह ।। **केचित्त्विति** ।। चार्वाकादय इत्यर्थः । क्षणिकत्वं चैकक्षणमात्रवृत्तित्वं स्वाधिकरणक्षणोत्तर क्षणावृत्तित्वमिति यावत् । स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वं तदित्यन्ये । तत्रोत्पत्त्युत्तरपदयोः कृत्यं चिन्त्यम् । अपरे साङ्ख्याः ।। **सत्कार्यवादिन इति** ।। सदेव कार्यं तत्तत्कालेऽभिव्यज्यत इति वादिन इत्यर्थः ।। **सर्वेऽपीति** ।। नित्यानित्यभेदेन द्वैविध्यमङ्गीकुर्वन्तोऽपि तार्किकादय इत्यर्थः । **विरोधात्** निर्वक्ष्यमाणनित्यानित्यत्वघटकनित्यत्वा-नित्यत्वयोर्विरोधभ्रमात् । न तु कूटस्थत्वतदभावरूप नित्यत्वानित्यत्वयो-र्विरोधादित्यर्थः । सिद्धान्ते तदनिरासात् ।। **तन्निरासायेति** ।। एवकारस्य निरुक्तैकविधत्वद्विविधत्वव्यवच्छेदकत्वादिति भावः ।। **दर्शयिष्याम इति** ।। उत्तरमूल इत्यादिः ।। **प्राधान्यादिति** ।। नित्यस्यानित्यं प्रत्युपजीव्यत्वेन प्राधान्यादित्यर्थः ।। **उक्तिलाघवायेति** ।। नित्यानित्यस्य प्रथमोद्देश एव विभागपदेन तद्विभागभूतयोर्लाभाल्लाघवम् । अन्यथा पृथगेव त्रयाणां निर्देश्यतया गौरवादिति भावः ।

नित्यान्यचेतनानि

(टी.) **क्रमेण त्रयं दर्शयिष्यन्नित्यं तावद्दर्शयति**

**नित्या वेदाः....... ....... ....... ।**

**अत्र नित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वम् । तच्च वेदानां 'नित्या वेदाः समस्ताश्च' इत्यादि प्रमाणसिद्धम् । अत्र वेदा इत्युपलक्षणम् । पञ्चाशद्वर्णानामव्याकृताकाशस्य च तथाभावात् ।**

(रा.टि.) ॥ **कूटस्थतयाऽऽद्यन्तशून्यत्वमिति** ॥ कूटवत् आकाशवत् निर्विकारतया स्थिततयेत्यर्थः । यद्यप्यानुपूर्व्याः कृत्रिमत्वेन सजातीयानुपूर्वीकत्वमात्रेण प्रवाहतोऽनादित्वमेव । न कूटस्थत्वम् । तथैव तत्वनिर्णयटीकोक्तेः । तथाप्यध्यापकाद्युच्चरितवेदस्य तथात्वेऽपि ईश्वरबुद्धिस्थक्रमापेक्षयै तदुक्तिः । उक्तं हि तत्वनिर्णये

'सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात्' इति । तथा तत्वनिर्णयोक्तप्रमाणशेषे

''नित्या वेदास्समस्ताश्च शाश्वता विष्णुबुद्धिगाः ।'' इति विष्णुबुद्धिगतत्वमुक्तम् ।

(श्री.टि.) नित्यस्य लक्षणमाह ॥ **अत्र नित्यत्वं नामेति** । नित्यानित्येति व्याप्तिपरिहारायाह ॥ **कूटस्थतयेति** । कूटमव्याकृताकाशः । ''कूटं खं विदलं व्योम सन्धिराकाश उच्यत'' इत्यभिधानात् । तद्वत् स्थितं कूटस्थम् । तत्सादृश्यं निर्विकारत्वेन विवक्षितम् । तथा च कूटस्थतयेत्यस्य निर्विकारतयेत्यर्थो द्रष्टव्यः । सहितमिति शेषः । तथा च कूटस्थत्वे सत्याद्यन्तशून्यत्वं लक्षणम् । अन्त्यावयविन्यति व्याप्तिपरिहारायोत्तरभागः । अव्यक्तेऽतिव्याप्तिवारणाय विशेषणभागः । विकारो व्यक्तजन्म हीति वचनेन तस्य विकारावगमादिति द्रष्टव्यम् । अन्येतु आद्यन्तशून्यत्वे कूटस्थत्वं हेतुतयैवोपात्तम् । न तु लक्षणान्तर्गतमित्यप्याहुः ।

ननु तत्तद्बुध्द्युपाधिकक्रमविशिष्टवर्णानां वेदत्वात्तेषां च जन्मवत्त्वात्कथं नित्यत्वेन निर्देश इत्यत आह ॥ **अत्र वेदा इति** ॥ **तथा भावादिति** । कूटस्थतया आद्यन्तशून्यत्वादित्यर्थः । तथा च जहल्लक्षणया पञ्चाशद्वर्णाः

अव्याकृताकाशश्च वेदपदेन गृह्यन्त इति भावः । ननु पञ्चाशद्वर्णानामिति कथम् । अकाराद्याःषोडशस्वराः । कादयो मावसानास्स्पर्शाः पञ्चविंशतिः । यादि क्षान्तादशेत्येकपञ्चाशद्वर्णाः । अत एवोक्तम् । एकपञ्चाशद्वर्णानां चतुर्विंशतिमूर्तय इति चेत् सत्यम् । कषयोर्योगेक्षेति जातत्वेन तस्य पृथग्वर्णत्वाभावमभिप्रेत्य पञ्चाशद्वर्णानामित्युक्तत्वात् । एतदभिप्रायेणै-वोक्तम् । तत्र वर्णाभिमानिभिरजेशमुखैस्सहैव ''पञ्चाशताप्रतिगिरन्तमशेष-विद्या'' इति ।

ननु वेदशब्देन पञ्चाशद्वर्णादयो जहत्स्वार्थलक्षणया गृह्यं तेन हि जहत्स्वार्थलक्षणायां चोपलक्षणप्रयोगो दृष्टः । गङ्गापदेन तीरं लक्ष्यत इत्येवार्थो न तूपलक्ष्यत इति । उपलक्षण शब्दप्रयोगश्चाजहत्स्वार्थ लक्षणाया-मेव काकेभ्यो दधिरक्ष्यतामित्यत्र काकपदं दध्युपघातकद्रव्यस्योपलक्षकमिति व्यवहारादिति चेत्सत्यम् । जहत्स्वार्थलक्षणायामपि उपलक्षणशब्दप्रयोगस्य ग्रन्थेषु बहुलमुपलम्भात् । तथाहि । नन्वेवं सति नित्या वेदा इत्युदाहृत प्रमाणासङ्गतिः । नहि वर्णानां कूटस्थघटितनित्यत्वमुक्तम् । अपि तु वेदानां सर्वदैकप्रकारत्वरूपमेव नित्यत्वम् । नहि वयं वेदस्य कूटस्थनित्यतां ब्रूमः । किन्तु शब्दतोऽर्थ तश्च सर्वदा एकप्रकारतामेवेति तत्वनिर्णयटीकायां व्याख्यातत्वादिति चेत् । उच्यते । तत्रैव न च वर्णपदादीनामनित्यत्वं वक्तुं युक्तमिति वाक्यव्याख्यानावसरे न केवलं वर्णमात्रं नापि पदादिमात्रं किन्तु यथायोगं शाश्वता इत्यस्य वाक्यस्य प्रकारान्तरेण व्याख्यातत्वेन वर्णानां कूटस्थत्वस्याप्ये तत्प्रमाणार्थत्वेन विवक्षितत्वात् । नह्येतद्व्याख्यानमभिप्रेत्य अत्र नित्या वेदा इति प्रमाणोदाहरणे काप्यसङ्गतिरिति ॥

**(स.टि.)** तर्ह्येतदनुसारेण नित्यानित्यस्वरूप निरूपणं प्राक्कार्यम् । नित्यस्वरूप निरूपणं तु कुत इत्यत आह ॥ **क्रमेणेति** ॥ प्राधान्य-क्रमेणेत्यर्थः । त्रयं नित्यं नित्यानित्यमनित्यमिति त्रयम् । ननु ''नित्या वेदा'' इत्यत्र नित्यत्वं नाम यद्यविनाशित्वं तर्हि नित्यानित्य पुराणादीनां

नित्यत्वस्यापि सत्वात्तत्रातिव्याप्तिः । न च तेषां लक्ष्यत्वान्नानुपपत्तिरिति वाच्यम् । नित्यरूपप्रथमप्रकाराक्रान्तत्वे "पुराणाद्या" इति द्वितीयप्रकारविशिष्टत्वेन कथनविरोधापत्तेरित्यत आह । **अत्रेति ॥** अस्मिन्वाक्ये वेदानामुक्तं नित्यत्वं नाम कूटस्थतया निर्विकारतया । आद्यंत शून्यत्वं उत्पत्तिनाशरहितत्वम् । कूटवत्तिष्ठतीति कूटस्थम् । कूटं खं विदलं व्योमेत्याद्यभिधानादाकाशवाचिकूटशब्द उपपदे तिष्ठतेः "सुपिस्थ" इत्यतो योगविभागात्कप्रत्यये रूपम् । आकाशवत्स्थित्युक्त्या निर्विकारत्वं लभ्यते । एवं चोक्तस्थले नातिव्याप्तिः । पुराणादीनामनीदृशत्वात् । एतेनैवोक्तविरोधोऽपि निरस्त इति ज्ञेयम् ।

ध्वंसप्रागभावयोरनतिव्याप्तये आद्यन्तशून्यत्वमिति क्रमाद्विशेषणे । तावत्युक्ते कालप्रवाहे प्रकृत्यां चातिप्रसक्तिः । तत्परिहाराय कूटस्थतयेति पदम् । एवं च कालप्रवाहप्रकृत्योः क्षणलवाद्यंशैर्महदाद्यात्मना विकारदर्शनात्सदैकप्रकारत्वरूपकूटस्थत्वाभावान्नदोषः । असम्भवशङ्कां वारयति ॥ **तच्चेति ॥** कूटस्थतयाऽऽद्यंतशून्यत्वम् । आदिपदेन "शाश्वता विष्णुबुद्धिगाः । सर्ग सर्गेऽमुनैवैत उद्गीर्यं ते तथैव च । अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । अनादिनित्या सा तच्च विना तां न स गम्यत" इत्यादीनां सङ्ग्रहः । ननु नित्यानां वर्णाव्याकृताकाशादीनां सत्त्वात्कथं वेदमात्रग्रहणमित्यत आह ॥ **अत्रेति ॥** अजहत्स्वार्थलक्षणारूपमित्यर्थः । ततश्च नानुक्तिदोषः । भूतव्यावृत्तयेऽव्याकृतपदम् । तथाभावादित्यनेनोपलक्षणाकरणेऽतिव्याप्तिः स्यात्तत्रेति सूचयति ।

न च "न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः । किं तु शब्दतोऽर्थतश्चैकप्रकारतामेवे"त्यादि तत्वनिर्णयटीकाविरोध इति वाच्यम् । क्रमस्तु द्विविधः । ईशबुद्धिस्थो स्मद्बुद्धिस्थश्चेति । तत्राद्यमवलम्ब्येयं टीका प्रवृत्ता । ईश्वरबुद्धेरुपरमाभावेन तदुपहितक्रमस्यापि नित्यत्वेनोक्तलक्षण सम्भवात् । द्वितीयमवलम्ब्य तु तत्वनिर्णयटीका प्रवृत्ता । अस्मद्बुद्धीनां क्रमवत्त्वात्तदुपहितक्रम-

विशिष्टवर्णात्मकवेदस्यापि तथोक्तिसम्भवात् । एवमेव नित्यत्वानित्यत्वावेदकप्रमाणान्यप्युभयथा योज्यानीत्यविरोधसम्भवात् । यथोक्तं गायत्र्यधिकरणचन्द्रिकायां ''गायत्रीरूपवेदस्यानादिनित्यत्वात् ।

ननु कृतकक्रमविशिष्टवर्णात्मकस्य वेदस्य नानादित्वम् । उक्तं हि तत्वनिर्णयटीकायाम् । न हि वयं वेदस्य कूटस्थनित्यतां ब्रूम इति । क्रमस्य कृतकत्वेऽपीति चेति चेन्नैवम् । तत्वसंख्यानटीकायां नित्यत्वं नाम कूटस्थतयाऽऽद्यन्तशून्यत्वम् । तच्च वेदानां नित्या वेदाः समस्ताश्चेत्यादिप्रमाणसिद्धमित्युक्तत्वात् । युक्तं चैतत् । क्रमस्य सदेश्वरबुद्धिस्थत्वात् । अत एवोक्तं तत्वनिर्णये सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वादिति । तट्टीकायां कौटस्थ्यनिषेधस्त्वस्मदादीन्प्रति प्रमापकत्वोपयुक्तस्यास्मदादिबुद्धिस्थस्य क्रमस्योच्चारणाद्यधीनत्वेन कृतकत्वात् । कृत्वाचिन्तया वाऽनादित्वोक्तिः । क्रमस्यानन्याधीनत्वात् । इयं च नित्यत्वादेव शब्दानां तत्स्वभावः कथं हरेरित्यनुव्याख्याने प्रदर्शिते''ति । तर्कताण्डवे पौरुषेयत्वानुमानभङ्गे ''ननु कथं वेदस्यापौरुषेयत्वमित्यारभ्य ''न चेश्वरस्य तथाविधबुध्युपरमो युज्यते । तस्य सर्वदा सर्वज्ञत्वात् । पुराणादीनामप्यन्यथारचनमेवानित्यत्व'' मित्यन्तेनायमर्थ एवोक्तः । सत्तत्वरत्नमालायामचेतनप्रकरणे

**नित्या वेदास्तथाकाशो दिङ्नामापि य एव हि ।**
**वेदः सर्वोऽपि नित्यश्च स्वरक्रमपदात्मकः ।**
**पञ्चाशत्संख्यवर्णानां क्रमाद्योगैः परस्परम् ।**
**अनन्तानां च वेदानां स्थितिरित्यतिकौतुकम् ।**
**ईश्वराचिन्त्यशक्त्यैव घटना केवलं भवेत् ।**

इत्यारभ्य ''व्यक्तिरुच्चारणाद्भवेत् । नित्या अनित्याश्च ततस्तदधीनाः सदैव ही''त्यन्तेन सव्याख्यानेन निपुणतरमयमेवार्थः प्रपञ्चितः । तथा हि तद्वाक्यानि गीताभाष्ये ''तदुत्पत्तिवचनान्यभिव्यक्त्यर्थानीत्यादौ । तदुत्पत्ति

वचश्चैव भवेद्व्यक्तिमपेक्ष्य त्विति तत्वनिर्णये। तत्वसंख्यानटीकादौ तु कौटस्थ्यस्य स्पष्टमुक्तत्वाच्च । कौटस्थ्याभाववचनं त्वभ्युपगमवादेन वा व्यक्तिलक्षणविशेषाभिप्रायेण वा सावकाशम्। अन्यथा शब्दतोऽर्थतश्चैकप्रकारतामेवेति तदुत्तरग्रन्थे शब्दत एकप्रकारत्वाख्यकूटस्थत्वोक्तिविरोधं वियदधिकरणीयसुधायां वेदस्य नियतानुपूर्वीकत्वेनार्थावबोधनं शक्त्याविर्भावो व्यक्तिरित्युक्तेस्तद्विरोधाच्चेति तद्विरोधमुक्त्वा न चेत्यादिना पुनः शङ्काः प्रापय्य तन्निषेधपूर्वकं तदेवेदं वचनमित्यादिविरोधादिति यद्वर्णक्रमाद्युपेतमेवेदं श्रूयमाणं वाक्यमिति प्रत्यभिज्ञानादित्युक्तेरिति। तथा द्वादशस्तोत्रेऽपि वैकुण्ठस्याखिला वेदाउद्गीर्यन्तेऽनिशं यत इत्युक्तेश्चेति।

तत्वनिर्णयटीकान्यायावल्यां च । नित्यमपि प्रधानं विक्रियते । न तथाविकारिणो वेदा इति दर्शयितुं शाश्वता इति शाश्वतपदकृत्यमभिधाय तथैव तद्विक्रियते तत्क्रमेणैव तैर्वर्णैस्तैः स्वरैरेव नान्यथेति ये पूर्वकल्पे वेदाः स्थिताः ये च संहितापदादिषूदात्तादिस्वराः स्थिताः ये च तत्र वर्णाः स्थिताः यश्च तत्र क्रमः स्थितस्त एवैतत्कल्पादौ विष्णुनोदीर्यन्ते । न तु वह्निमील इति वर्णविपर्ययेण । न च पुरोहितमील इति क्रमविपर्ययेणेत्युक्तं भवतीत्यारभ्य यथा वेदजनिवचनस्यार्थो वेदाभिव्यक्तिरित्यन्तेन निपुणतरमय मेव प्रकार उदञ्चितः ।

यद्वा जहत्स्वार्थलक्षणया क्रमविशिष्टवेदं परित्यज्य पश्चाशद्वर्णाव्याकृताकाशा एव ग्राह्याः । उपलक्षणशब्दस्तु ''उपलक्षणा च गौणी च तिस्रश्शब्दस्य वृत्तय'' इत्यनुव्याख्यानोक्तेर्लक्षणासामान्यपरः । ईशशेमुषीजातोऽपि क्रमस्तद्बुद्ध्युपरमाभावेनैव न नश्यतीति चोपपद्यते । उपपद्यते च ''तत्क्रमेणे''त्यादितन्नित्यतावेदको वेदवादः । पुराणस्य वेदस्य चोपपद्यत उत्पत्तिमत्क्रमकत्वेऽपि विलक्षणानुपूर्वीकत्वतदभावरूपवैलक्षण्यम् । स्पष्टं चात्र ''न हि वय''मित्याद्यनेकस्थलगतटीकाकृद्वाक्यमिति । तथा चोक्तमेतद्व्याख्याने पाण्डुरङ्गीये ''ननु क्रमविशिष्टवर्णा एव वेदाः । नाव्याकृता-

काशवदर्थान्तरम् । वर्णाश्च नित्यत्वात्सर्वगतत्वाच्च स्वतः क्रमशून्या इत्यतः क्रमो बुद्धिनिमित्त एवास्थेयः । उक्तं हि

**वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।**
**व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ।।** इति ।

तत्कथं कृतकक्रमविशिष्टवर्णात्मकस्य नित्यत्वमुच्यते । अत एवोक्तं तत्व निर्णयटीकायां ''न हि वयं वेदस्य कूटस्थनित्यतां ब्रूम'' इति । ''क्रमस्य कृतकत्वेऽपी''ति च । तत्कथमेतदिति चेत् ।

अत्र वदन्ति । एतट्टीकानुरोधेन ''न हि वयं वेदस्ये''त्यादि तत्व-निर्णयटीकाग्रन्थो व्याख्येयः । अत्र ''नित्या वेदा'' इति प्रमाणोपन्यासेनै-तद्ग्रन्थस्य प्राबल्यात् । युक्तं चैतत् । क्रमस्य सदेश्वरबुद्धिस्थत्वात् । अत एवोक्तं तत्वनिर्णये ''सर्वज्ञत्वादीश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वा''दिति । न चैवं टीकायां तन्निषेधानुपपत्तिः । अस्मदादीन्प्रत्यस्मदादिबुद्धिस्थस्य क्रम-स्योच्चारणाद्यधीनत्वेन कृतकत्वादित्यभिप्रायेण तस्योपपन्नत्वादिति ।

वयं तु ब्रूमः । न क्रमस्यानादिनित्यत्वमङ्गीकारार्हम् । तथा सति वर्ण-धर्मस्य क्रमस्य यावद्द्रव्यभावित्वेन वर्णयोरत्यन्ताभेदप्रसङ्गेन वर्णानां परस्पर मत्यन्ताभेदप्रसङ्गात् । अत एव चन्द्रिकायामिमामेवानुपपत्तिं मनसि निधाय ''कृत्वाचिन्तया वाऽनादित्वोक्ति''रित्युक्तम् । ततश्च कृतकक्रमविशिष्ट-वर्णात्मकस्य वेदस्य नित्यत्वासम्भवात्कथं तन्नित्यत्वोक्तिः । कथं वा कृतकस्य कूटस्थतया प्रमितत्वम् ।

नित्यानित्यादिभावेन निर्दिष्टस्य नित्यत्वेन निर्देश इत्यत आह । **अत्र वेदा इत्युपलक्षणमिति** । अत्रोपलक्षणपदेन लक्षणासामान्यमित्युच्यते । न त्वजहत्स्वार्थलक्षणा । उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तय इत्यादौ लक्षणासामान्येऽपि तत्प्रयोगदर्शनात् । तथा च वर्णानामव्याकृतस्यैव कूटस्थनित्यत्वेनाभिप्रेतत्वान्न सङ्ग्राह्यासङ्ग्रहो सङ्ग्राह्यसङ्ग्रहोऽपीति भावः ।

यत्तु चतुर्वेदानामेव श्रुतिगृहीतत्वेन नित्यत्वेन प्रदर्शनमनुपपन्नम् । अव्याकृतादेश्च तथाभूतत्वादित्याशङ्क्य जहत् स्वार्थलक्षणया वेदपदेन वर्णादेरपि सङ्गृहीतत्वाददोष इत्येवंपरत्वेनात्रेति ग्रन्थावतरणं तत्तु प्रोक्तानुपपत्तिग्रस्तमिति दिगित्युक्तम् । आचार्या अपि ''तथा च जहल्लक्षणया वर्णा अव्याकृताकाशश्च वेदपदेन गृह्यत इति भावः ।

नन्वेवं नित्या वेदा इत्युदाहृतप्रमाणासङ्गतिः । न हि तत्र वर्णानां कूटस्थताघटितं नित्यत्वमुक्तम् । अपि तु वेदानां सर्वदैकप्रकारत्वरूपमेव नित्यत्वम् । न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः । किन्तु शब्दतोऽर्थतश्चैकप्रकारतामेवेति तत्वनिर्णयटीकायां व्याख्यातत्वादिति चेन्मैवम् । तत्रैव न च वर्णपदादीनामनित्यत्वं वक्तुं युक्तमिति वाक्यव्याख्यावसरे न केवलं वर्णमात्रम् । नापि पदादिमात्रम् । किन्तु समस्ताश्च यथायोगं शाश्वता इति प्रकारान्तरेणास्य वाक्यस्य व्याख्यातत्वाद्वर्णानां कूटस्थत्वस्यापि तत्प्रमाणार्थत्वेन विवक्षितत्वात् । न ह्येतद्व्याख्यानमभिप्रेत्यात्रोक्त प्रमाणोदाहरणे काप्यसङ्गतिरिति व्याख्यातवन्तः । तदनन्तरा आचार्या अपीमामेव रीतिमेतद्वाक्यव्याख्यानावसरे प्रतिपादितवन्तः ।

रोट्टीयेऽपि व्याख्याने ''ननु क्रमविशेषविशिष्टवर्णा एव वेदो न त्वव्याकृताकाशवदर्थान्तर''मित्यारभ्य ''ज्ञेय''मित्यन्तेनेममेव प्रकारं प्रदर्शयामासुः ।

तर्कताण्डवे स्थलान्तरे क्रमस्य कृतकत्वेऽप्याद्युनिकेनाध्याप केन स्वबुद्धिस्थपूर्वपूर्वदिवसीयक्रमानुसारेणोत्तरोत्तरदिवसेष्विवेश्वरेणापि स्वबुद्धिस्थप्रवाहानादिपूर्वकल्पीयप्रमाणानुसारेणैवोत्तरोत्तरकल्पेष्वपि वेदस्योच्चरितत्वेन स्वातन्त्र्याभावे नियतानुपूर्वीकत्वादिरूपोक्तविधापौरुषेयत्वे बाधाद्यभावात् । उक्तं च सुधायाम् । नियतैकप्रकारत्वमपौरुषेयत्वम् । एतदप्युक्तं गौरवदोषेणेति । क्रमाकृतकत्वस्याप्यपौरुषेयत्वप्रवेशे गौरवदोषेणेत्यर्थ इत्याद्युक्तेः।

चन्द्रिकाविवृतौ श्रीसत्यानंदतीर्थश्रीचरणा अपीत्थमेव व्याख्यासिषुः । तथाऽहि । तत्वनिर्णयतत्वसंख्यानटीकयोर्विरोधं परिहर्तुं शङ्कते । नन्विति । अत्र क्रमो नाम क्रमिकबुद्धिविषयत्वम् । ईश्वरबुद्धेः सर्वविषयसमूहालम्बनत्वेऽपि वेदस्य प्रमापकत्वसिद्धयेऽभिव्यक्तिविशेष क्रमस्याप्यावश्यकत्वम् । वर्णमात्रे प्रयोगप्रत्यययोरयोगात्क्रमस्य च सर्वगतनित्यवर्णानां स्वतो देशतः कालतश्चायोगादिति भावः । अत एवोक्तं तत्वनिर्णये । वर्णादयस्तत्क्रमात्मको वेदश्च नित्य एवेति सिद्धमिति । मैवमिति । न च तत्वसंख्याने वर्णमात्रग्रहणमुदाहृतप्रमाणविरोधात् । पौराणवर्णानामप्यविशिष्टत्वेन पृथङ्नित्यानित्यकोटौ निवेशायोगाच्च । पुराणपदेन तद्वाक्यात्मक ग्रन्थस्यैवोक्तावृगादिपदवाच्यग्रन्थस्यैव प्राधान्येन तदादित्वेन ग्रहणस्यौचित्याच्च । वाचा विरूपनित्ययेत्यादि विशेषवाक्यविरोधाच्च । नित्या वर्णाः समस्तशः । तथा वेदाः समस्ताश्च तथाऽव्याकृतमम्बरमिति तत्वसंख्यानटीकार्थनियामकवायुपुराणप्रमाण विरोधाच्चेति ज्ञेयम् ।

टीकावाक्यत्वाविशेषाद्विरोधशङ्कायां विष्णुतत्वनिर्णयटीकानुरोधेन तत्वसङ्ख्यानटीकैव कुतो न व्याख्येयेत्यतः प्रमाणमुक्त्वा युक्तो युक्तश्च यद्यर्थ आगमस्येत्यनुव्याख्यानोक्तं न्यायं चाह । युक्तं चैतदिति । न चेश्वरबुद्धिस्थत्वाविशेषेण पुराणानामप्यपौरुषेयत्वापत्तिः । कल्पभेदेन क्रमव्यत्यासाभावमात्रेणापौरुषेयत्वाभावस्य पुराणानि तदर्थानीत्यादौ समर्थितत्वात् । तर्ह्याप्तवाक्यस्याप्रामाण्यमेव प्राप्तमत आह । तट्टीकायामिति । ननु तर्हि सर्गे सर्गेऽमुनैवैत इति पुराणवाक्योक्तप्रत्यभिज्ञापरामर्शकस्य प्रत्यभिज्ञाविरोधस्योक्तत्वादित्यादि वाक्यस्य व्याख्यावसरे न च सादृश्यादेत एवेत्युक्तम् । तथा सत्यपौरुषेयत्वसिद्धेर्दुर्वारत्वादित्युत्तरटीकायां कथमीश्वरीयक्रमस्यैव कृतकत्वाभ्युपगम इत्यत आह । कृत्वाचिन्तयेति । अनादिभूतस्यापीशबुद्धिविषयीभूतवेदक्रमस्योत्पत्त्यङ्गीकारेऽपि पुराणादिव्यावृत्तमपौरुषेयत्वमक्षतमित्यभ्युपगमवादेनेत्यर्थः । अत एवोक्तमुपलक्षणं चैतत् । जन्मादिवाक्यगतिकथनविरोधाच्चेत्यपि द्रष्टव्यमिति ।

तर्हि कृत्वाचिन्तापक्षेऽत्र पूर्वपक्षेऽनादित्वोक्त्ययोगादाकाशाधिकरणादभ्यधिकाशंकोत्थानायोगादेतदधिकरणवैयर्थ्यमित्यत आह । **अनादित्वोक्तिरिति** । कृतकस्यापि पूर्वतनक्रमव्यत्यासेन क्रमान्तरस्य केनाप्यकरणात्तदधीनत्वम् । तावतापि पूर्वपक्षोदयसम्भवात् । एवं तत्वसङ्ख्यानटीकाया निरवकाशत्वेन तदनुसारेण तत्वनिर्णयटीकाया व्याख्येयत्वान्न तत्वनिर्णयटीकानुसारेण वेदस्य कृतकत्वसिद्धिः । तथा च वेदस्यानादित्वात्तत्स्वभावस्य गानत्राणकर्तृत्वादिरूपस्य प्रवृत्तिनिमित्तस्य नेशाधीनत्वमित्युपपादितम् ।

इदानीं तु मा भूत्तस्यानादित्वम् । न चैवमनादित्वोक्त्यनुपपत्तिरिति वाच्यम् । अनादित्वाभावेऽप्यनादित्वाभ्युपगमेन कृत्वाचिन्तयाऽनादित्वोक्ति सम्भवात् । न च कृत्वाचिन्तया नानादित्वोक्तिः सम्भवति । प्रयोजनाभावेन कृत्वाचिन्ताया एवानुपपत्तेरिति वाच्यम् । अनादिस्वभावनियामकत्व रूपमहागुणसिद्ध्यर्थमनादिस्वभावनिमित्तकशब्दान्तरसमन्वयन्यायः फलिष्यतीति प्रदर्शनार्थत्वेन तस्यावश्यकत्वात् । यथाऽऽकाशाधिकरणेऽवकाशप्रदत्वस्याचेतनस्वभावत्वाभावेऽपि सिद्धान्ते तस्येशतन्त्रत्वसमर्थनं स्वभावनियामकत्वरूपमहागुणसिद्ध्यर्थं स्वभावनिमित्तकशब्दान्तर समन्वयन्यायः फलिष्यतीति कृत्वाचिन्तया तथेदमपीति मनसि निधाय वा पक्षान्तरमाह । कृत्वाचिन्तयेति । कृत्वाचिन्तयानादित्वोक्तिरित्येकं वाक्यम् । अनादित्वाभावे तथा व्यपदेशे नियामकमाह ।। अनन्याधीनत्वादितीति ।

वस्तुतस्तु मूलपूर्वटीकातत्वनिर्णयटीकादिषु व्यामिश्रोक्तिरेव दर्शनभेदं व्यशिश्रणत् । न चैवमीश्वरबुद्ध्युपहितानां क्रमविशिष्टवर्णानां नित्यत्वाङ्गीकारे यद्यदभिन्नाभिन्नं तत्तेनाभिन्नमिति न्यायेन वर्णानां परस्परं तादात्म्यापत्तिरिति वाच्यम् । क्रमस्य व्यासज्यवृत्तित्वानङ्गीकारात् । न चैवं सति वर्णेऽप्येकैकस्मिन्नपि क्रमप्रत्ययापत्तिरिति वाच्यम् । एकैकवर्तिनोऽपि क्रमस्य परस्परमुभयनिरूप्यत्वेनैकस्मिंस्तज्ज्ञानापादनस्य संयोगादिस्थल इव निराकरणसम्भवात् ।

उदाहृतपाण्डुरङ्गीयादिटिप्पणीनां तु क्रमस्य व्यासज्यवृत्तित्वमभ्युपेत्य प्रवृत्तत्वेनोपलक्षणया अस्यापि पक्षस्य संमतत्वेन तद्विरोधाभावात् । एतच्च द्वित्वादिसङ्ख्याव्यतिरिक्तानां ''संयोगश्च विभागश्चे''त्यादिनैकैकवृत्तिता-समर्थनेनैव ज्ञापितमिति नात्र मूलान्वेषणे प्रयतितव्यम् । यद्यप्यत्र बहुवक्त-व्यमस्ति तथापि ग्रन्थविस्तरभयादुपरम्यते ।

**(पां.टि.)** स्वरूपेण आद्यन्तशून्यत्वस्य प्रकृतौ अपि सद्भावात् कथमनेन नित्यानित्यव्यावृत्तिः इत्यतः तद्व्याख्यान **कूटस्थतयेति**। निर्विकारत्वमित्यर्थः। ततश्च न प्रकृत्यादौ नित्यानित्ये अतिप्रसङ्गः। नापि विशेष्ये वैयर्थ्यमिति भावः।

केचित् तु 'अन्त्यावयविनि अतिव्याप्तिवारणाय विशेष्यभागः' इति आहुः । आद्यन्तशून्यत्वमेव नित्यत्वम् कूटस्थत्वं च तत्र हेतुतया उपात्त-मित्यपि आहुः ॥

ननु क्रमविशिष्टवर्णाः एव वेदः न तु अव्याकृताकाशवत् अर्थान्तरम्, वर्णाश्च नित्यत्वात् सर्वगतत्वाच्च स्वतःक्रमशून्याः इत्यतः क्रमः बुद्धिनिमित्त एवास्थेयः । उक्तं हि–

**वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।**
**व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ॥** इति ।

तत् कथं कृतकक्रमविशिष्टवर्णात्मकस्य वेदस्य नित्यत्वमुच्यते? अत एव उक्तं तत्त्वनिर्णयटीकायाम् 'न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः' इति, 'क्रमस्य कृतकत्वेऽपि' इति च । तत् कथम् एतत्? इति चेत् । अत्र वदन्ति एतट्टीकाऽनुसारेण 'न हि वयं वेदस्य' इत्यादि तत्त्वनिर्णयटीकाग्रन्थः व्याख्येयः । अत्र 'नित्या वेदाः' इति प्रमाणोपन्यासेन एतद्ग्रन्थस्य प्राबल्यात् । युक्तश्च एतत् । क्रमस्य सदा एव ईश्वरबुद्धिस्थत्वात् । अत एव उक्तं तत्त्वनिर्णयेऽपि 'सर्वज्ञत्वेन ईश्वरस्य तद्बुद्धौ सर्वदा प्रतीयमानत्वात्' इति । न च एवं टीकायां तन्निषेधानुपपत्तिः अस्मदादीन् प्रति प्रमापकत्वोप-

युक्तस्य अस्मदादिबुद्धिस्थस्य क्रमस्य उच्चारणाद्यधीनत्वेन कृतकत्वात्' इत्यभिप्रायेण तस्य उपपन्नत्वादिति ।

वयं तु ब्रूमः– न क्रमस्य अनादिनित्यत्वमङ्गीकारार्हम् । तथा सति वर्णधर्मस्य क्रमस्य यावद्द्रव्यभावित्वेन वर्णैः अत्यन्ताभेदप्रसङ्गेन, वर्णानां परस्परभेदवतामत्यन्ताभेदप्रसङ्गात् । अत एव चन्द्रिकायामपि इमामेव अनुपपत्तिं मनसि निधाय 'कृत्वा चिन्तया वा अनादिनित्यत्वोक्तिः' इति उक्तम् । ततश्च 'कृतकक्रमविशिष्टवर्णात्मकस्य वेदस्य नित्यत्वासम्भवात्, कथं तन्नित्यत्वोक्तिः? कथञ्च अव्याकृत आकाशस्य कूटस्थतया प्रमितत्वात् नित्यानित्यादिभावेन अनिर्दिष्टस्य नित्यत्वेन निर्देशः?' इत्यत आह । **अत्र वेदा इत्युपलक्षणमिति ।** अत्र उपलक्षणपदेन लक्षणासामान्यमुच्यते, न तु अजहत्स्वार्थलक्षणा । उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः । इत्यादौ लक्षणासामान्येऽपि तत्प्रयोगदर्शनात् । तथा च वर्णानाम् अव्याकृताकाशस्यैव च कूटस्थनित्यत्वेन अभिप्रेतत्वात् । न सङ्ग्राह्यस्य असङ्ग्रहः, असङ्ग्राह्यस्य च सङ्ग्रहः इति भावः ।

यत्तु 'वेदानाम् शृङ्गिग्राहकतया नित्यत्वप्रदर्शनमनुपपन्नम् । अव्याकृतह ाकाशादेः अपि तथाभूतत्वात्' इत्याशङ्क्य 'अजहत्स्वार्थलक्षणया 'वेद'-पदेन वार्तादेः अपि सङ्गृहीतत्वाददोषः' इत्येवं परत्वेन 'अत्र' इति ग्रन्थाव-तरणम्; तत्तु उक्तानुपपत्तिग्रस्तमिति दिक् ।

लक्षणीयं दर्शयति **पञ्चाशदिति ।** एवञ्च; **तच्च वेदानाम्,** 'नित्या वेदाः' इत्यादिपूर्ववाक्यस्य अपि कूटस्थत्वम्, वर्णानां 'नित्या वेदाः समस्ताश्च' इत्यादिप्रमाणे । 'क्रमेणैव तैर्वर्णैः' इति यदुत्तरवाक्यम्, तेन सिद्धमित्यर्थः । अत एव 'इत्यादि' इति आदिपदप्रयोगः इति ध्येयम् ।

**(का.टि.)** ॥ **क्रमेण त्रयं दर्शयिष्यन्निति** ॥ प्राधान्यक्रमेण नित्य-प्रदर्शनोत्तरं नित्यानित्यं प्रदर्श्य अनित्यं दर्शयिष्यन्नित्यर्थः । ननु वेदानामेव

नित्यत्वोक्तिरयुक्ता प्रकृत्यादीनामपि नित्यत्वादित्यतस्तद्व्यावृत्तं नित्यत्वं निर्वक्ति ॥ **अत्रेति** ॥ अस्मिन् ग्रन्थे । विवक्षितमिति शेषः । तेन **तत्वविवेकादौ** प्रकृत्यादेर्नित्यत्वोक्तावपि न विरोधः । तत्रान्यविधनित्यत्वस्य विवक्षितत्वादिति सूचितम् । अत्र नित्यत्वं नामाऽद्यन्तशून्यत्वम् । तत्र हेतुः ॥ **कूटस्थतयेति** ॥ अपरिणामितयेत्यर्थ इति **प्राञ्चः** । आद्यन्तशून्यत्वस्य प्रकृत्यादावति व्याप्तिरित्यतस्तद्व्याख्यानम् ॥ **कूटस्थतयेति** ॥ निर्विकारित्वमित्यर्थ इति **केचित्** । उक्तातिव्याप्तिवारणाय कूटस्थत्वे सतीति विशेषणान्तरोपादानमित्यन्ये । तेषामयमाशयः । **आद्यमते** तावदाद्यन्तशून्यत्वमाद्यन्तवदत्यन्तभिन्नत्वम् । तच्च नाऽद्यन्तवद्विकाराभिन्न प्रकृत्यादावति व्याप्तं अतः कूटस्थत्वं न लक्षणघटकमिति । **द्वितीयमते** यथा श्रुतस्याऽद्यन्ताभाववत्त्वस्य प्रकृत्यादि साधारणत्वात्कूटस्थत्वं विवक्षितम् । तच्च विकारसामान्यशून्यत्वम् । ध्वंसप्रागभावादेरपि जन्मादिविकारवत्त्वेनैव व्यावृत्तेर्नाऽद्यन्तशून्यत्वं पृथगुपादेयमिति ॥ **तृतीयमते** चापरिणामित्व रूपकूटस्थत्वस्यैव विवक्षितत्वात् ध्वंसाद्यव्यावर्तकत्वेन आद्यन्ताभाववत्त्वसार्थक्यमिति ।

अथ **मतत्रये**ऽप्यसम्भवः । नित्यानामपि द्वित्वादिगुणात्मना परिणामित्वात् । तेन भेदाभेदाङ्गीकाराच्चेति चेदत्राहुः । कूटस्थत्वं नाम द्रव्यरूपेणापरिणामित्वं द्रव्यानारम्भकत्वमिति यावत् । नित्यानां च द्रव्यानारम्भकत्वान्नोक्तदोषः । न च नित्यानामप्येतद्देशकालादि विशिष्टरूपद्रव्यारम्भकत्वमस्तीति शङ्क्यम् । विशिष्टस्याद्रव्यत्वादिति । एतच्च तृतीयमत एव सङ्गच्छते । न पूर्वमतयोः । आद्यन्तवदद्रव्यभिन्नत्वस्य द्रव्यविकारवैधुर्यस्य वा विवक्षायां प्रागभावादावतिव्याप्तितादवस्थात् । तस्मादाद्ये स्वनिष्ठगुणादि भिन्नत्वेनाऽद्यन्तवद्विशेषणीयम् । द्वितीये च विकारः । तेन वेदादेः सङ्ग्रहः, प्रागभावादेर्व्यावृत्तिश्चेति । ननु शब्दस्यैवानित्यत्वात्कथं वेदानामुक्तविधं नित्यत्वमत आह ॥ **तच्चेति** ॥

**नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः ।**
**सर्गे सर्गेऽमुनैवैत उद्गीर्यन्ते तथैव च ।**
**तत्क्रमेणैव तैर्वर्णैस्तैः स्वरैरेव नान्यथा ॥**

इत्यादिप्रमाणविरोधादेव वर्णात्मकशब्दानित्यत्वव्याप्यसिद्धमेवेत्याशयः ।

ननु क्रमविशेषविशिष्टवर्णा एव वेदो न त्वाकाशादिवदर्थान्तरम् । क्रमश्च नित्यानां न साक्षात्पौर्वापर्यरूपः सम्भवतीति पूर्वापरीभावापन्नबुद्धिविषयत्वरूपो वक्तव्यः । तथा च तादृशबुद्धीनामनित्यत्वात्कथं तद्धटितविशिष्टरूपस्य वेदस्य नित्यत्वमिति चेत् ।

अत्रैके **साम्प्रदायिकाः** । स्वाभाविक एव वैदिकवर्णक्रमः । न च नित्यानां क्रमायोगः ईश्वरशक्त्या तदुपपत्तेः । न च गकारादेः स्वत एवाकारोत्तरत्वे तस्य तत्पूर्वत्वं क्वापि न स्यात् विरोधादिति वाच्यम् । वैदिकवर्णानामानन्त्यैनैकस्योत्तरत्वेऽप्यन्यस्य पूर्वत्वोपपत्तेः । न च वर्णानां पञ्चाशत्वविरोधः पञ्चाशज्जातीयत्वमात्रोपगमात् । न च

**वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।**
**व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ॥**

इति तन्त्रसारविरोध इति वाच्यम् । तत्र देशकालकृतक्रममात्रनिषेधेन स्वाभाविकक्रमाविरोधात् । व्यक्तिक्रमकथनस्य च प्रणवादीनामुत्पत्ति क्रमस्वरूपनिरूपणपरत्वात् । न चैवं "न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः" इति **तत्वनिर्णयटीका**विरोध इति वाच्यम् । तस्या अभ्युपगमवादेन प्रवृत्तत्वात् । अन्यथैतट्टीकाविरोधात् । सप्रमाणत्वेनैतस्याः प्राबल्यात् । न चैवं पुराणादीनामपि नित्यत्वापत्तिः । लौकिकवर्णानां स्वाभाविकक्रमानङ्गीकारात् । एवं च वेदनित्यत्वे न कश्चिद्विरोध इत्याहुः ।

**केचित्तु** पञ्चाशद्वर्णैरेव सकललौकिकवैदिकव्यवहारोपपत्तेः प्रमाणा भावाच्च न पूर्वोक्तबहुकल्पना युक्ता । नापि क्रमस्य स्वाभाविकत्व-

मङ्गीकारार्हा। तथा सति वर्णधर्मस्य क्रमस्य यावद् द्रव्यभावित्वेन वर्णैरत्यन्ताभिन्नतया वर्णानां परस्पराभेदप्रसङ्गात्। तथा च क्रमस्य कृतकत्वान्न तद्विशिष्टवर्णात्मकस्य वेदस्य नित्यत्वम्। न चैवं मूलविरोधः। तत्र वेदपदेन पञ्चाशद्वर्णानामेव ग्रहणात्। **उपलक्षण**मिति टीकायाश्च जहत्स्वार्थलक्षणया वर्णाकाशपरमित्यर्थसम्भवात्। न च 'नित्या वेदाः समस्ताश्च' इति प्रमाण-विरोधः। तत्र वर्णानां पृथग्ग्रहणेन तदुपलक्षणायोगादिति वाच्यम्। "न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः। किं तु शब्दतोऽर्थतश्च सदैकप्रकारतां" इति टीकानुसारेण तद्व्याख्यानात्। न चैवमत्र तदुदाहरणासङ्गतिः। 'तैर्वर्णैः' इति वर्णानां कूटस्थनित्यत्वोक्तेः। अत एव **टीकायामित्यादीत्या**दिपदप्रयोग इति वर्णयन्ति।

**अन्ये** तु वैदिकवर्णक्रमो यदि नित्य एव तदा **तत्वनिर्णयटीका**विरोधः। यदि चानित्य एव तदा तत्क्रमेणेत्युदाहृतप्रमाणविरोध इत्यर्थापत्त्या द्विविध एवाङ्गीकार्यः। ईश्वरबुद्धिघटितो नित्योऽस्मदादिबुद्धिघटितस्त्वनित्य इति। ततश्च तद्विशिष्टरूपस्य वेदस्यापि द्वैविध्यमेव। तथा च वेदनित्यत्व-प्रतिपादकानामीश्वरबुद्धिघटित क्रमविशिष्टपरत्वात् तदनित्यत्वप्रतिपादका-नामस्मदादिबुद्धिघटित क्रमविशिष्टपरत्वान्न विरोध इत्याचक्षते।

**अपरे** तु न वेदद्वैविध्यं युक्तं प्रमाणाभावात्। तथात्वे चास्मदादि-पठ्यमानस्याज्ञप्रणीतत्वेनाप्रामाण्यप्रसङ्गात् अभ्युदयसाधनत्वाभाव-प्रसङ्गाच्च। 'ऋग्वेद एवाग्नेरजायत' इत्यादेरभिव्यक्त्यर्थतया व्याख्यान-वैयर्थ्याच्च। वेदस्य बुद्धिघटितत्वासम्भवाच्च। अन्यथा बुद्धेरश्रावणत्वेन वेदस्याश्रवणत्वप्रसङ्गात्। तस्मात्साङ्कल्पिकक्रमविशिष्टवर्णानामेव वेदत्वम्। यथा हि यजमानसङ्कल्पाद्विप्राणां पूजादौ क्रमस्तथा नित्यानामपि तदुपपत्तेः। न च सङ्कल्पस्याश्रावणत्वेन वेदस्याश्रावणत्वप्रसङ्गः। सङ्कल्पाधीनः सङ्कल्पाघटितो वर्णधर्मः क्रमोऽस्तीत्यङ्गीकारात्। एवं चेश्वरसङ्कल्पाधीनस्य वैदिकवर्णक्रमस्य नित्यत्वाद्वेदस्य नित्यत्वं सिद्धम्। न चैवमुक्तक्रमेण

वर्णानामभेदप्रसङ्गः । अन्योन्याभाववच्छेदकवर्णप्रतियोगिकक्रमस्यापर- वर्ण निष्ठत्वेनानेकधर्मत्वाभावात् । एवं कालिदासादिवाक्येष्वपि तत्तत्सङ्कल्पाधीन क्रम उत्पद्यत इति वदन्ति ।

**उपाध्याय**स्त्वेवमाह, साङ्कल्पिकक्रमः किं पौर्वापर्यमुतान्यः । नाद्यः । नित्यानां पौर्वापर्यस्य व्याहतत्वात् । नान्त्यः प्रमाणाभावात् । विप्रेष्वपि क्रमिकपूजाविषयत्वातिरिक्तक्रमविशेषस्यासिद्धेः । एवं तत्तद्वक्तृसङ्कल्पादेव तत्र तत्र क्रमविशेषाङ्गीकारे पदार्थमात्रेष्वपि तथाविधक्रमाङ्गीकारप्रसङ्गः । तस्मान्नित्यानां स्वाभाविकक्रमायोगाद्व्यक्तिक्रम एव वक्तव्यः । तदुक्तं

**वर्णानां देवतानां च नित्यत्वान्न क्रमः स्वतः ।**
**व्यक्तिक्रमं ब्रह्मबुद्धावपेक्ष्य क्रम उच्यते ॥** इति ।

तथा च क्रमेण भासमाना वर्णा वेदा इति फलितम् । यद्यपि क्रमेण भासमानत्वमेकवर्णभानोत्तरभानविशिष्टापरवर्णत्वरूपं न यावद्वर्णसाधारणः तथापि तादृशवर्णत्वरूपवाक्यानुपूर्वीघटकभानविशिष्टवर्णत्वरूपं बोध्यम् । एवं च तादृशभानस्येश्वरीयस्य नित्यत्वाद्वेदनित्यत्वम् । न च नित्यत्वे क्रमायोगः । उत्पत्यभावेऽपि व्यक्तिविशेषात्तदुपपत्तेः । न च क्रमिक-व्यक्त्यङ्गीकारे

**वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽनिशं यतः ।**

**इत्याचार्योक्ति**विरोधः । अनन्तमुखैर्युगपदखिलवेदोच्चारणेऽप्येकैकमुखेन क्रमिकव्यक्त्यविरोधात् । न चास्मदादिबुद्धिक्रमस्या नित्यत्वाद्वेदानित्यत्व-प्रसङ्गः । सामान्यतः क्रमिकभानविशिष्टवर्णानामेव वेदत्वात् । तादृश-विशिष्टस्य च सर्वदैव सत्त्वात् । तदुक्तं **तत्त्वनिर्णयटीकायां** ''क्रमविशिष्ट-वर्णा एव वेदः । क्रमश्च बुद्धिनिमित्त एव । ततश्च सर्वेषां सर्वथा वर्णविषय-विवक्षितक्रमोपाधिभूतबुद्ध्युपरम एव वेदे विनाशो वक्तव्यः । न चेश्वरस्य तथाविधबुद्ध्युपरमो युज्यते'' इति ।

एतेन क्रमस्य कालघटितत्वात्कालस्यानित्यत्वान्न वेदनित्यत्वमित्यपास्तम्। सामान्यरूपेण नित्यत्वाविरोधात् अत एव नोक्ताप्रामाण्यादिप्रसङ्गः। सामान्यतो वेदस्य प्रामाण्यद्यवधारणात्। विशेषस्य च सामान्यानतिरेकात्। नाप्यश्रावणत्वप्रसङ्गः। साक्ष्युपनीतक्रमविशिष्टवर्णानां श्रावणत्वोपपत्तेः। अन्यथोक्तटीकाविरोधात्। नचैवं पुराणादीनामपि नित्यत्वप्रसङ्गः। तत्रापीश्वरबुद्धिक्रमस्य ध्वंसप्रागभावाप्रतियोगित्वेन नित्यत्वादिति वाच्यम्। यस्य यद्रुपेणाऽद्यन्तशून्यत्वं कृत्स्नकालवृत्तित्वमिति यावत्, तस्य तद्रूपेण नित्यत्वमित्यङ्गीकारात्। पुराणादीनां च यः क्रमस्तद्विशिष्टरूपेण कृत्स्नकालावृत्तित्वान्न तद्रूपेण नित्यत्वम्। सामान्यतो बुद्धिविषयत्वविशिष्टवर्णादिरूपेण तु नित्यत्वमिष्यत एव। न चैवं कालस्यापि कालत्वादिरूपेण कृत्स्नकालवृत्तित्वान्नित्यत्वापत्तिः। धर्मिरूपेण कूटस्थत्वस्य विवक्षितत्वात्कालस्य च क्षणादिरूपस्य निर्विकारत्वरूपकूटस्थत्वाभावात्। न चैवं तत एव ध्वंसप्रागभावव्यावृत्तेराद्यन्तशून्यत्वं व्यर्थमिति वाच्यम्। यत्किञ्चिद्ध्वंसप्रागभावविशिष्टाकारादावतिव्याप्तिवारकतया तत्सार्थक्यात्।

एतेन वेदस्य कूटस्थत्वाङ्गीकारे 'न हि वयं' इत्यादि तत्वनिर्णयटीकाविरोधः। न चासावभ्युपगमवादः। 'नित्या वेदाः' इति प्रमाणोक्तनित्यत्वव्याख्यानप्रसङ्गात्। 'अखिलैरप्येकप्रकारेणैव पठ्यन्ते। एतदेवानादि नित्यत्वं' इति टीकाविरोधाच्च। अत आकाशगुणैश्शब्दैर्व्यज्यमनवर्णादयस्तत्क्रमात्मको वेदश्च नित्य एवेति मूले "वेदनित्यत्वस्य पृथग्विधानात् पृथगुपसंहार" इति टीकाविरोधाच्च 'न हि वयं वेदं कूटस्थनित्यं ब्रूमः' इति सुधाविरोधाच्चे'त्यादिकमपास्तम्। तत्र साक्षात्कूटस्थत्वस्य विवक्षितत्वादत्र पुनर्वर्णरूपेण कूटस्थत्वस्याभिप्रेतत्वेन विरोधाभावात्। इत्थं च 'नित्या वेदा' इति मूले 'तच्च वेदानां' इति टीकायां 'श्रुतिर्वेदः इति **तत्वविवेकटीकायां** च वेदग्रहणं सङ्गच्छते। अचेतनत्रैविध्यं चोपपद्यते। अन्यथा वेदस्य नित्यानन्तर्भावे तच्चातुर्विध्यप्रसङ्गादित्यन्यत्र विस्तरः।

ननु तथाप्याकाशादीनां नित्यत्वानुत्त्या मूलस्य न्यूनतेत्यत आह ॥ **अत्रेति ॥ उपलक्षणं** अजहत्स्वार्थलक्षणया यावन्नित्यपरमित्यर्थः ।

नित्यानित्यान्यचेतनानि

(टी.) नित्यानित्यं विभागेनाऽह

**.......पुराणाद्याः कालः प्रकृतिरेव च ।**
**नित्यानित्यं त्रिधा प्रोक्तं........ ॥**

**पुराणाद्याः पौरुषेयग्रन्था एका विधा । कालोऽपरा । प्रकृतिरन्या ।**

नित्यत्वादिप्रकारत्रैविध्योक्तिः

**ननु च त्रिधेति प्रकारत्रैविध्यमुक्तम् । न चात्र कश्चित्प्रकारो दर्शितः । किं तु वस्तुनिर्देश एव कृतः । नैष दोषः । यन्न सर्वथा कूटस्थं नाप्यनित्यमेव तदुच्यते नित्यानित्यम् । तस्य तिस्रो विधास्सम्भवन्ति । उत्पत्तिमत्त्वे सति विनाशाभावः । एकदेशे उत्पत्तिविनाशावेकदेशिनस्तदभावः । स्वरूपेणोत्पत्त्याद्यभावेऽप्यवस्थागमापायवत्त्वं चेति । तदेतद्विधात्रयमुक्तवस्तुत्रयेऽस्तीति तस्यैव ग्रहणं कृतम् ।**

**(रा.टि.) अपरेत्यादौ विधेत्यनुषङ्गः ॥ अनित्यमेवेति ॥** घटादिवदिति भावः ॥ **विनाशाभाव इति ॥** पुराणादिपौरुषेयग्रन्थस्य पुरुषैरुत्पाद्यमानक्रमवत्त्वेऽपि तस्य क्रमस्येश्वरबुद्धौ वेदक्रमस्येवोत्तरावधि शून्यतया प्रतीयमानत्वेन विनाशाभाव इत्यर्थः । क्षणलवाद्येकदेशैरुत्पत्ति विनाशवत्त्वेऽप्येकदेशवतोऽशिनः कालस्य प्रवाहत आद्यन्तशून्यत्वेनोत्पत्ति विनाशयोरभाव इत्यर्थः । जडोपादानप्रकृतेश्च स्वरूपत उत्पत्तिविनाशयोरभावेऽपि महदाद्यात्मकत्वावस्थाविशेषेण तौ स्त इति **तदेतद्विधात्रय-मुक्तवस्तुत्रयेऽस्तीत्युक्तम् ॥ तस्यैवेति ॥** वस्तुत्रयस्यैवेत्यर्थः ।

(**श्री.टि.**) **वस्तुनिर्देश एवेति ।** प्रकाराश्रयभूतपुराणादिरूपवस्तुनिर्देश एव कृत इत्यर्थः । उक्तदोष परिजिहीर्षया नित्यानित्यसामान्यलक्षणं तावदाह ॥ **यन्न सर्वथेत्यादिना ।** केवलं नित्यभिन्नत्वे सति केवलानित्यभिन्नमित्यर्थः। अत्र नित्येऽतिव्याप्तिवारणाय सत्यन्तम् । अनित्येतिव्याप्तिवारणायोत्तरभागः । उभयकेवलपदाभावे असम्भव इति सर्वं सार्थकम् ॥ **तस्येति ।** एतल्लक्षणाक्रान्तस्य नित्यस्येत्यर्थः ॥ विधाः प्रकाराः । विधात्रयं प्रकारत्रयम् ॥ **उक्तवस्तुत्रयेऽस्तीति ।** यन्न सर्वथेत्यादि सामान्यलक्षणाक्रान्ते पुराणादि रूपे वस्तुत्रय इत्यर्थः । तत्राद्यः प्रकारः पुराणे । उत्पत्तिमत्त्वेऽपि विनाशाभावात् । पुराणानामप्यन्यथाशब्दरचनमेवानित्यत्वमित्युक्तेः । द्वितीयः प्रकारः काले । क्षणलवाद्येकदेशानामुत्पत्तिमत्त्वेऽपि एकदेशिनः प्रवाहस्य तदभावात् । कालप्रवाह एवैको नित्यो न तुविशेषवानित्युक्तेः । तृतीयः प्रकारः प्रकृतौ स्पष्टः ।

(**स.टि.**) नित्यं निरूप्य क्रमप्राप्तं नित्यानित्यं निरूपयतीत्याह ॥ **नित्यानित्यमिति ॥** पुराणमाद्यं येषां ते पुराणाद्याः । आद्यपदग्राह्यस्य गणनायां पुरुषायुषपर्यवासानं स्यात् । अतः सामान्यतः समासार्थमाह ॥ **पुराणाद्या इति ॥** तथा च पुरुषकृतसन्दर्भक्रमवन्ति वाक्यानीत्यर्थः । एवं च पदपङ्क्ति ज्ञानमात्रेण प्रयुक्तस्य शुकतोकादिवाक्यस्य सङ्ग्रहो भवतीति ज्ञेयम् । एकाविधा एकः प्रकारः । एको भाग इति यावत् । अपरेत्यादौ विधेत्यन्वेति । इति त्रिधेत्यर्थः । तेनैतदन्यस्य नित्यानित्यत्वशङ्कानिरासः । ननु "पुराणाद्याः कालः प्रकृतिरेव च । नित्यानित्यं त्रिधा प्रोक्त"मिति प्रोक्तवतो मूलकारस्य नित्यानित्यप्रकारनिरूपणानिपुणतेत्याशङ्कते ॥ **नन्विति ॥** तर्हि किं कृतमाचार्यैरित्यत आह ॥ **किन्त्विति ॥ वस्तुनिर्देशः** धर्म्युद्देशः ।

परिहरति ॥ **नैष दोष इति ॥** प्रकारत्रयानिरूपणाख्यो दोष इत्यर्थः । तं प्रकारं दर्शयति ॥ **यन्न सर्वथेति ॥** सर्वथा सर्वप्रकारेण । कूटस्थं निर्विकारम् । **अनित्यमेव** उत्पत्तिमत्त्वे सति विनाशवदेव । तन्नित्यानित्यमुच्यत इत्यर्थः ।

केवलनित्यत्वानधिकरणत्वे सति केवलानित्यत्वानधिकरणत्वं नित्यानित्यत्वमित्यर्थः । सत्यंतानुक्तावव्याकृताकाशादावतिव्याप्तिः । तदपाकरणार्थं विशेषणभागः । तावत्युक्ते घटादौ केवलानित्येऽतिव्याप्तिरिति तत्पराकृत्यै विशेष्यभागः । **तस्य** नित्यानित्यस्य । ता विधा दर्शयति ॥ **उत्पत्तीत्यादिना ॥** इयं च विधा पुराणादेरर्थत एकप्रकारत्वाच्छब्दतो व्यत्यस्तेश्च सम्भवति । यथोक्तं "पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव त्वि"ति तत्वनिर्णयवाक्यव्याख्यानावसरे टीकायां "पौरुषेयत्वनिमित्त एवानित्यत्वव्यपदेशो न तु विनाशनिमित्त इत्यर्थः । अत एव त्वनित्यानीति सम्बन्ध" इत्यादिना । नन्वेवं चेत्पुराणानां नाशो नास्तीत्यागतमिति चेत् कोऽनेत्याह ॥ यथा वेदस्येशबुद्धिगतत्वं निमित्तीकृत्य नित्यत्वमुच्यते तथा पुराणेऽपि सुवचत्वात् । अत एव मुक्तैरपि पठ्यते । श्रूयते हि "ब्रह्मा त्वो वदति जातविद्या"मित्यादि । जातविद्यां पुराणम् । त्वः कश्चिद्ब्रह्मा वदतीति तदर्थः । ननु न पुराणस्योत्पत्तिरङ्गीकारार्हा । ईश्वरस्य सर्वज्ञत्वेनैष्यत्पुराणस्यापि तद्बुद्धिगतत्वादिति चेन्न । ईश्वरेण सदा वर्तमानतयाऽनुभूयमानत्वस्यानादित्वप्रयोजकत्वेन तत्करणात्पूर्वं तेषां वर्तमानतयानुभवाभावात् । किमत्र प्रमाणमिति चेत् पुराणजनिवाक्यान्यथानुपपत्तिरेवेति ब्रूमः । ननूत्पन्नपुराणानां नाशाभावे कल्पान्तरे पुनारचनं कुत इति शङ्कां तु "प्रमाणप्रश्नश्चेदुक्तादेव पुराणवाक्यादिति ब्रूमः । प्रयोजनप्रश्नस्त्वयुक्तः । ईश्वरप्रवृत्तेः सर्वत्र प्रयोजनशून्यत्वात् । परप्रयोजनानि तु सूक्ष्माण्युत्प्रेक्षितुं न प्रभवामः । भगवानाचार्योऽपीदानीं प्रयोजनाभावान्नावदीदिति तत्वनिर्णयटीकातो वारणीया ।

नन्वेकस्मिन्ब्रह्मकल्पे षट् त्रिंशत्सहस्रदिनानि भवन्ति । एवं च तेषु जातानां पुराणानामेकार्थत्वेऽपि पूर्वदिनपुराणेनैव तदर्थस्य ज्ञातत्वादुत्तरेषां निरधिकारिकत्वं स्यात् । अर्थी समर्थो विद्वान्हि तत्राधिक्रियते । ज्ञातेऽर्थिताभावादिति चेत् सत्यम् । तथापि सम्भवति देवानां तत्राधिकारः । पुराणस्य पूर्वपूर्वापेक्षयोत्तरोत्तरेषामर्थाधिक्यस्य विद्यमानत्वात् । न चैवं समानार्थता-

भावः । शते पञ्चाशन्न्यायेन पूर्वपूर्वपुराणार्थानामुत्तरोत्तरेषु सत्त्वात्तदपेक्षया तद्व्यवहारस्योपपन्नत्वात् । न चानन्तब्रह्मकल्पीयपुराणानां समानार्थत्वे तदानन्त्यं नोपपद्यते । एकैकार्थप्रतिपादकपदानां मितत्वेन जन्माद्यस्य यतः सृष्ट्याद्यस्य यतः सर्गाद्यस्य यतः जन्मप्रभृति यस्मादित्यादिपदसमूहपरिवर्तनेनापि भेदकानां मितत्वाद्ग्रंथानंत्यानुपपत्तेरिति वाच्यम् । ईशाचिंत्याद्भुतशक्त्यैवोपपन्नत्वात् । विस्तरस्तु सत्तत्वरत्नमालादितोऽनुसन्धेयः । द्वितीयप्रकारं दर्शयति ॥ **एकदेशैरिति** ॥ **एकदेशैः** निमेषाद्यैः । उत्पत्तिविनाशौ वर्तेते । **एकदेशिनः** कालप्रवाहस्य । **तदभावः** उत्पत्तिनाशाभावः । ननु कालावयवानामुत्पत्तिविनाशवत्त्वे तदुपादानं वाच्यम् । न च स्वयमेव स्वं प्रत्युपादानं भवति । विरोधात् । न च सर्वोपादानप्रकृतेस्तदेकदेशकालोपादानत्वमक्षुण्णमेवेति वाच्यम् । विकल्पासहत्वात् । सर्वजन्योपादानं या प्रकृतिः सैव कालोपादानमुतान्या । न प्रथमः । क्षणलवादिकालावयवानां सर्वव्याप्तत्वेन विशिष्टप्रकृतेरपि काल एवोपक्षीणत्वात् पृथग्जगदुपादानाभावेन निरुपादानकसृष्टेरभावात्तदभावापत्तेः । न द्वितीयः । असंमतेरिति चेदुच्यते । युगपदेव यावद्देशव्याप्तलवादिकालोपादानत्वं जगदुपादानत्वं चेशशक्त्या प्रकृतेर्घटते । यथोक्तं सुधायां वैशेषिकपरीक्षावसरे ''अनित्यत्वे कारणं वाच्यमिति चेत्सत्यम् । उपादानं तु प्रकृतिरेवे''ति । अस्माकं त्वीशशक्त्यैवोपपद्यत इति ।

अन्ये तु जगदुपादानप्रकृत्यतिरिक्ता कालोपादानप्रकृतिः । सा चैकं कालांशं स्पृष्ट्वा स्वयमुपरमते । तदुत्तरकालोपादानभूता प्रकृतिरन्यैव । ततोऽप्युत्तरकालस्योपादानं तु तत्पूर्वकालांशस्योपादानभूतप्रागुपरता प्रकृतिरित्येवं सा परिवर्तत इति । न च तत्र ज्ञापकाभावः । एतत्समाननिमित्तकारणस्थले विचारपूर्वं विनिष्कृष्टस्यात्रापि तत्त्वसम्भवात् । तथा हि वैशेषिकपरीक्षासुधायां ''स्यादेतत् । कालस्तावत्सर्वोत्पत्तिमन्निमित्तकारणम् । न च कालस्य कालान्तरं निमित्तमस्ति । तत्कथं तस्योत्पत्तिः ।

पूर्वःकालः परस्य कारणमिति चेन्न। इदानीं जात इत्यधिकरणतया कालस्य कारणतावधारणात्। कारणस्य कार्योत्पत्तिसमानकालतायाः गेहे जातो गोष्ठे जात इत्यादौ निश्चितत्वादित्यत आहेति कालस्य कालगत्वेनेति मूलमवतार्य व्याख्याय च।

ननु कालस्य कालगत्वेनेत्युक्तम्। तत्र किं कालः स्वगतः किं वा कालान्तरगतः। नाद्यः। स्वस्कन्धारोहणवद्विरुद्धत्वात्। न द्वितीयः। तदभावात्। भावे वा कालान्तरसृष्टिवैयर्थ्यात्। तस्याप्युपपत्तौ कालान्तराङ्गीकारप्रसङ्गादित्यतः सप्रमाणकमुक्तं विवृणोतीति ईशो देशश्च कालश्चेत्यादि मूलमवतार्य तदुपरि एतदुक्तं भवति। कालातिरिक्तकार्याणामेव कालोऽधिकरणतया कारणम्। न कालस्तु स्वयमेव स्वस्याधिकरणतया कारणम्। श्वो घटं स्रष्टाऽस्मीत्यत्रेव कालसृष्टिं वांछतः परमेश्वरस्याधि-करणतयोद्देश्यः कालः क इति प्रश्ने यः सृज्यः स एवेत्युत्तरं, अधिकरणाधि कर्तव्यता त्वेकस्यैव श्रुत्यादिसिद्धा। विशेषबलाच्चोपपद्यते। अतो न कालस्योत्पत्तौ काचिदनुपपत्तिरिती''ति। न चोपादानं तु प्रकृतिरेवेति सुधाविरोधः। प्रकर्षेण क्रियतेऽनयेति व्युत्पत्त्योपादानपरत्वात्तच्छब्दस्य।

न च कथं योगेन रूढ्यपहार इति शङ्क्यम्। व्याप्तकालावयवं प्रति प्रकृतेरुपादानत्वाङ्गीकारे पूर्वोपदर्शितबाधकादेवात्र रूढिपरिहारस्य न्याय्य-त्वात्। किं च व्याप्तैकक्षणं प्रति सर्वस्या उपादानत्वे चोत्तरक्षणं प्रत्युपादाना भावः प्रसज्यते। न च पूर्वक्षणनाशानन्तरन्तदुपादानतया प्राक्स्थितायाः प्रकृतेरुत्तरक्षणं प्रत्युपादानत्वमिति वाच्यम्। पूर्वक्षणविनाशोत्तरक्षणोत्पत्त्यो र्मध्ये कालाभावप्रसङ्गात्। तदभावे चोत्तरत्वस्यापि दुर्निरूपत्वात्। न च पूर्वक्षणविनाशसमय एवोत्तर क्षणोत्पत्तिरिति वाच्यम्। विनाशानन्तरमेव प्रकृतिभावप्राप्त्या नाशसमय उपादानाभावात्। नाशसमय इति समयशब्दस्य कालपरत्वेन काल सद्भावतद्ध्वंसयोर्यौगपद्यप्राप्त्याभावाभावयोर्विरोधा-भावप्रसङ्गात्। रीत्यन्तरादर्शनाच्च। तूष्णीमीशाचिन्त्यशक्त्येति वक्तु-

मनुचितत्वात्। अतो न त्रिगुणात्मकप्रकृतेरुपादानत्वं युक्तिसहमिति कालस्य काल एवोपादानमिति। विस्तरस्तु सत्तत्वरत्नमालाटीकातो बोध्यः।

तृतीयप्रकारं दर्शयति॥ **स्वरूपेणेति॥ स्वरूपेण** मूलरूपेण। अवस्थानं उपादेयानामागमापायित्वमुत्पत्तिविनाशसहितत्वम्। ननु मूले कथं प्रकृतिरित्येकवचनं गुणत्रयात्मिकायास्तस्या अनन्तत्वादिति चेत्। उच्यते। एकैव प्रकृतिः। अजामेकामिति श्रुतेः। तदप्येकत्वं नाव्याकृताकाशस्येव। अयःपिण्डादिवत्। यथा वालुकापिण्डस्य वालुकानां संश्लेषविशेषवत्त्वेनैक एवायं वालुकापिण्ड इति समुदायवैलक्षण्येन प्रत्यक्षादिसिद्धैकत्वाधिकरणत्वेऽपि स्थूलसूक्ष्मादितयाऽवस्थितवालुकानां भेदः प्रतीयते। एवमन्तर्भेदघटितमेव। अत एव शास्त्रे क्वचित्प्रकृतय इति बहुवचनं, क्वचित्प्रकृतिरित्येकवचनं च सङ्गच्छते। एवमेकैव प्रकृतिः सर्वत्र व्याप्ता।

**महान्तं च समावृत्य प्रधानं समवस्थितम्।**
**अनन्तस्य न तस्यान्तः सङ्ख्यानं वापि विद्यते॥** इत्युक्तेः।

महदादितत्वविनाशे तत्तत्सूक्ष्माण्यव्यक्ततामापद्यन्ते। गुणत्रयांशभूतमहदाद्युपादानभूतभागविशेषास्तु गुणत्रये विशंति। गुणत्रयेऽपि यद्रजस्तृतीयतात्पर्योक्तदिशा सत्वे तमसि च मिश्रीभवति। न तदा सत्वादिनाम। प्रकृतेरेव हि सोच्यते। इयं च साम्यावस्थाप्रलयः। उक्तं च गीताभाष्ये "अव्यक्तस्याप्यन्यथाभावाख्यो विनाशोऽस्ती"ति। प्रमेयदीपिकायां च "अन्यथाभावो वैषम्यपरित्यागेन साम्यावस्थापत्ति"रिति।

अथ,

**प्रकृतेः क्षोभकं रूपं दैवं नारायणाभिधम्।**
**यत्तेन प्रकृतेः क्षोभे प्राप्ते किंचिद्विकारिणः॥**

इति पूर्वमेकीभूतांशविशेषभूतस्य विभागे ततः किंचित्स्थूलत्वेनोपचयरूपविकारे सति विभक्तभागत्रयस्य सत्वं रजस्तम इति नाम। एवं

प्रकृतेरेकदेशतो गुणत्रयात्मना विकृतत्वेन समग्रप्रकृतेः क्षोभविशेषसद्भावेन च ''विकारोऽव्यक्तजन्म ही''ति ''प्रकृतिश्च जडत्वात्परिणामिनी''ति गीता भाष्ये, ''अव्यक्तस्य जन्मवतो विकारो जनिरुच्यत'' इत्येकादशतात्पर्ये, ''प्रधानं विकृतैरपीत्यनुव्याख्यानादौ च प्रकृतिजनिव्यवहारः । प्रकृति-विकारतया तज्जन्यत्वमपेक्ष्य ''त्रयः प्रकृतिजा गुणाः । ससर्ज भगवानादौ त्रीन्गुणान्प्रकृतेः पर'' इत्यादौ गुणत्रयस्य प्रकृतिकार्यत्वव्यपदेशः । वस्तुतो व्याप्तप्रकृतेरपि गुणत्रयसूक्ष्मभागरूपतया ''त्रिगुणात्मकं प्रधानं च रजः सत्वं तमस्तथे''ति जन्यसत्वरजस्तमसां सकाशात्पृथक् प्रधानस्यापि त्रिगुणात्मकत्वोक्तिश्चोपपद्यते । एतद्गुणवैषम्यं सृष्टिरित्युच्यते । प्रकृतेर्व्याप्तत्वं तु कार्यकारणात्मना । कार्यावस्थानप्रदेशे कार्यमेव वर्तते । न कारणप्रकृतिः । सा तु तदन्यदेश इत्येवं क्वचित्कार्यं क्वचित्कारणमित्येवं न मन्तव्यम् । किन्तु ''कारणेषु स्थितं कार्यं व्याप्तं कार्येषु कारण''मिति गीतातात्पर्योदीरितरीत्या बोध्यम् । ननु परिमितस्य महदादिकार्यस्य कथं व्याप्तप्रकृतिगतत्वमिति चेन्न । अधश्चोर्ध्वं प्रसृतास्तस्य शाखा इत्याद्युक्तेः परिमितानामपि महदा-दीनां सूक्ष्मांशैः स्वकारणकार्यव्याप्तत्वसम्भवात् । व्यक्तमेतद्गीताभाष्यप्रमेय दीपिकयोरित्यलम् । ततः किं प्रकृत इत्यत आह ।। **तदेतदिति ।।**

ननु त्रयोऽवयवा यस्य तत्त्रयमिति विधातिरिक्तावयविनोऽभावात्कथमिति चेन्न । समुदायातिरिक्तावयवाङ्गीकृतौ तदनङ्गीकृतौ विधा च विधा च विधा चेति विधास्तासां त्रयम् । एवं चेदवयविघटकत्वेन पृथक्पृथगवयवविधोप-स्थितेस्तयब्विवक्षिते चावयवे सम्भवतीति नायजोऽप्यनुपपत्तिरिति सम्भवात् । अयं प्रकारस्तु द्वित्रिसूत्रव्याख्यानावसरे तत्वसुबोधिन्यां ''कथं मुनित्रयमिती''त्याद्याशंक्य विस्तरतो निरूपित इति ततोऽनुसंधेयः । **उक्तवस्तुत्रये** पुराणाद्याः कालः प्रकृतिरित्युक्तवस्तुत्रये । **इति** इतिहेतोः ।

**(पां. टि.)** पुराणाद्या इति आदिशब्दसङ्ग्राह्यतावच्छेदकं धर्ममाह । **पौरुषेयग्रन्था इति ।। प्रकारत्रैविध्यमिति ।** 'धा'प्रत्ययस्य प्रकारवाचि-त्वादिति भावः ।

विभज्यतावच्छेदकविशेषोपपादनार्थं सामान्यविभज्यतावच्छेदकं दर्शयति **यन्न सर्वथेति** ॥ यद्वा नित्यानित्यं यथा नित्यानित्याभ्यां व्यावर्तते, तथा व्याचष्टे **यन्नेति** । कूटस्थत्वं हि अवधिविधुरत्वम् । अवधिश्च पूर्वोत्तरभेदात् द्विविधः । द्विविधोऽपि स्वरूपतः अंशतश्च इति अनेकविधः । ततश्च स्वरूपतः स्वांशतश्च पूर्वोत्तराभ्यामवधिविशेषाभ्यां रहितं यत्, तत् नित्यतया विवक्षितम् । तत् यत् न भवति– स्वरूपेणैव अवधिद्वयोपेतं यत् तत् अनित्यत्वेन विवक्षितम् । तत् च यत् न भवति तत् नित्यानित्यमित्यर्थः । **उत्पत्तिमत्त्वे सति विनाशाभाव इति** । पुराणादेः एवंरूपता च तत्त्वनिर्णय टीकादौ उपपादितप्रकारेण द्रष्टव्या ।

**(का.टि.)** ॥ **विभागेनाहेति** ॥ विभागेन सह निदर्शयतीत्यर्थः ॥ आद्यशब्दसङ्ग्राह्याणामानन्त्यात्समानार्थमाह ॥ **पौरुषेयग्रन्था इति** ॥ स्वतन्त्रवक्तृका इत्यर्थः । अन्यतात्पर्यानुपजीवितात्पर्यप्रयोज्या इति यावत् । तथा हि येन पुरुषेण पूर्वतात्पर्यमनुपजीव्य स्वयमेव यत्तात्पर्येण यद्वाक्यं प्रयुज्यते तदर्थकतद्वाक्यं तदीयमित्युच्यते । वेदस्य तु पूर्वतात्पर्यमनुसृत्यैव प्रयोगान्न पौरुषेयत्वमित्यवधेयम् । पुराणादीनां प्रत्येकं त्रैविध्यान्वयप्रतीति निरासायाह ॥ **एका विधेति** ॥ **एकाऽपराऽन्येति** ॥ आदाविति-शब्दोऽध्याहार्यः । मूले प्रकृतिश्चेत्यनन्तरमिति शब्दोऽध्याहार्य इति भावः ।

मूलस्य न्यूनतामाशङ्कते ॥ **ननु चेति** ॥ ननु पौरुषेयवाक्यत्वकालत्व प्रकृतित्वरूपप्रकाराणां दर्शितत्वात्कथं न्यूनतेत्यत आह ॥ **किं त्विति** ॥ **वस्तुनिर्देश एवेऽति** ॥ यथा ह्यनित्यं द्विविधमित्युक्ते तत्कथमित्याकाङ्क्षाया-मनित्यत्वोपपादकसंसृष्टत्वासंसऽष्टत्वरूपप्रकारद्वयं दर्शितं तथाऽत्र नित्या-नित्यत्वोपपादकप्रकारानुक्तेर्न्यूनतेत्याशयः । विवक्षितप्रकाराणामनुक्ता-वप्युदाहरणविशेषग्रहणेन सूचितत्वान्न न्यूनतेत्याशयेन समाधत्ते ॥ **नैष दोष इति** ॥

नित्यानित्यस्वरूपाज्ञाने तदुपपादकत्वस्य ज्ञातुमशक्यत्वात्तदेवादौ निर्धारयति ॥ **यन्नेति** ॥ सर्वथा कूटस्थं धर्मिस्वरूपेणापि कूटस्थं पूर्वोक्त नित्यत्वविशिष्टमिति यावत् ॥ **अनित्यमिति** ॥ केवलानित्यमित्यर्थः । स्वस्वरूपेणाद्यन्तोभयवदिति यावत् ॥ एतेन नित्यत्वानित्यत्वव्यावृत्तं नित्यानित्यस्वरूपमित्युक्तं भवति । न चैवं तत्तद्बुद्धिक्रमविशिष्ट वर्णात्मकस्य वेदपुराणादेः प्रातिस्विकरूपेणानित्यत्वापत्तिः । इष्टत्वात् । वेदादेरुक्त सामान्यरूपेणैव नित्यत्वाभ्युपगमात् । न चैवं नित्यत्वादेः साङ्कर्यप्रसङ्गः । तस्यादोषत्वात् । न चैवं विभागानुपपत्तिः वर्णप्रकृतिमहदाद्यसङ्कीर्णोदाहरणान्तरसत्त्वेनापि तदुपपत्तेः । एतेन कालक्षणानामनित्यान्तर्भावापत्तिरित्यपि समाहितं इष्टापत्तेः । अन्यथा कार्यप्रवाहस्य नित्यतया कार्यमात्रस्याप्यनित्यत्वानुपपत्तेः । तथा च यस्य यद्रूपेण पूर्वोक्तनित्यत्वानित्यत्वे न स्तः तस्य तद्रूपेण नित्यानित्यत्वमिति निष्कर्षः । एवं च नित्यस्याप्याकाशादेर्नित्यविशिष्टरूपेण नित्यत्वमनित्यविशिष्टरूपेणानित्यत्वं नित्यानित्यविशिष्टरूपेण नित्यानित्यत्वमित्यवधेयम् ।

॥ **उत्पत्तिमत्त्वे सतीति** ॥ अत्र नित्यव्यावृत्तये सत्यन्तम् । अनित्यव्यावृत्तये च विशेष्यभागः । तथा च यद्रूपेणोत्पत्तिमत्त्वे सति विनाशाभावस्तद्रूपवत्त्वमिति निष्कर्षः । तेन पुराणादेस्तत्तद् बुद्धिक्रमविशिष्टरूपेण विनाशित्वेऽपि नासङ्ग्रहः । सामान्यतः क्रमिकबुद्धिविषयत्वविशिष्टरूपेण विनाशाभावात् । तथा विधेश्वरबुद्धेरविनाशात् । उत्पत्तिमत्त्वे तु प्रमाणं वक्ष्यते ॥ **एकदेश इति** ॥ प्रवाहिरूपेणोत्पत्त्यादिमत्त्वे सति स्वरूपेण तदभाववत्त्वमित्यर्थः । अत्रापि नित्यव्यावृत्तये सत्यन्तम् । सादिप्रवाहवारणाय विशेष्यांशः ॥ ॥ **स्वरूपेणेति** ॥ अत्र कपालाद्यनित्यवारणाय सत्यन्तम् । नित्यव्यावृत्तये विशेष्यभागः परिणामित्वार्थकः ।

नन्वेतद्घटसंयोगप्रागभावविशिष्टाकाशादेर्भावरूपाज्ञानस्य च केवल नित्यत्वाद्यभावान्नित्यानित्यत्वं तावत्सिद्धम् । न चोक्तप्रकारत्रयेऽन्त-

र्भावोऽस्ति । एवमतीतकालप्रवाहस्य ध्वंसप्रागभाव प्रवाहयोश्च तदन्तर्भावाभावान्नित्यानित्यस्य त्रैविध्यानुपपत्तिः । नैष दोषः । उत्पत्तिविनाशपदयोरवधिमात्रोपलक्षकत्वात् । मूलोक्तोदाहरणानुसारेणैवोत्पत्तिविनाशपदोपादानात् । तथा च यत्किञ्चिदवधिमत्त्वे सति यत्किञ्चिदवधिशून्यत्वं प्रवाहिरूपेणावधिमत्त्वे सति स्वरूपेणावधिशून्यत्वं स्वरूपेणावधिशून्यत्वे सति परिणामित्वं च विभाजकतया विवक्षितम् । उक्तोदाहरणानां च यथासम्भवमेतेष्वन्तर्भावः ।

अत एव तृतीयप्रकारे उत्पत्त्यभावनिवेशेनैवोपपत्तेरादि पदवैयर्थ्यमित्यपास्तम् । उत्पत्तिविनाशयोः पृथगनुपादानेन वैयर्थ्यानवकाशात् ।

**नित्यत्वादिप्रकारत्रैविध्यपरीक्षा**

**(टी.) नन्वेवं सत्यवान्तरभेदैर्विधान्तरमप्युत्प्रेक्षितुं शक्यमित्यत एवेत्युक्तम् । तत्रोपपादकाकाङ्क्षायां प्रोक्तमित्याह । शास्त्रीयविधानामत्रैवान्तर्भावोऽन्यासामनादरणीयत्वं चेति ।**

**(रा.टि.)** ॥ **अवान्तरभेदैरिति** ॥ वर्णात्मना अविकारित्वेऽपि क्रमरूपेण तथात्वेनाविकारिविकाररूपैका विधा । अंशैराशुविनाशादिमत्त्वेऽप्यंशिनस्तदभाव इत्याशुविनाशादितदभावादि रूपाशांशिरूपा वा अपरा विधा । कारणात्मना सत्त्वेऽपि कार्यात्मनाऽसत्त्वेन सदसत्कारणकार्यरूपाऽन्या विधेत्यादिरूपेण नित्यानित्यविधातो विधान्तरमित्यर्थः ।

**(श्री. टि.)** तदुपपादनप्रकारमेव दर्शयति ॥ **शास्त्रीयेति** । याः विधाः अत्रोत्प्रेक्ष्यन्ते ताः किं शास्त्रीयाः उत तद्भिन्ना एवेति विकल्प्य आद्यपक्षस्योत्तरमुक्तं शास्त्रीयेति । द्वितीयस्योत्तर**मन्यासामिति** । तदर्थानीत्यनन्तरम् । ''सर्गेसर्गेऽन्यथैव तु । क्रियन्तेऽतस्त्वनित्यानी''ति वाक्यशेषो द्रष्टव्यः ॥

**(स.टि.)** ननु भावरूपाज्ञाने उत्पत्तिरहितत्वे सति विनाशित्वरूप-विधान्तरस्य सत्वात् वेदावान्तरप्रभेदे उत्पत्तिमत्त्वे सति विनाशाभावरूप-सामान्यधर्मे सति क्रमव्यत्यासाभावरूपविधान्तरसद्भावात्तत्कुतो मूल-कृन्नोदाजहार । यदि च तयोर्न लक्ष्यता तर्हि तत्रातिव्याप्तिः स्यात् । किं च ''मूल प्रकृतिरविकृति''रित्यादि साङ्ख्याद्युक्तविधान्तरस्याप्यत्राकथना-न्न्यूनता स्यादित्याशङ्क्य परिहरति ॥ **नन्विति** ॥ अवान्तरभेदैः पूर्वोक्त-भेदकधर्मैः । **उत्प्रेक्षितुं** विना मानं बुद्ध्या कल्पयितुम् । **उक्तं** प्रकृतिरेवेत्यत्र । **उपपादकाकाङ्क्षायां** नियामककाकाङ्क्षायाम् । **प्रोक्तं** प्रकर्षेणोक्तम् । आह भगवानानन्दतीर्थमुनिः । तेनापि किमुक्तमासीदित्यत आह ॥ **शास्त्रीयेति** ॥ शास्त्रशब्दात् ''वृद्धाच्छ'' इति छप्रत्यये तस्येयादेशे रूपम् । अविद्यायाः द्वितीये, वेदावान्तरप्रभेदस्य प्रथमेऽतर्भाव इत्यत्रैवान्तर्भाव इत्यर्थः । अत्र कण्ठतोऽनुक्तिस्तु तत्वविवेके पुराणस्येव बोध्या । **अन्यासां** सांख्या-द्युत्प्रेक्षितानाम् ॥ **अनादरणीयत्वमिति** ॥ अप्रामाणिकत्वादिति भावः ।

**(पां.टि.)** ननु भावरूप अज्ञाने– विनाशवत्त्वे सति उत्पत्त्यभाव-लक्षणम् । वेदरूप अवान्तरभेदे च उत्पत्तिमत्त्वे सति विनाशित्वाभावे च सति क्रमव्यत्यासाभावरूपं च नित्यानित्याविधान्तरम् । 'मूलप्रकृतिः अविकृतिः महदाद्याः प्रकृतिविकृतयः सप्त' इत्यादि साङ्ख्याद्युक्तं विधान्त-रञ्च उत्प्रेक्षितुं शक्यते इति कथं तत्त्रैविध्यपरिनिष्ठा? इत्याशयेन शङ्कते नन्विति ॥

**शास्त्रीयविधानामिति** । उदाहृतानामित्यर्थः । **अत्रेति** । नित्या-नित्यविधासु, एव इत्यर्थः । **अन्यासामिति** । अशास्त्रीयविधानामित्यर्थः ।

**(का.टि.)** ननु नित्यानित्यस्य पुराणाद्युदाहरणवैचित्र्यानुसारेण विभागे बहुविधत्वमेव वक्तुमुचितम् । पुराणादेरुत्पत्तिमत्त्वे सत्यविनाशित्त्वेन भावरूपाज्ञानादेर्विनाशित्वे सत्यनुत्पत्तिमत्त्वेन अतीतकालप्रवाहादेः प्रवाहि-

रूपेणोत्पत्तिविनाशवत्त्वे सति स्वरूपतोऽनादित्वमात्रेण ध्वंसप्रवाहस्य प्रवाहिरूपेणोत्पत्तिमात्रवत्त्वे सति स्वरूपतस्तदभावेन प्रागभावप्रवाहस्य प्रवाहिरूपेण विनाशमात्रवत्त्वे सति स्वरूपतस्तदभावेन वैचित्र्यात् । एवं प्रवाहिरूपेणोत्पत्त्यादि शून्यत्वे सति प्रवाहरूपेण तद्वत्त्वं स्वरूपेणोत्पत्ति-शून्यमात्रत्वे सति परिणामित्वमित्यादिविधान्तरं चोत्प्रेक्षितुं शक्यमतः कथं त्रैविध्योक्तिरित्याशयेन शङ्कते ॥ **नन्विति** ॥ त्रिधैव प्रोक्तमिति मूलयोजनया समाधत्ते ॥ **इत्यत इति** ॥ त्रिविधातिरिक्त नित्यानित्यस्यासत्त्वान्न त्रैविध्योक्तिरनुपपन्नेत्याशयः ॥ **तत्रेति** ॥ त्रिविधातिरिक्तासत्त्व इत्यर्थः ॥ **इत्याहेति** ॥ तथा चान्यस्यानुक्तत्वादेवा सत्त्वमिति भावः । ननु प्रदर्शित-वैचित्र्यस्य तन्त्रोक्तत्वात्कथमनुक्तत्वमित्यतोऽभिप्रायं पूरयति ॥ **शास्त्रीयेति** ॥ पुराणादेरित्युक्तप्रकाराणां शास्त्रीयत्वेऽप्युक्तप्रकारत्रय एवान्तर्भावात् तदवान्तरत्वादिति यावत् । एवमित्याद्युक्तप्रकाराणामशास्त्रीयत्वेना प्रामाणिकत्वान्नोक्तत्रैविध्यभञ्जकत्वमिति भावः ।

**(टी.) अथ वा 'पुराणानि तदर्थानि' 'सर्वे निमेषा जज्ञिरे' 'विकारोऽव्यक्तजन्म हि' इत्याद्यागमपरिग्रहार्थं प्रोक्तमित्युक्तम् । अत एव विरोधोऽपि परिहृतः ।**

**नन्वत्र यस्योत्पत्त्यादिकं तदनित्यमेव । यस्य तु नास्ति तन्नित्यमेव । नित्यानित्यं क्वास्तीति । मैवम् । स्यादेतदेवम् । यद्यंशांशिनोर्विकार-विकारिणोर्वा अत्यन्तभेदः स्यात् । न चैवमित्यन्यत्रोपपदितमिति ।**

(रा.टि.) पुराणानामुत्पत्तिमत्त्वे मानं-

**पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु ।**
**क्रियन्ते**........................ ॥ इति ।

कालैकदेशोत्पत्तौ मानं **सर्व इति** । प्रकृतेस्स्वरूपतो जन्माद्यभावेऽपि महदाद्यात्मना विकारोऽव्यक्तस्य प्रकृतेर्जन्मेत्यत्र विकार इत्येतन्मानम् ।

सर्वेऽपि वादिनो विरोधान्नित्यानित्यं न मन्यन्त इति पक्षं निराह ॥ **अत एवेति** ॥ आगमसिद्धत्वादेवेत्यर्थः ॥ **अन्यत्रेति** ॥ तत्वविवेकादौ ।

**(श्री.टि.) विकार इति ।** महदाद्यात्मना परिणाम इत्यर्थः ॥ **आगमेति ।** पुराणकालप्रकृतीनामनित्यत्वप्रतिपादकागमेत्यर्थः ॥ **अत एवेति ।** आगमबलादेवेत्यर्थः ॥ **विरोधोऽपीति ।** नित्यानित्यत्वयोरेकत्र समावेशाङ्गीकारे विरोध इत्यर्थः । कालप्रकृत्योर्नित्यानित्यत्वमाक्षिपति ॥ **नन्वत्रेति ।** अत्र काले प्रकृतौ चांशांशिनोरेकदेशैकदेशिनोः ॥ **न चैवमिति ।** तथाचांशांशिनामभेदेनांशस्यानित्यत्वे तदभिन्नस्य नित्यस्यांशिनोप्यनित्यत्वम् । विकारस्यानित्यत्वे तदभिन्नस्य नित्यस्याविकारिणः सूक्ष्मभागस्याप्यनित्यत्वमिति नित्यानित्यवस्तुसिद्धिरिति भावः ॥

**(स. टि.)** ननु पुराणघटकवर्णानामनादित्वात् कालस्य वैशेषिकादिभिर्विभुत्वादनादिनित्यतयाङ्गीकारात् । प्रकृतेरपि साङ्ख्येन तथाङ्गीकृतत्वात्कथं पुराणाद्या इत्युक्तमित्याशङ्कापरिहारत्वेनापि ''प्रोक्त''मित्येतद्व्याख्याति ॥ **अथवेति ॥** पुराणानि तदर्थानीति प्रथमकल्पे प्रमाणम् । सर्वे निमेषा जज्ञिर इति द्वितीये । विकारोऽव्यक्तजन्म हीति प्रकृतिजनिरूपतृतीय इति विवेकः । आदिपदेन स्थलत्रयेऽप्युत्पत्तिप्रतिपादकवाक्यान्तराणि ग्राह्याणि । एतेनान्यदपि सिद्धमित्याह ॥ **अत एवेति ॥** प्रमाणप्रमितत्वादेवेत्यर्थः । विरोधः नित्यत्वानित्यत्वयोरेकत्र सहानवस्थानरूपः । ननु भवत्वियं पुराणे व्यवस्था कालप्रवाहप्रकृत्योस्तु सा न सम्भवतीति शङ्कते ॥ **नन्विति ॥** यस्य उपचयभागस्य । यस्य अंशिनः । तत् उत्पत्त्यादि । क्वास्ति व्यधिकरणत्वादिति भावः । उत्तरमाह ॥ **मैवमिति ॥ एतत्** व्यधिकरणत्वम् । यदीति वाक्ये ''विशिष्टशुद्धयो''रित्यपि पूरणीयम् । अत्यन्तभेदः तार्किकमत इव । **अन्यत्र** तत्वविवेके । उपपादितं पुराणादि येनांशेन नित्यं तमंशं नित्यवर्गे निधायेत्यादिनोपपादितमित्यर्थः । यद्वा ''तंतुभ्योऽन्यः पटः साक्षात्कस्य दृष्टिपथं गत'' इत्यादिनाऽन्यत्र गीता-

तात्पर्यादावुपपादितमित्यर्थः । इतिशब्दो "नित्या वेदा" इत्यादि-कारिकाव्याख्यासमाप्तौ । तथा हि तन्तुसमूहे पट इति मतिर्जायते । अतोऽभेदः । नैकस्मिन्नेव तन्तौ तद्बुद्धिरिति भेदश्च । पूर्वोत्तरभावापन्ना अनेके करिण एव करिप्रवाह इति, एकस्मिन्करिणि न प्रवाह इति चाबाधित प्रतीतेर्भेदाभेद एकत्र प्रेक्षावदनुशिक्षितः सम्भवति । यथा वाऽहिमूषकादीनां स्वभावतो विरोधिनामृष्याश्रमे मिश्रीभूयावस्थानं तथा अत्रापीति न विरोधः। सन्न्यायरत्नावल्यां च "अंशिनोंऽशै"रित्यनुव्याख्यानविवरणरूपिण्यां "अशेषांशैर्विनाऽभावादंशिनोऽभेदः । एकैकांशेन विनापीतरांशात्मकतया भावाद्भेद इति भेदाभेदावनुभवसिद्धावित्यर्थ" इति ।

नयचन्द्रिकायां च "अंशिनः सर्वांशैरभेदः । सर्वांशैर्विनांऽशिन एवा-भावात् । एकैकांशेन भेदाभेदौ । तद्विनाप्यंशिनोऽवस्थाना"दिति । अत्र च चेतनेऽचेतने च यावद्द्रव्यभाविनां धर्माणां धर्मिणाऽत्यन्ताभेदः । चेतन एवायं नियमः । अचेतने यावद्द्रव्यभाविनामपि भेदाभेदौ नात्यन्ताभेद इति द्वौ पक्षौ । उभयत्रापि बहुमूलटीकासंमतेरिति । विस्तरस्तु "अत्र प्रायः सुधानु-सारेण चर्चा क्रियत" इत्यारभ्य क्रमादनुव्याख्यानगीतातात्पर्योपाधिखण्डन-टीकान्यायदीपिकाबृहद्भाष्यसमयचरणसुधाछान्दोग्यभाष्यऋग्भाष्य टीका-वादावलीश्रीपद्मनाभतीर्थश्रीचरणरचितोपाधिखण्डनटीकाः पुनरपि ऋग्भाष्य वैशेषिकपरीक्षासुधारम्भणाधिकरणसुधातत्वविवेकटीकाः पुनर्गीता-तात्पर्योपाधिखण्डनमन्दारमञ्जरीवाक्यान्युदाहृत्य सार्धशतग्रन्थ्या च "इत्येषा दिगि"त्यन्तेन सत्तत्वरत्नमालायामनुसन्धेयः ।

(पां.टि.) ननु वर्णानां नित्यविभुत्वात्, कालस्यापि वैशेषिकैः नित्य-विभुत्वाङ्गीकारात्, मूलप्रकृतेः अपि साङ्ख्यैः अनादित्वाङ्गीकारात्, कथं पुराणादेः उत्पत्त्यादि? इत्याशङ्कापरिहारत्वेनापि 'प्रोक्तम्' इत्येतत् व्याचष्टे **पुराणानि तदर्थानीति** । 'पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु । क्रियन्तेऽतस्त्वनित्यानि तदर्थाः पूर्वसर्गवत् ।।' इति वाक्यस्य प्रतीकग्रहणम्

इदमिति भावः । **अत एवेति** ॥ नित्यानित्यम् 'यन्न सर्वथा कूटस्थं नापि अनित्यमेव' इति यतो विवक्षितम्, न तु 'ध्वंसाप्रतियोगित्वे सति तत्प्रति-योगित्वरूपम्'; अत एव इत्यर्थः । एकस्यैव ध्वंसाप्रतियोगित्वे सति तत्प्रतियोगित्वस्य विरुद्धत्वेऽपि, उक्तरूपनित्यानित्यत्वाङ्गीकारे विरोधा-भावादिति भावः ॥ नित्यानित्याङ्गीकारे हेतुविरोधोऽपि, नित्यानित्यत्वस्य आगमसिद्धत्वात् एव परिहृतः इत्यर्थः इत्यपि आहुः । **अन्यत्रेति** । 'कार्य-कारणयोश्चैव' इत्यादिना तत्त्वविवेके इत्यर्थः ॥

'ननु भवतु उत्पत्तिमत्त्वे सति विनाशाभावात् पुराणादेः नित्या-नित्यत्वम्; कालप्रकृत्योः तु– यस्य कालांशस्य प्रकृतिविकारस्य च उत्पत्ति-विनाशौ तद्द्वयमपि अनित्यमेव । यस्य तु कालप्रवाहस्य प्रकृतिमूलरूपस्य च न उत्पत्तिविनाशौ तद्द्वयं नित्यमेव इति न नित्यानित्यत्वम्' इति आशङ्कते **नन्विति** । अंशयादेः अत्यन्तभेदाभावेन वस्त्वैक्यात्, नित्यानित्यत्वयोः एकवस्तुनिष्ठतया नित्यानित्यत्वं कालप्रकृत्योः सम्भवति इत्याह **स्यादेतदेवमिति** ॥

यद्वा 'उत्पत्तिमत्त्वे सति' इतिवाक्यं 'विशेष्यस्य उत्पत्त्यभावेऽपि विशिष्टस्य उत्पत्तिमत्त्वे सति विनाशाभावः' इति व्याख्येयम् । तथा च क्रमविशिष्टवर्णानामेव पुराणादित्वेन उक्तविधा पुराणादौ अपि अस्ति इति भावः । 'नन्वत्र' इत्यादिशङ्कावाक्यम्' 'यस्य–पुराणादेः विशिष्टस्य उत्पत्तिः, कालांशादेः उत्पत्तिविनाशौ, तत्त्रयम् अनित्यम् एव । यस्य तु– वर्णाख्यस्य विशेष्यस्य कालप्रवाहादेश्च न उत्पत्त्यादि, तत्त्रयं नित्यमेव । इति न नित्यानित्यं नाम तृतीयराशिः अस्ति; इति योज्यम् ।

परिहारग्रन्थे च 'विशिष्टशुद्धयोः' इति शेषः । एवञ्च विशिष्टशुद्धादेः अत्यन्तभेदाभावेन नित्यानित्यत्वयोः एकवस्तुनिष्ठतया, नित्यानित्या तृतीय-राशिः सम्भवति इति भावः । अत एव तत्त्वविवेकटीकायाम् 'पुराणादि येन अंशेन नित्यम् तमंशं नित्यवर्गे निधाय' इति उक्तमिति ध्येयम् । **अन्यत्र–** तत्त्वविवेके, 'कार्यकारणयोश्चैव' इत्यादिना इति शेषः ॥

(का.टि.) ननु पुराणादेः पूर्वकल्पस्थितस्यैवोत्तरकल्पेऽभिव्यक्ते र्वेदवन्नित्यत्वमेव । कालप्रकृत्योरपि नित्यत्वमेव तन्त्रान्तरसिद्धमतः कथमेषां नित्यानित्यत्वमित्याशङ्कानिवर्तकत्वेनापि **प्रोक्त**मित्येतद्व्याचष्टे ।। **अथ वेति** ।।

**पुराणानि तदर्थानि सर्गे सर्गेऽमुनैव तु ।**
**क्रियन्तेऽतस्त्वनित्यानि तदर्थाः पूर्वसर्गवत् ।।**

इत्यादिवचनेन पुराणादेरुत्पत्तिमत्त्वावगमादिति भावः ।

न च पुराणादेः क्रमविशेषविशिष्टवर्णात्मकत्वात्क्रमस्य बुद्ध्युपाधित्वाद् । बुद्देश्चेश्वरीयाया अनादित्वात्कथमनित्यत्वमिति वाच्यम् । एतत्कल्पीय-व्यक्तिक्रमस्य पूर्वकल्वेष्वभावादेव तदुपपत्तेः । उत्तरकल्पेषु तत्सद्भावस्य प्रमितत्वान्न विनाशित्वप्रसङ्ग इति बोध्यम् । ननु चोत्पत्तिमतां भावानाम-विनाशित्वादेर्विरुद्धतया कथं पुराणादिषु तदुभयाङ्गीकार इत्याशङ्कानिवारकत्वे नापि **प्रोक्त**मित्येतद्व्याख्याति ।। **अत एवेति** ।। **प्रोक्त**मित्युक्तत्वादेवेत्यर्थः ।

यद्वा नित्यत्वानित्यत्वयोरविरोधः प्रागुक्तः । तत्प्रकारस्तु नोक्त इत्यत आह ।। **अत एवेति** ।। नित्यत्वानित्यत्वोपपादकप्रकारत्रय सूचनादेवेत्यर्थः ।

**अत एव** नित्यानित्यत्वस्य 'यन्न सर्वथा' इत्यादिनोक्तरूपत्वादेव ध्वंसाप्रतियोगित्वे सति तत्प्रतियोगित्वरूपनित्यत्वानित्यत्वस्य विरोध-शङ्काऽपि परिहृतेत्यर्थ इति **केचित्** ।

नन्वेतावताप्यपरिहृतो विरोधः । विशिष्टशुद्धयोरत्यन्ताभेदेनांशया-देरत्यन्तभेदेन च पुराणादीनामुत्पत्त्याद्ययोगात् । विशिष्टोत्पत्तिवचनस्य विशेषणमात्रविषयत्वेनाव्यक्तजन्मोक्तेरौपचारिकत्वेन च तद्वचनविरोधा-भावादिति भावेन शङ्कते ।। **नन्विति** ।। **अत्र** पुराणादिषु । **यस्य** विशेषणांशादेः । **यस्य** विशेष्यांश्यादेः ।

एतेन विशिष्टस्य पुराणादेरुत्पत्त्यादिमत्वेऽपि नित्यानित्यत्वस्योपपादि तत्वात्तदाक्षेपानुपपत्तिरित्यपास्तम् । विशिष्टस्य विशेष्यानतिरिक्तत्वात् ।

**यदी**त्यनन्तरं विशिष्टशुद्धयोरत्यन्ताभेदः स्यादिति पूरणीयम् । **अन्यत्र** तत्वविवेकादौ । **कार्यकारणयोश्चे**त्यादिना भेदाभेदस्य प्रतिपादितत्वादिति भावः । एवं च पुराणादित्रयस्यापि नित्यानित्यत्वमुपपादितं भवति । अंशांश्यादेरत्यन्तभेदाभावेन तृतीयराशिसम्भवादिति तत्वविवेकटीकाया-मत्यन्तभेदस्यैवाभावेनेत्यर्थः । एतेन विशिष्टशुद्धयोः क्वचिदत्यन्ताभेदस्य क्वचिद्भेदाभेदस्य लाभात् पुराणादीनां वर्णादिना खण्डितत्वेन भिन्ना-भिन्नतया नित्यानित्यत्वोपपत्तिरित्याशयः ।

**केचित्तु** 'उत्पत्तिमत्त्वे सति' इति वाक्यस्य विशेष्यरूपेणोत्पत्त्यादि-रहितस्योत्पत्तिमत्त्वे सति विनाशाभाव इत्यर्थः । शङ्काग्रन्थे च विशिष्टशुद्ध-योरप्यत्यन्ताभेदेन पुराणादेर्विशेष्यरूपेणोत्पत्त्यादिराहित्याभावान्न नित्या-नित्यत्वमित्याशयः । परिहारग्रन्थे च विशिष्टशुद्धयोरिति शेषः । तथा च पुराणादेर्विशिष्टरूपेणोत्पत्तिमत्त्वेऽपि विशेष्यभूतवर्णरूपेण तदभावा-न्नित्यानित्यत्वमिति व्याचक्षते ।

वस्तुतो नन्वस्तु पुराणादेर्नित्यानित्यत्वम् । उत्पत्तिमत्त्वे सत्यविनाशि-त्वस्य प्रोक्तत्वेन विरोधाभावात् । न तु कालप्रकृत्योः । अंशांश्यादेरत्यन्त-भेदेनोत्पत्त्यादिमत्त्व तदभावयोरेकनिष्ठत्वायोगादिति शङ्कते ॥ **नन्विति** ॥ **यस्य** क्षणादेरुत्पत्त्यादिमत्वं न तस्य तद्राहित्यं **यस्य** प्रवाहादेस्तद्राहित्यं न तस्य तद्वत्त्वम् । अत उत्पत्त्यादिमत्त्वतद्राहित्योभयाक्रान्तं क्वास्तीत्यर्थः । तथा च नित्यानित्यस्य त्रैविध्यानुपपत्तिरित्यभिसन्धिः । परिहारस्तु यथाश्रुत एव योज्यः । न चैतत्पक्षे पुराणादि येनांशेन नित्यं तं नित्यवर्गे विधाय येनांशेनानित्यं तमनित्यवर्गे विधायायं विभाग इति तत्वविवेकटीकाविरोध इति वाच्यम् । तत्र निरवधिकत्वसावधिकत्वरूपनित्यानित्यत्वाभ्यां द्वैविध्यस्यैवोक्तत्वेन पुराणादेस्तदन्तर्भावाऽवश्यकत्वादित्यवधेयम् ।

### अनित्यविभागः

(टी.) अनित्यं विभज्य दर्शयति

**.... ..... ..... अनित्यं द्विविधं मतम् ॥ ८ ॥**
**असंसृष्टं च संसृष्टं.... ..... ...... ॥**

**सम्यक्सृष्टं संसृष्टम्। अतथाभूतमसंसृष्टम्।**

### अनित्यविभागपरीक्षा

**सम्यक्ताया इयत्ताभावात्त्रैविध्याद्यपि किं न स्यादित्यतो मत-मित्युक्तम्। तद्वक्ष्यामः।**

(रा.टि.) ॥ **वक्ष्याम इति** ॥ सूक्ष्मरूपेणेत्यादिनेति भावः।

(श्री.टि.) **त्रैविध्याद्यपीति**। नित्यानित्यवत् सम्यगसम्यक्सृष्टं किञ्चि-द्वस्त्वङ्गीकृत्येति भावः ॥ **मतमिति**। मननविषयीकृतं युक्तियुक्तमितीति यावत् ॥ **तच्चेति**। द्वैविध्यं मतत्वं चेत्यर्थः ॥ **वक्ष्याम इति**। नन्वेषां चतुर्विंशतितत्वानामित्यादिनानुपदमेवेति भावः।

(स.टि.) प्रतिज्ञानुसारेण प्रकृतमनुसरति ॥ **अनित्यमिति** ॥ असंसृष्टं च संसृष्टमिति निर्देशः प्राधान्यमनुसृत्येति बोध्यम्। **सम्यक्** सामीचीन्येन। अतथाभूतं असम्यक् सृष्टम्। **इयत्ता** मर्यादा। तस्या अभावात्। अन्यूनाति-रिक्तवर्तिनः एकस्य सम्यक् सृष्टत्वस्य दुर्निरूपत्वादिति भावः। **किं न स्यात्** किं न भवेत्। अनेन द्वैविध्यस्य प्रमाणसिद्धत्वान्न त्रैविध्याद्यङ्गीकारार्ह-मिति सूचयति। तत्किं प्रमाणमित्यत आह ॥ **तदिति** ॥ **तत्** अनित्य-द्वैविध्यस्य प्रमाणप्रमितत्वम्। **वक्ष्यामः**। नन्वेषां चतुर्विंशतितत्वा-नामित्यादिनेति ज्ञेयम्।

(पां. टि.) **अतथाभूतम्** सम्यक्सृष्टं न इत्यर्थः। **सम्यक्ताया इयत्ता-भावादिति**। अन्यूनानतिरिक्तस्य सम्यक्त्वस्य निर्वक्तुमशक्यत्वादित्यर्थः ॥

**मतमित्युक्तमिति** । युक्त्या विचार्य सम्यक्ताया निर्वक्तुं शक्यतया द्वैविध्यमेव सिद्ध्यति इत्यर्थः । **तद्वक्ष्याम इति** । 'नन्वेषाम्' इत्यादिना आक्षेपपूर्वकम् 'साक्षान्मूलरूपस्य नित्यस्य अभावे सत उत्पन्नत्वम्–संसृष्टत्वम्, साक्षान् मूलरूपस्य नित्यस्य सत्त्वेऽपि उत्पन्नत्वम्–असंसृष्टत्वम्' इति वक्ष्यामः इत्यर्थः ।

**(का.टि.)** ॥ **विभज्य दर्शयतीति** ॥ पदद्वयेन विभज्योत्तरेण निदर्शयतीत्यर्थः । असंसृष्टं निर्दिशतीत्यादेरवान्तरवाक्यावतरणत्वान्न पुनरुक्तिः । असंसृष्टपदार्थज्ञानस्य संसृष्टपदार्थज्ञानाधीनत्वादादौ संसृष्ट-पदार्थमाह ॥ **सम्यगिति** ॥ **इयत्ता** स्वतोऽधिकसम्यक्ताराहित्यम् । तदभावात् अवान्तरवैचित्र्यवत्त्वादिति यावत् ॥ **त्रैविध्यादीति** ॥ किं चित्सम्यक्त्वाति-सम्यक्त्वरूपप्रकारद्वयविवक्षायां त्रैविध्यम् । ततोऽधिकसम्यक्त्वादिविवक्षायां चातुर्विध्यादीत्यर्थः । अयं भावः । संसृष्टासंसृष्टयोरुत्पन्नत्वसाम्येऽपि नित्या-नित्योपादानकत्ववैचित्र्येण द्वैविध्यवत् । नित्योपादनकानित्योपानकोपादान-कत्वादिवैचित्र्येण त्रैविध्यादिकमपि सम्भवति । प्रकारान्तरसम्भवेऽप्यन-वस्थाभयाद्वैविध्ये-नानुगमः कृत इति चेत्तर्ह्यैकविध्यमेवास्तां लाघवादिति ।

**मत**मित्यस्य युक्त्यागमसंमतमित्यर्थः । तथा चावान्तरवैचित्र्यज्ञानाय विभागस्यावश्यकत्वे द्वैविध्योक्तिरेव युक्ता लाघवात् आगमान्तरसिद्धत्वाच्च । तेनैव त्रैविध्यादेरूहसम्भवाच्चेति भावः । ननु किमिदमसम्यक्सृष्टत्वादियेन द्वैविध्यं संमतमत आह ॥ **तद्वक्ष्याम इति** ॥ लक्ष्यज्ञानोत्तरमेव लक्षणस्य सुग्रहत्वादिति भावः ।

**केचित्तु** सम्यक्ताया एकविधत्वाभावाद्वैविध्यानुपपत्तिरिति शङ्कायां द्वैविध्यं प्रमितम् । एकविधसम्यक्त्वस्य सुवचत्वात् । तच्च वक्ष्याम इति परिहार इत्याहुः ।

असंसृष्टविभागः

(टी.) तत्रासंसृष्टं निर्दिशति

..... ...... ..... असंसृष्टं महानहम् ।
बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च ॥ ९ ॥

संसृष्टविभागः

संसृष्टं निर्दिशति

संसृष्टमण्डं तद्गं च समस्तं संप्रकीर्तितम् ।

संसृष्टासंसृष्टविभागपरीक्षा

नन्वेषां चतुर्विंशतितत्वानामसंसृष्टत्वं नाम यद्येकदेशेनोत्पत्तिस्तर्ह्य-नुत्पन्नस्यासत्त्वादुत्पन्नमेव तत्वम् । तच्च संसृष्टमेवेति न द्वैविध्यं न च प्रकारान्तरमस्तीति । मैवम् । सूक्ष्मरूपेण नित्यानां महदादीनां प्राकृत्या (प्राकृता)द्यंशैरुपचयमात्रं क्रियत इति तान्यसंसृष्टानि । न चैवं ब्रह्माण्डं तदन्तर्गतानीति संसृष्टानि । तेषा(एषा)मपि मूलरूपं नित्यमिति चेन्न । साक्षान्मूलरूपस्य विवक्षितत्वात् । एवं सति महदादीनां नित्यानित्यत्वं कथं न स्यादिति चेत्स्यादेवं यदि सूक्ष्मरूपे महदादिव्यवहारः स्यात् किं तु प्रकृतिरेव सोच्यते ।

(रा.टि.) ॥ साक्षान्मूलरूपस्येति ॥ तस्यैवोपचितत्वादिति भावः ।

(श्री.टि.) मूले मीयन्त इति मात्राः शब्दाद्याः विषया इत्यर्थः । संसृष्ट-भिन्नमसंसृष्टं किञ्चिद्वस्तु नास्त्येवेति न द्वैविध्यमित्याशङ्कते ॥ नन्वेषामिति ॥ अनुत्पन्नस्यासत्त्वादिति । अनुत्पन्नस्यैकदेशिनोऽभावादित्यर्थः । अयं भावः । असंसृष्टत्वं नाम किञ्चिदसृष्टमिति एकदेशोत्पत्तिर्वा प्रकारान्तरं वा । नाद्यः । तथा सति सर्वेषां महदादीनां उत्पन्नत्वस्यैव प्राप्तत्वेन संसृष्टत्वमेव स्यात् । उत्पन्नस्यैव संसृष्टशब्दार्थत्वात् । नचैकदेशोत्पत्तावपि

एकदेशिनोनुत्पत्तेरुत्पन्नानुत्पन्नानुत्पन्नरूपत्वेनासंसृष्टत्वमिति वाच्यम् । एकदेशस्य एकदेश्यभिन्नत्वेन तदुत्पत्तौ तस्याप्युत्पत्तेः । तथा च अनुत्पन्नैक देश्यभावेन सर्वं तत्वं सम्यक्सृष्टमेवेति किञ्चिदसृष्टमित्येवंरूपासंसृष्टं नाम न किञ्चिदस्तीति न द्वैविध्यम् । न द्वितीयः । प्रकारान्तरस्यानिर्वचनादिति । येषां नित्यानि सूक्ष्मरूपाण्येव साक्षादुपादानानि तान्यसंसृष्टानि । येषान्तु विकृतान्येवोपादानानि तानि संसृष्टानीति द्वैविध्योपपत्तिरित्याशयेन समाधत्ते ॥ **सूक्ष्मरूपेणेत्यादिना** ॥

**प्रकृत्याद्यंशैरिति** । महत्तत्वसूक्ष्मरूपाणां प्रकृत्यंशैस्सत्वादिगुणैरुपचयः। आदिपदेनाहंकारसूक्ष्मरूपाणां महत्तत्वाद्यंशैरुपचय इत्यर्थः ॥ **न चैवमिति** । सूक्ष्मरूपेण नित्यानां ब्रह्माण्डादीनामन्यांशैरुपचय इत्येवं नहीत्यर्थः । किं नाम प्रकृत्याद्यंशोपचितमहदाद्युपादानकान्येवेति भावः । ननु ब्रह्माण्डादीनामपि यत्परंपरामूलरूपं तस्य नित्यत्वादन्यांशैस्तस्योपचयमात्रमेवाङ्गीकृत्या संसृष्टत्वमेव स्वीक्रियतां न संसृष्टत्वमित्याशयेन शङ्कते ॥ **तेषामपीति** । **मूलरूपं** उपादानरूपम् ॥ **विवक्षितत्वादिति** । नित्यत्वेनेति शेषः । ब्रह्माण्डादौ तु नैवम् । तत्र साक्षादुपादानभूतस्य विकृतस्य महदादेरनित्यत्वादिति भावः ॥ **एवं सतीति** । महदादीनां सूक्ष्मरूपेण नित्यत्वादुपचितरूपेणानित्यत्वान्नित्यानित्यत्वमेव स्यान्नत्व नित्यप्रभेदरूपत्वमित्यर्थः ॥ **व्यवहारःस्यादिति** । तथा च महत्पदाभिधेयेन नित्यत्वमिति भावः । तर्हि तत्केनशब्देन वाच्यमिति पृच्छति ॥ **किन्त्विति** । उत्तरमाह ॥ **प्रकृतिरेवेति** ।

**(स.टि.) तत्र** तदुभयमध्ये । **महान्** महत्तत्वम् । **अहं** अहंकारतत्वम् । **बुद्धिः** बुद्धितत्वम् । **मनः** मनस्तत्वम् । **खानि** इन्द्रियाणि दश । खमिन्द्रियम् । इन्द्रियेऽपि खमिति विश्वामरौ । पञ्चेति मात्रापदेन भूतपदेन चान्वेति । ते च शब्दस्पर्शरूपरसगन्धाः । भूतानि चाकाशवायुतेजोजलपृथिवीरूपाणि । एकान्वयभ्रमनिरासायाह ॥ **संसृष्टमिति** ॥ **अण्डं**

ब्रह्माण्डम् । **तद्वं** ब्रह्माण्डान्तर्गतं भौतिकम् । मूले अण्डं समस्तं, तद्वं च भौतिकं च संसृष्टं प्रकीर्तितमित्यन्वयः । नन्विदमसंसृष्टत्वं नामैकदेशेनोत्पत्तिर्न भवति । किं तु धर्मान्तरमेवेत्यत आह ॥ **न चेति** ॥ टीकायां चतुर्विंशति-तत्वानामिति विशेषणसमासः ।

न च ''विशेषणं विशेष्येणे''ति समासोऽङ्गीकर्तुं न शक्यते । तद्विशेषक ''दिक्संख्ये संज्ञाया''मिति संज्ञायामेव तस्य नियमितत्वात् । चतुर्विंशति-तत्वशब्दस्य चासंज्ञात्वादिति वाच्यम् । षोडशपदार्थादिपदवद्विशिष्टस्य शब्दस्य सामयिकसंज्ञात्वाङ्गीकारात् । विशेषस्तु ''पञ्चस्कन्धेभ्य'' इति तत्वनिर्णयटीकाव्याख्यातोऽवगन्तव्यः । तेन द्विगुसमासे चतुर्विंशतितत्व्या इति भाव्यमिति शङ्कानवकाशः । इतिशब्दः शङ्कासमाप्तौ । परिहरति ॥ **मैवमिति** ॥

**सूक्ष्मरूपेण** अनुपचितरूपेण । **प्राकृताद्यंशैः** प्रकृतेरमी प्राकृताः प्रकृतिसम्बन्धिनोंऽशाः । आदिना महत्तत्वादिसम्बन्धिनश्च ग्राह्याः । तैरुप-चयमात्रं स्थूलतामात्रम् । न तु सामस्त्येनोत्पत्तिः । **इति** इतिहेतोः । **तानि** महदादीनि । प्रकृत्यंशैर्महतो महदंशैरहंकारस्योपचय इत्यादि क्रमेण ज्ञेयम् । ब्रह्माण्डान्तर्गतानामप्येवंविधत्वेनानित्यत्वस्य द्वैविध्यं न सम्भवतीत्यत आह ॥ **न चैवमिति** ॥ **एवं** महदादिवत् । स्वरूपेणानुत्पन्नत्वे सति चोपचित-रूपेणोत्पत्तिमन्ति चेति हेतोः संसृष्टानीत्यर्थः । **तेषामपि** तादृशत्वान्न च नैवमित्युक्तिर्युक्तेति वक्ति ॥ तेषामिति ॥ तेषां ब्रह्माण्डान्तर्गतानां घटादीनाम् । मूलरूपं आदिकारणरूपम् । परिहरति ॥ **नेति** ॥ महदादि चतुर्विंशतितत्वानां साक्षान्मूलरूपस्य नित्यत्वेन विवक्षितत्वादभिप्रेतत्वा-दित्यर्थः । नित्यतयेति शेषः । ब्रह्माण्डतदन्तर्गतानां महदादिकार्यद्रव्याणां साक्षान्मूलस्य महदादेर्वैकृतस्यानित्यत्वादिति भावः । एवं सति सूक्ष्मोपचित भागैर्नित्यानित्यत्वे । परिहरति ॥ **स्यादेवमिति** ॥ तर्हि तन्मूलं किं पदाभिधेयमित्यत आह ॥ **किंत्विति** ॥

**(का.टि.)** उक्तद्वैविध्यानुपपत्तिमाशङ्कते ।। **नन्विति ।।** अत्र यद्यपि तत्वविवेकाद्युक्तगुणत्रयादितत्वान्तरमपि सङ्ग्राह्यमेव तथाऽपि **महानह** मित्यादेः सामानाधिकरण्यभ्रमेण न्यूनसङ्ख्याप्रतीतिव्यवच्छेदार्थमेव चतुर्विंशतिग्रहणमिति मन्तव्यम् ।। **एकदेशेनेति ।।** एकदेशेनैवेत्यर्थः । स्वरूपेणोत्पत्तिशून्यत्वे सति एकदेशेनोत्पत्तिमत्त्वमिति यावत् । **अनुत्पन्नस्य** स्वरूपेणोत्पत्तिशून्यस्य । **असत्त्वात्** एकदेशेनोत्पत्त्यसत्त्वात् तददर्शनादिति यावत् । अस्तु तर्हि सम्यक्त्वमतिशयविशेषः । तथा चातिशयेनोत्पन्नं संसृष्टं, अतथाभूतमसंसृष्टमिति द्वैविध्योपपत्तिरित्यत आह ।। **न चेति ।।** अतिशय-विशेषे मानाभावादिति भावः । सूक्ष्मेति स्वरूपकथनम् । उपादान रूपेणेत्यर्थः ।

**प्राकृताद्यंशैः** प्रकृतिगुणत्रयांशैः । **उपचयः** स्थूलरूपनिष्पत्तिः । न तूपादानरूपेणाप्यनित्यानामेवोत्पत्तिरिति मात्रार्थः । तथा च नित्योपादान-कत्वमसंसृष्टत्वं अतथाभूतत्वं संसृष्टत्वमिति भावः । एवं सति ब्रह्माण्डादीनामप्यसंसृष्टत्वमेव स्यादित्याशङ्कते ।। **एषामिति ।। मूल-**मुपादानम् । कार्यमात्रस्य साक्षात् परम्परया वा प्रकृत्यपादानकत्वादिति भावः ।। **विवक्षितत्वादिति ।।** सूक्ष्मशब्देनेत्यादिः । तथा च साक्षान्नित्योपादन-कत्वमसंसृष्टत्वं अतथाभूतत्वमेव च संसृष्टत्वमिति भावः । साक्षान्नित्यो-पादकत्वं च महदादीनाम् । अनित्यांशैरप्युपचाद् ब्रह्माण्डादीनां च मूलभूतं नित्यं तदुपादानोपादानभूतमेवेति नातिप्रसङ्गः । महदादिसूक्ष्मस्य महदादित्वं मन्वानः शङ्कते ।। **एवं सतीति ।।** महदादीनां सूक्ष्मरूपेण नित्यत्वे महदादि सूक्ष्माणां महदादिरूपेण नित्यानित्यत्वं स्यात् । तद्रूपेण पूर्वोक्तनित्या-नित्यत्वयोरभावादिति भावः ।। **स्यादेवमिति ।।** तथा च महदादिसूक्ष्मस्य महदादिरूपत्वाभावादेव नोक्तदोष इति भावः । नन्वेवं महदादिसूक्ष्मस्य यथोक्तनित्यानित्यानित्यानन्तर्गतस्याधिक्यापत्तिरित्याशङ्क्याह ।। **किं त्विति ।।** तथा च तस्य प्रकृतिरूपेण नित्यानित्यत्वमेवेति भावः ।

महदादिस्वरूपसद्भावे प्रमाणसूचनम्

**(टी.) केचिन्महदादिस्वरूपमेव नाभ्युपच्छन्ति । दूरेणोक्तविशेषम् । तेषामतिबहुतरागमविरोधं दर्शयितुं संप्रकीर्तितमित्युक्तम् । आगमाश्चान्यत्र द्रष्टव्याः । विस्तरभिया नेहोदाह्रियन्ते ।**

(रा.टि.) ॥ **केचिदिति** ॥ तार्किकादयः । **उक्तविशेषं** असंसृष्टत्वादिकम् । उपसर्गद्वयार्थो **बहुतरेति** ॥ **अन्यत्रेति** ॥

**पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।**
**एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥**

इत्याद्यनुव्याख्यानादावित्यर्थः ।

(श्री.टि.) संप्रेत्युपसर्गद्वयाभिप्रायं वक्तुमाह ॥ **केचिदिति** । संप्रेत्युपसर्गद्वयार्थोऽतिबहुतरेति । संसम्यङ्निश्चितप्राबल्यकबहुतरागमैरित्यर्थः । उक्तं विशेषं असंसृष्टत्वादिरूपं दूरेण नाभ्युपगच्छन्तीति सम्बन्धः । तथा च महदादितत्वस्वरूपस्याभावेन तस्यासंसृष्टत्वादिरूपो विशेषो दूरनिरस्त इति भावः ॥ **आगमाश्चेति ।**

**पञ्चभिःपञ्चभिर्ब्रह्मचतुर्भिर्दशभिस्तथा ।**
**एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ।**

इत्याद्यामहदादिस्वरूपप्रतिपादकाश्चागमाभागवतादावुदावुदाहृताद्रष्टव्या इत्यर्थः ॥ **विस्तरभयादिति** । ग्रन्थविस्तरभयादित्यर्थः ॥

(स.टि.) सम्प्रकीर्तितमित्यत्रोपसर्गद्वयव्यावर्त्यं दर्शयति ॥ **केचिदिति** ॥ उक्तं विशेषं चतुर्विंशतितत्वानामसंसृष्टत्वं ब्रह्माण्डान्तर्गतानां संसृष्टत्वरूपमित्यर्थः । अतीति समोर्थः । बहुतरेति प्रार्थः । के ते बहुतरागमा इत्यत आह ॥ **आगमाश्चेति** ॥ अन्यत्र

**पञ्चभिः पञ्चभिर्ब्रह्मचतुर्भिर्दशभिस्तथा ।**
**एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ।**

सर्गो नवविधः प्रोक्त इति प्रतिज्ञाय ''आद्यस्तु महतः आदिपदेन मनोभिमानिदेवाः गद्यन्ते सर्गो गुणवैषम्यमात्मनः । द्वितीयस्त्वहमस्तत्र द्रव्यज्ञानक्रियादय'' इत्यादिना भागवतादौ । कुतोऽत्र नोदाहृता इत्यत आह ।। **विस्तरेति** ।। विस्तरमिति गतम् ।

**(पा. भा.) बह्वागमविरोधादिति ।** आगमबहुत्वज्ञापनाय सम्, प्र इति उपसर्गद्वयमिति भावः ।।

**(का.टि.) केचित्तार्किकाद्याः** । **विशेषं** महदादीनां संसृष्टत्वरूपं न तु संसृष्टासंसृष्टभेदमित्यर्थः द्व्यणुकादेरसंसृष्टत्वस्य त्र्यणुकादेश्च संसृष्टत्वस्य तैरप्यङ्गीकारात् । स्वरूपमात्रकल्पनापेक्षया गौरवाक्यि सूचनाय दूरेणेत्युक्तम् । अत्यन्तमित्यर्थः । **सम्प्रेत्युपसर्गद्वयलब्धमाह** ।। **अतिबहुतरेति** ।। निरवकाशत्वबहुत्वाभ्यां प्रबलभूतेत्यर्थः । आगमाश्चान्यत्रोदाहृताः ।

**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ।।**
**इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः ।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ।।**
**महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।**
**पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ।।**

इत्यादयो द्रष्टव्या इति ।

**अस्वतन्त्रजगतः सृष्ट्यादिविषये विष्ण्वायत्तत्वकथनम्**

(टी.) यदीदं विष्णुव्यतिरिक्तं भावाभावादिभेदभिन्नं जगदस्वतन्त्रं तर्हि कस्मिन्नायत्तं कस्मिंश्च विषये? इत्याकाङ्क्षायामाह

सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ॥ १० ॥
बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च ।
विष्णुनाऽस्य समस्तस्य समासव्यासयोगतः ॥ ११ ॥

नियमो व्यापारेषु प्रेरणम् । बन्धः प्रकृतेः । मोक्षो बन्धात् । आवृत्तिज्योतिषी बाह्यतमःप्रकाशौ । एवकारो विष्णुनेत्यनेन सम्बद्ध्यते । अस्य समतस्यास्वतन्त्रस्य भवन्तीति शेषः ।

नन्वेतत्पूर्वविरुद्धम् । समस्तस्य सृष्टिसंहारोक्तौ नित्यत्वोक्तिविरोधः । अचेतनस्य बोधविरोध इत्यादि । तत्रोक्तं समासेति । समासः सङ्क्षेपः व्यासो विस्तारः तावेव योगौ उपायावुक्तार्थघटनायाम् । ततः । इदमुक्तं भवति । उक्तधर्मेषु यत्र तत्वेऽल्पीयां सः सम्भवन्ति तत्र तावन्तो विष्ण्व धीना ज्ञातव्याः । यत्र तु बहवस्तत्र तावन्तः । सर्वथा स्वरूपस्वभावावस्य तदधीनाविति । तत्र स्थितिनियमौ सर्वस्य । सृष्टिसंहृती नित्यानित्यस्यानित्यस्य च । अज्ञानं भावरूपं दुःखस्पृष्टस्य । ज्ञानाभावस्तु सर्वस्य । बोधनं चेतनस्य । सुखं प्राप्ततमसो विना । दुःखं दुःखास्पृष्टं विनेत्यादि द्रष्टव्यम् । पदार्थानां सृष्ट्याद्यन्यतोपि प्रतीयते अत एवेत्युक्तम् । सकलसत्तादेस्तदधीनत्वात्तत्तद्वस्तु निमित्तमात्रमेव । स्वातन्त्र्येण विष्णुरेवास्येश्वर इति ।

(रा.टि.) ॥ **आयत्तमिति** ॥ अधीनतयाऽऽस्त इत्यर्थः ॥ **विषय इति** ॥ आयत्तमित्यनुषङ्गः । सृष्ट्यादेः प्रसिद्धत्वादन्येषामर्थमाह ॥ **नियम इति** ॥ अत्र **सृष्टि**पदेन स्रष्टृनिष्ठव्यापारवाचिना जगन्निष्ठजन्मग्राह्यम् । **स्थिति**रन्नादिदानेन रक्षणम् । **संहृति**र्ध्वंसः । पूर्वविरुद्धतां व्यनक्ति ॥ **समस्तस्येति** ॥ **इत्यादीति** ॥ अचेतनस्य बन्धमोक्षसुखदुःखाज्ञानविरोध **इत्यादि**पदार्थः । **मोक्षो** बद्धस्य ॥ **इत्यादि द्रष्टव्यमिति** ॥ आवृत्तिज्योतिषी सर्वस्येत्यादिपदार्थः ॥ **अन्यतोऽपीति** ॥ ब्रह्मादितोऽपीत्यथः ॥ **तत्तद्वस्त्विति** ॥ ब्रह्मादि वस्त्वित्यर्थः । यद्वा देशकालादिवस्त्वित्यर्थः । इत्यंतेन तात्पर्योक्तिः ।

**(श्री. टि.) क(स्मिन्नाय)स्यायत्तमिति** । कस्याधीनमित्यर्थः । "अधीनो निघ्न आयत्त" इत्यभिधानात् । विषये आयत्तमिति वर्तते ॥ **आहेति** । सृष्ट्यादौ विषये विष्ण्वायत्तमाहेत्यर्थः । प्रकृतेरिति पञ्चमी । **बाह्यतमः** अन्धकाराख्यम् । **बाह्यप्रकाशः** आलोकाख्यः । तथा चावृत्तिशब्देन बाह्यतमो ग्राह्यम् । ज्योतिश्शब्देन बाह्यप्रकाशो ग्राह्य इत्यर्थः ॥ **भवन्तीति** । तथा चास्य समस्तस्यास्वतन्त्रप्रपञ्चस्य सृष्ट्याद्याः धर्माद्वादश ज्योतिरन्ता विष्णुनैव भवन्तीत्यर्थः ॥ **नित्यत्वोक्तिविरोध इति** । पञ्चाशद्वर्णाव्याकृताकाशयोरपि समस्तान्तर्गतत्वे तयोरपि सृष्टिसंहारापत्त्या नित्यावेदा इति नित्यत्वोक्तिविरोधः स्यादित्यर्थः । पदार्थान्वदन्नेव विग्रहं दर्शयति ॥ **समास इति** ॥

**उक्तार्थघटनायामिति** । समस्तप्रपञ्चविषयकसृष्ट्यादिरूपोक्तार्थस्य घटनायामित्यर्थः ॥ **तत इति** । तस्मात् समासव्यासयोगत इत्यर्थः । समासव्यासयोगत इत्युक्त्याशङ्कापरिहार इत्यत आह ॥ **इदमुक्तं भवतीति** । केचित् तत इदमुक्तं भवतीत्येकमेव वाक्यम् । तथा च समासव्यासलक्षणादुपायात् इदं समस्तस्योक्तं सृष्ट्यादिकं भवति । घटते । उपपन्नमित्यर्थ इत्याहुः । समासव्यासप्रकारमेव दर्शयति ॥ **उक्तधर्मेष्विति** ॥ **अज्ञानं भावरूपमिति** । भावरूपाविद्येत्यर्थः ।

नन्वत्राज्ञानं ज्ञानाभावरूपमेव किं न स्यादिति चेत् । उच्यते । अनादिमायया सुप्त इत्यादिश्रुत्या अनाद्यविद्याबद्धत्वाज्जीवा जानन्ति नो हरिमित्यादि स्मृत्या चाविद्यायाः ज्ञानावरकत्वमुच्यते । आवरकत्वं चाभावस्य न युक्तमित्यावरकत्वान्यथानुपपत्त्या तस्य भावरूपत्वसिद्धिरिति ज्ञातव्यम् ।

अत्र प्रसङ्गात्किञ्चित्तत्वरहस्यमुच्यते । इयं च भावरूपाऽविद्या सत्वादि गुणात्मिका प्रकृतिरेव । तस्याश्चाविद्यात्वं स्वरूपज्ञानावरकत्वेन विद्याविरोधित्वात् । यथोक्तं सुधायाम् । अतः कामकर्मातिरिक्तं मायाऽविद्या-

प्रकृतिरित्यादिशब्दाभिधेयम् अनाद्येव किमपि द्रव्यं स्वरूपचैतन्यावरकमङ्गीकार्यमित्युक्त्वा अतः परमेश्वर एव सत्वादिगुणमय्या विद्याविरोधित्वेनाविद्यया स्वाधीनया प्रकृत्याऽचिन्त्याद्भुतया स्वशक्त्या च स्वप्रकाशमपि जीवस्वरूपचैतन्यमाच्छादयतीति युक्तमिति । इयं च भावरूपाविद्या लिङ्गशरीरमेवेति बहवस्तात्विकाः ।

तेषां स्पष्टःसुधाविरोधः । यथोक्तं सुधायां फलाध्याये कर्मक्षयपादे भगवदपरोक्षज्ञानभोगाभ्यां निवृत्तसमस्तकर्मणो भिन्नलिङ्गशरीराः विध्वस्तप्रकृतय इति । अत्र सत्वादिगुणात्मकप्रकृतिबन्धध्वंसात्पार्थक्येन लिङ्गशरीरभङ्गस्योक्तत्वात् ।

एवं च जीवस्वरूपस्य षडावरणानि । तथाहि । सत्वादिगुणात्मिका भावरूपाविद्या । बध्नन्ति नित्यदा मुक्तं मायिनं प्रकृतिं गुणा इति भागवतोक्तेः । तथा कामः । ''आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा । कामरूपेण कौन्तेये''ति गीतावचनात् । तथा कामनिबद्धोऽयमुच्चावचतया भ्रमन्निति भागवतोक्तेश्च । प्रारब्धकर्म ।

**अनादिकर्मणा बद्धो जीवः संसारमण्डले ।**
**वासुदेवेच्छया नित्यं भ्रमतीति हि तद्वचः ॥**

इत्यनुव्याख्यानोक्तेः । ''सदाबद्धा इमे जीवा अविद्याकामकर्मभिरि''ति वचनाच्च । स्वगुणाच्छादिकपरमाच्छादिकरूपे द्वे दुष्टे प्रकृती

**अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते ।**
**स्वगुणाच्छादिका त्वेका परमाच्छादिकापरा ॥**

इति प्रमाणोक्तेः । तथा लिङ्गशरीरम् ।

**एवं पञ्चविधं लिङ्गं त्रिवृत्षोडशविस्तरम् ।**
**एष चेतनया युक्तो जीव इत्यभिधीयते ।**

अनेन पुरुषो देहानुपादत्ते विमुंचतीत्यादि भागवतोक्तेः । स्पष्टं चैतत्सर्व मुक्तं प्रथमस्कन्धतात्पर्ये पञ्चदशाध्याये ।

**प्रकृतिं स्वात्मसंश्लिष्टां गुणान् सत्वादिकानपि ।**
**कर्माणि सूक्ष्मदेहं च जायमाना हरेर्दृशिः ।**
**दहेदथापि सन्दग्धेन्धनवत्तत्पुनः पुनः ।**
**यावदारब्धकर्मस्यादाविर्वापि तिरो व्रजेदिति ।**

व्याख्यातमेतदस्मदाचार्यैः । अत्र प्रकृतिशब्देन स्वगुणाच्छादिकादि-रूपादुष्टजडप्रकृतिरेव विवक्षिता । सत्वादिकान्गुणानपीत्युक्त्या सत्वादि-गुणरूपा जडप्रकृतिरपि भावरूपाविद्याख्या जीवस्वरूपाच्छादिकाऽस्तीति सूचयति । कर्माणि प्रारब्धानि । सूक्ष्मदेहं लिङ्गशरीरमिति । अत्राऽपिशब्देन वा चशब्देन वा कामोऽपि ग्राह्यः ।

इदमावरणषट्कमपरोक्षज्ञानभोगाभ्यां विनाश्यम् । कर्मातिरिक्तमावरण-पञ्चकमपरोक्षज्ञानविनाश्यम् । प्रारब्धं कर्म च भोगविनाश्यम् । ज्ञानेन तूपमर्द इति ज्ञातव्यम् । ईश्वरेच्छापि पूर्वोक्त षट्कातिरिक्तं सप्तममावरणम् । परमेश्वरोऽचिन्त्याद्भुतया स्वशक्त्या जीवस्वरूपचैतन्यमाच्छादयतीति सुधोक्तेः ।

तथा चापरोक्षज्ञानानन्तरमावरणषट्कानां दाहेऽपि दग्धपटायमानतयाऽ-विर्भावतिरोभावाभ्यामनुवृत्तानामेषां विरजास्नानेन निश्शेषनाशः । अनन्तरं प्रलये भगवदुदरे स्थित्वा बहुतरानन्दभोक्तॄणामेषां सृष्टचनन्तरं श्वेतद्वीपा-विर्भावे सति तत्रत्यश्रीनारायणसन्दर्शनानन्तरमपरोक्षज्ञानोत्तरानुष्ठितं निवृत्तं कर्म निमित्तीकृत्य प्रसन्नो भगवान् स्वेच्छावरकमपसारयति । ततश्च यावत्स्वरूपानन्दाविर्भावो भवति । अत्र च बहुनात्र किमुक्तेनेति वाक्यं मानम् । स्वेच्छावरकान्न मुक्तः स्यादिति व्याख्यानात् । उक्तं च सुधायाम् । ''आनन्ददश्च मुक्ताना''मित्यत्र ।

ननु आनन्दः स्वरूपमेव स चाविद्यावृतोऽविद्यानिवृत्तौ स्वतस्सिद्ध एव । ततः कथं मोक्षदानात्पृथगानन्ददानम् । उच्यते । परमेश्वरशक्तिरेव जीवस्वरूपानन्दावरणं मुख्यम् ।। अविद्या तु निमित्तमात्रम् । ततोऽविद्यायां निवृत्तायामपि नाशेषानन्दाभिव्यक्तिर्यावदीश्वर एव स्वीयां बन्धशक्तिं न ततो व्यावर्तयतीति । उक्तं च गीताभाष्यटीकायाम् । ''नाविद्यैव जीवस्वरूपावरणम् । किंत्वीश्वरेच्छापीत्यादि । अत्राज्ञानशब्देन ज्ञानाभावोऽपि विवक्षित इत्याह ।। **ज्ञानाभावस्त्विति ।। सर्वस्येति ।** परतन्त्रस्येत्यर्थः । रमाया अपि यावद्गुणगणविषयकज्ञानाभावसद्भावादिति भावः । एवकारस्य विष्णुनेत्यनेन सम्बन्धः पूर्वमुक्तः । तदभिप्रायमाह ।। **पदार्थानामिति ।** अन्यतो ब्रह्मादेः कुलालादेश्च सकाशादित्यर्थः ।। **प्रतीयत इति ।** आगमेन प्रत्यक्षेण चेत्यर्थः । तथाच विष्णुनैवेत्युक्तमयुक्तमिति भावः । विष्णुनैवेत्युक्त्या कथं तत्परिहार इत्यत आह ।। **सकलेति ।** तत्तद्वस्तु ब्रह्मादि ।। **निमित्तमेवेत्यादि ।**

**निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।**
**हिरण्यगर्भः शर्वश्च कालाख्या रूपिणस्तव ।**
**तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन् ।**
**एक एव महाशक्तिः कुरुते सर्वमञ्जसा ।**
**ब्रह्मणिस्थोऽसृजद्विष्णुःस्थित्वा रुद्रे त्वभक्षयत् ।**
**पृथक्स्थितो जगत्पाति तद्ब्रह्माद्याह्वयोहरिः ।**

इत्यादि प्रमाणबलादन्येषां निमित्तमात्रत्वम् ।। **स्वातन्त्र्येणा**न्यानपेक्षतया विष्णुरेवास्य समस्तस्य प्रपञ्चस्य सृष्ट्यादिविषये ईश्वरः समर्थ इत्यवगन्तव्य इत्यर्थः ।

**(स.टि.)** एवं स्वतन्त्रास्वतन्त्रतत्वयोर्निरूपितत्वादुत्तरग्रन्थो व्यर्थ इत्यत आह ।। **यदीति ।। कस्मिन्नायत्तं** किमधीनम् । अधीनो निघ्न आयत्त इत्यमरः। कस्मिंश्च विषये आयत्तमिति वर्तते । **सृष्टिः** सर्जनम् । **स्थितिः** स्थापनम् ।

**संहृतिः** संहरणम् । प्रयोजकव्यापारवाचिनः शब्दास्तत्सम्बन्धाज्जगति प्रयोज्ये लक्षणया प्रवर्तंत इति चन्द्रिकोक्तेः । सृष्टिः स्थितिः संहृतिश्च नियमो ज्ञानेत्यादि श्रीमद्भाष्योदाहृताष्टकबोधकस्कान्दवचनेन च स्कन्नस्त्रिकादि-कर्तृकतावाद इति ज्ञेयम् । नियमस्य विषयसापेक्षत्वादाह ॥ **नियम इति ॥** नियमोऽयं त्रयाणां चेति विश्वः । बन्धः प्रकृतेः । पञ्चमीयं मोक्षावधिमभिधत्ते ॥ **बन्धादिति ॥** प्राकृतात् । आव्रियते जनोऽनयेत्यावृत्तिः बाह्यं तमोऽन्ध-काराख्यम् । बाह्यं ज्योतिरालोकादिः । एवकारः ज्योतिरेव चेत्यत्रत्यः । अस्येत्यस्य अस्वतन्त्रस्येति विशेष्योक्तिः । अन्वयपूरणार्थमाह ॥ **भवन्तीति शेष इति ॥** आहत्यैते भवन्तीत्यन्वयः । ननु न समस्तस्याप्यत्रोक्त-द्वादशधर्मवत्त्वं सम्भवतीति शङ्कते ॥ **नन्विति ॥** नित्यत्वोक्तिविरोधः नित्या वेदा इत्यत्र नित्यत्वस्य योक्तिस्तद्विरोध इत्यर्थः । बोधविरोधः एतत्कारिकोक्त बोधविरोध इत्यर्थः । आदिना रमाया बन्धादि विरोधो ग्राह्यः । तत्र तच्छङ्काविषये । समासव्यासशब्दार्थावाह ॥ **समास इत्यादिना ॥** समासस्तु सङ्क्षेपे च समर्थने । व्यासो मुनौ स्याद्विस्तार इति विश्वः ॥ **योगावुपायाविति ॥** योग उपायः । दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयः प्रसिद्धय इति भागवत प्रयोगप्रदर्शनपूर्वङ्गीताभाष्ये तथा व्याख्यातत्वादिति भावः । तदुपपादयति ॥ **इदमुक्तं भवतीति ॥ उक्तधर्मेषु** सृष्टिस्थितीत्याद्युक्तद्वादशधर्मेषु । यत्र ये सम्भावितास्तत्र तावन्तो भगवदधीनाः । **सर्वथा** सर्वप्रकारेण । स्वरूप-स्वभावौ **अस्य** विश्वस्य । **तदधीनौ** भगवदधीनौ । द्रव्यं कर्म च कालश्च स्वभावो जीव एव चेत्यादेः । क्व क्व कस्य कस्य समावेशः । सार्वत्रिकश्च क इत्यतो दर्शयति ॥ तत्र स्थिति **नियमाविति ॥ सर्वस्य** अस्वतन्त्रसामान्यस्य । सृष्टिसंहृती नित्यानित्यस्य **पुराणा**देरनित्यस्यासंसृष्टस्य संसृष्टस्य च ॥ **अज्ञानं भावरूपमिति ॥**

ज्ञानाभावरूपमेवाज्ञानमित्यज्ञाः । तदपाकर्तुं भावरूपमिति ॥ दुःख-स्पृष्टस्य चतुर्मुखव्यतिरिक्तस्य । दग्धपटायमानत्वेन चतुर्मुखस्यापि

भावरूपाज्ञानं कैश्चिदङ्गीकृतमिति सब्रह्मकस्य सर्वस्येति । अत्रार्थे मानानि तु सत्तत्वरत्नमालायामृजुप्रकरणे सङ्गृहीतानि तथा तट्टीकायां विभावनीयानि । भावरूपाविद्येत्यर्थः । न चेयमप्रामाणिकीति नाङ्गीकार्येति वाच्यम् । जीवा जानन्ति नो हरिमिति स्मृत्या चाविद्या विद्यामावृणोतीत्युच्यते । न च ज्ञानाभावस्य तदावरकत्वं युज्यते । अतः स्मार्तावरकत्वान्यथानुपपत्त्या भावरूपभावः सेत्स्यति । सत्वादिगुणमयी ।

**अजे द्वे प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते ।**
**स्वगुणाच्छादिका त्वेका परमाच्छादिका परा ।**

इत्यादि प्रमाणप्रमितप्रकृतिरेव स्वरूपज्ञानावरकत्वेन विद्याविरोधित्वादविद्येति गीयते । उक्तं च सुधायां ''अतः कामकर्मातिरिक्तं मायाविद्याप्रकृतिरित्यादि शब्दाभिधेयमनाद्येव किमपि द्रव्यं स्वरूपचैतन्यावरकमङ्गीकार्य''मिति । तथा ''अतः परमेश्वर एव सत्वादिगुणमय्या विद्याविरोधित्वेनाविद्यया स्वाधीनया प्रकृत्याऽचिन्त्याद्भुतया स्वशक्त्या च स्वप्रकाशमपि जीवचैतन्यमाच्छादयतीति युक्त''मिति ।

केचिदिमामविद्यां लिङ्गशरीरमाहुः । तैश्चोत्क्रान्तिपादीय- ''यदि भगवद परोक्षज्ञानभोगाभ्यां निवृत्तसमस्तकर्माणः स्वोत्तमप्रवेशेन ब्रह्मनाड्योत्क्रमणेन वा परित्यक्तदेहाः स्वोचितेनार्चिरादिना वा पथा वैकुण्ठलोकवासिनं भगवन्तं हिरण्यगर्भेण सह प्राप्ता भिन्नलिङ्गशरीरा विध्वस्तप्रकृतयोऽत्यन्तनिवृत्तानिष्टाः सम्यगाविर्भूतानन्दादिगुणा भगवत्समीप एव तमुपासीनाः स्वरूपेण वा लीलागृहीतविग्रहैर्वा सङ्कल्पमात्रसाध्यान् दिव्यभोगांस्तारतम्येन भुञ्जाना न कदाचित्पुनरावर्तत इत्येतन्मोक्षस्वरूप''मिति सुधयाविरोधः सम्पादनीयः ।

प्रसङ्गादावरणान्युच्यन्ते । सत्वादिरूपिणी भावरूपाविद्यैकम् । यथोक्तं भागवते ''बध्नंति नित्यदा मुक्तं मायिनं प्रकृतेर्गुणाः'' इति । कामो

द्वितीयम्। आवृत्तकामरूपेणेति गीतागीतेः । तथा कामनिबद्धोयमिति भागवते च। तृतीयं प्रारब्धं कर्म।

**अनादिकर्मणा बद्धोजीवः संसारमण्डले।**
**वासुदेवेच्छया नित्यं भ्रमतीति हि तद्वचः।**

इत्यनुव्याख्योक्तेः। प्रकृतिद्वयं च चतुर्थपञ्चमावरणम्। अथान्ये प्रकृती इत्यादेः । लिङ्गशरीरं षष्ठमावरणम् । एवं पञ्चविधं लिङ्गं त्रिवृत्षोडश-विस्तृतमित्यादेः। हरीच्छा च सप्तममावरणम्। यथोक्तं सुधायां ''परमेश्व-रोऽचिन्त्ययाऽद्भुतया स्वशक्त्या जीवस्वरूपचैतन्यमाच्छादयती''ति। तथा ''आनन्ददश्च मुक्ताना''मित्यत्र ''नन्वानन्दश्च स्वरूपमेव। स चाविद्या-वृतोऽविद्यानिवृत्तौ स्वतःसिद्ध एव। अतः कथं मोक्षदानात्पृथगानन्ददानम्। उच्यते। परमेश्वरशक्तिरेव स्वरूपावरणमुख्या। अविद्या तु निमित्तमात्रम्। ततोऽविद्यायां निवर्तमानायां सत्यामपि नाशे वाऽनन्दाभिव्यक्तिर्यावदीश्वरः स्वकीयां बन्धकशक्तिं न ततो व्यावर्तयती''ति। नाविद्यैव जीवस्वरूपावरणं किं त्वीश्वरेच्छापीति प्रमेयदीपिकोक्तेः।

तन्त्रन्यायेनाज्ञानपदं ज्ञानाभावपरं चेत्याह ॥ **ज्ञानाभाव इति** ॥ नवनवसु विशेष, न रमापि पदाङ्गुलीलसन्नखधूराजदनन्तसद्गुणान्। श्रियोपि च। ज्ञानस्फूर्तिः सदेत्यादे रमाया अपि ज्ञानाभावसम्भवात्सर्वस्येत्युपपन्नम्। बोधनं परोक्षमपरोक्षं च। **दुःखास्पृष्टं** रमातत्वम्।

ननु विनाशब्दयोगे कथं ''प्राप्ततमसः दुःखास्पृष्ट''मित्युभयत्र द्वितीया। पृथग्विनानानाभिस्तृतीयाऽन्यतरस्यामित्यत्र तृतीयया सह पञ्चम्या एव विकल्पनादिति चेन्न। एनपाद्वितीयेति पूर्वसूत्राद्द्वितीयेत्यनुवर्तते। तथा च पृथग्विनानानाभिस्तृतीया। तदभावे पञ्चमी। तदभावे द्वितीयेति विकल्प-करणादिष्टसिद्धेः। यथोक्तं सिद्धान्तकौमुद्यां पृथगित्यादि सूत्रमुदाहृत्य ''एभिर्योगे तृतीया स्यात्पञ्चमीद्वितीये च। अन्यतरस्यां ग्रहणं समुच्चयार्थम्।

पञ्चमीद्वितीये अनुवर्तेते'' इत्यादि । विवृतं च तत्वसुबोधिन्याम् । तथा हि ''ननु तृतीयाभावपक्षे एनपाद्वितीयेति प्रकृता द्वितीयैव स्यात् । यदि तु द्वितीया विकल्पेन भवेत्तदा पञ्चम्यपि स्यात् । सा तु नित्यैव । तस्माद्विभक्ति-त्रयसमावेशो दुरुपपाद इत्यत आह ॥ अन्यतरस्यां ग्रहणं समुच्चयार्थमिति । निपातानामनेकार्थत्वादिति भावः ॥

**पञ्चमीति ॥** तत्र मण्डूकप्लुत्या पञ्चमी । द्वितीया तु संनिहितैव । इह पृथगर्थैरिति सूत्रयितव्ये पर्यायत्रयोपादानं तत्पर्यायान्तरनिवृत्त्यर्थम् । तेन हि रुग्देवदत्तस्येत्यत्र नेत्याहु''रिति ।

ननु तर्ह्युपासनापादीयं ''ज्ञानसूर्यमृते'' इति मूलव्याख्यापरविनावात-मित्यादि प्रयोगदर्शनाद्विना योग इव ऋते योगेऽपि द्वितीया भवत्येवेति सुधायां प्रयोगोऽपरिहारः । तथैव तद्व्याख्यास्वनेकासु व्याख्यानम् । तथा हि वाक्यार्थचन्द्रिका । नन्वन्यारादितरर्ते दिक्छब्दांचूत्तरपदाजाहियुक्त इति ऋतेशब्दयोगे पञ्चमीविधानादृते देवदत्तादिति प्रभृतिवज्ज्ञानसूर्यादृत इति पञ्चम्या भवितव्यम् । ज्ञानसूर्यमृत इति द्वितीया तु कथमित्यतो ।

**विनावातं विनावर्षं विद्युत्प्रपतनं विना ।**
**विना हस्तिकृतं दोषं केनेमौ पतितौ द्रुमौ ।**

इति विनाशब्दयोगे द्वितीयाविधिस्तावत्परस्यापि संमतः । अत एवोक्तं वृत्तौ पृथग्विनानानाभिरिति योगविभागः कार्यो द्वितीयार्थ इति । उक्तं च हरदत्तेनापि ''अत्रासत्यपि मुनित्रयवचने प्रयोगबाहुल्यादेवं व्याख्यात''-मिति । तथा ''ऋतेशब्दयोगेऽपि द्वितीयाविधिरवश्यमभ्युपगन्तव्यः । तन्निमित्तस्य ऋतेऽपि त्वां न भविष्यंति सर्वे इति ऋतेयोगे द्वितीयाप्रयोगस्य सद्भावादित्याशयेनाह । विनावातमित्यादीति ।

आचार्या अपि ''ननु सूर्यमिति कथं द्वितीया । विनावातमित्यादिप्रयोगात् । पृथग्विनानानाभिरिति योगविभागः कर्तव्यो द्वितीयार्थ इति काशिकाया-

मुक्तत्वेन विनायोगे तावद्द्वितीया विधिरवगम्यते । एवं तात्पर्ये ऋते-शब्दयोगेऽपि द्वितीया वक्तव्या । ऋतेऽपि त्वां न भविष्यन्ति सर्वे इत्याद्यभियुक्तप्रयोगे ऋतेयोगेऽपि द्वितीयाया दृष्टत्वेन न्यायसाम्यादिति भाव'' इति विभावितवन्तः ।

परिमलेऽपि ''ज्ञानसूर्य इति कथम् । द्वितीयस्य तृतीयपादे अन्यारादितरर्ते दिक्छब्दांचूत्तरपदाजाहियुक्त इति सूत्रे ऋतेशब्दयोगे पञ्चमीविधानेन ज्ञानसूर्यादृत इति भाव्यम् । एवं बादरायणादपीतीत्याह ।। विनावात मित्यादीति । वृत्त्यादौ अन्यारादिति सूत्रादुपरितने पृथग्विनानानाभिरिति योगविभागः कर्तव्यः । पृथगादिशब्दयोगे द्वितीया च विभक्तिर्भवतीत्येतदुक्त्वा विनावातमित्याद्युदाहृत्य, तथा च तत्र प्रयोगानुरोधेन योगविभागेन द्वितीयाया निर्वाह इव महाकविप्रयोगादृतेशब्द योगेऽपि द्वितीया ध्येया । ऋते शब्दस्यापि पृथग्विनांतरेण वर्तत इति विनाशब्दपर्यायत्वादिति भाव'' इति ।

शब्देंदुशेखरे लघौ, गुरौ च समुच्चयार्थमिति । स्पष्टं चैतद्भाष्ये । एतेन अन्यतरस्य आं इत्यङ्गीकारार्थकं पदद्वयमेतदित्यपास्त''मिति । ''समुच्चयार्थ मिति । निपातानामनेकार्थत्वादिति भावः । स्पष्टं चेदं भाष्ये । एतेन अन्यतरस्य आं अङ्गीकारार्थकं पदद्वयमेतत् । यद्वा सप्तम्येकवचनमित्यपास्तम् । पञ्चमीद्वितीये इति । तत्र मण्डूकप्लुत्या पञ्चमी । द्वितीया तु संनिहितैव । न चानन्तरा द्वितीयैव समुच्चीयेतेति वाच्यम् । पृथग्विनानानाभिः । तृतीयेति योगद्वयेनैव सिद्धेऽन्यतरस्यां ग्रहणस्य वैयर्थ्यापत्तेः । एतेन पञ्चम्या एव समुच्चयः स्यादित्यपास्तम् । षष्ठ्यतसर्थेत्यस्य, एनपेत्यस्य च स्थलान्तरे कर्तुं शक्यत्वेन योगविभागेनैव सिद्धेः । विभक्तिद्वयोच्चारणेनैव सिद्धेऽन्यतरस्यामिति वैयर्थ्यस्य स्पष्टत्वाच्च ।

यद्यपि द्वितीयासमुच्चयो भाष्यादौ नोक्तः तथापि विनावातं विनावर्षे केनेमौपतितौ द्रुमावित्यादि प्रयोगबाहुल्यादेवं व्याख्यातमित्याहुः । न

चान्यतरस्यां ग्रहणस्य समुच्चयार्थत्वे मानाभावः। विकल्पार्थत्वपक्षेऽपि षष्ठी साधने तस्य चरितार्थत्वादिति वाच्यम्। अन्यतरस्यां ग्रहणसामर्थ्यात्पञ्चमी भविष्यतीति भाष्यादिप्रामाण्येन समुच्चयार्थत्वाङ्गीकारा''दिति। समुच्चय-योगविभागोभयपक्षस्यापि सङ्ग्रहाद्वृत्त्यादौ योगविभाग इत्युक्त्वा-त्सर्वत्राप्यन्ततो गत्वा प्रयोगादित्युक्तेष्टीकाकृद्भिः प्रयोग एवोपात्त इति न विरोधः। समुच्चयपक्षे सत्यप्यभ्युच्चयपक्षोऽयमिति न कश्चिद्विरोधः।

न च टिप्पण्यां पर्यायत्वकथनं पूर्वोक्ततत्वसुबोधिनीविसंवादीति वाच्यम्। शब्देंदुशेखरे ''दृशिग्रहणाद्दतेशब्दयोगे द्वितीये''त्युक्त्वा ''पुरुषाराधनमृत इत्यादि सिद्धि''रित्युक्तेः प्रयोगे सति दृशिग्रहणाद्वितीया भवतीत्यभि-प्रायात्। योगे सति

**उभसर्वतसोः कार्याधिगुपर्यादिषु त्रिषु।**
**द्वितीयाऽऽम्रेडितां तेषु ततोऽन्यत्रापि दृश्यते॥**

इत्युपर्यादिशब्दैर्योगे द्वितीयेति सम्भवान्न हि रुग्देवदत्तस्येत्यत्राति-प्रसक्तिरिति न टिप्पणीनां तद्विरोध इत्यलम्।

पूर्वमेवकारस्य विष्णुशब्देनान्वयः कृतः। तत्प्रयोजनमिदानीमुद्बोधयति। **पदार्थानामिति॥ अन्यतः** ब्रह्मादितः। **प्रतीयते** आपाततः। तदुपपादयति॥ **सकलेति॥** जडाजडप्रपञ्चसत्तादेः। **तदधीनत्वात्** विष्ण्वधीनत्वात्। **तद्वस्तु** ब्रह्मादिरूपम्। **निमित्तमात्रं** न तु स्वतन्त्रम्। तर्हि ब्रह्मादीनां स्रष्टृत्व प्रतिपादकागमानां का गतिरिति चेन्न।

**ब्रह्मणिस्थोऽसृजद्विष्णुः स्थित्वा रुद्रे त्वभक्षयत्।**
**पृथक्स्थित्वा जगत्पाति तद्ब्रह्माद्याह्वयो हरिः।**
**ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः।**
**स ब्रह्मणा विसृजति सरुद्रेण विलापयति।**

**निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।**
**हिरण्यगर्भः शर्वश्च कालाख्यारूपिणस्तव ॥**

इत्यादि प्रमाणादिति भावः ।

**(पां.टि.)** निगडबन्धव्यवच्छेदाय आह **प्रकृतेरिति** ॥ निगडादिमोक्ष-व्यावृत्त्यर्थमाह **मोक्ष इति** ॥ ''आवृत्तिज्योतिषी' इत्यस्य 'अज्ञानबोधने' इत्यनेन पौनरुक्तिं परिहरति **आवृत्तिज्योतिषीति** । 'ज्योतिरेव च' इत्यत्र एवशब्दः व्यर्थः, विरुद्धार्थश्च । तेन हि तन्मात्रस्य भगवदधीनत्वं प्राप्यते, तच्च पूर्वविरुद्धम् । इत्यतः 'भिन्नक्रमत्वात् न दोषद्वयम् अपि' इत्याह **एवकार इति** ॥ 'समस्तस्य' इत्यनेन 'स्वतन्त्रस्य सृष्ट्यादि विष्णुना क्रियते' इति उच्यते'' इति भ्रान्तिनिरासाय आह **अस्वतन्त्रस्येति** ॥

अव्ययीभावादेः समासशब्दार्थस्य प्रकृते ग्रहणे असङ्गतेः विवक्षित-मर्थमाह **सङ्क्षेपेति** ॥ 'समासव्यासयोगतः' इति षष्ठीसमासपक्षे विवक्षितार्था सिद्धेः आह **तावेवेति** । साध्यानुक्तेः आह **उक्तार्थेति** । 'न एतावताऽपि उक्तदोषपरिहारः' इत्यत आह **इदमुक्तं भवतीति** । **अज्ञानमिति** । ब्रह्मादीनां प्रकृतिबद्धत्वादिति भावः । दुःखास्पृष्टस्यापि तद्वत्त्वे प्रकृति-बद्धत्वेन नित्यमुक्तत्वश्रुतिविरोधः इति भावः ॥ भावरूपम् इति विशेषण-प्रयोजनमाह **ज्ञानाभावस्त्विति** । ज्ञानात्यन्ताभाव इत्यर्थः । रमायाः प्रकृतिबन्धाभावेऽपि ईश्वरेऽयोग्यगुणविषयकज्ञानाभाववत्त्वादिति भावः । द्वितीयक्षणे ज्ञानमानविशेषस्यापि पूर्वक्षणे ज्ञानसद्भावेन, तत्प्रागभावा-सम्भवात्; 'नवनवसुविशेष' इत्यादेश्च व्यक्त्यभिप्रायेण वा अत्यपूर्वत्वाभि-प्रायेण वा उपपत्तेः न तद्विरोधः ॥

**मूलग्रन्थान् समालोच्य गुरुशिक्षितमार्गतः ।**
**तत्वसङ्ख्यानटीकायाश्चन्द्रिकेयं विनिर्मिता ॥**

**इति श्रीमत्सकलविद्वच्चक्रचूडामणीनां विद्याधीशपूज्यपादानां शिष्येण केशवभट्टारकेण विरचिता तत्वसङ्ख्यानभावचन्द्रिका समाप्ता ॥**

(टी.) **पद्मापद्मासनानन्तप्रभृतीदं यदिच्छया।**
**सत्तादि लभते देवः प्रीयतां श्रीपतिः स मे ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्वसङ्ख्यानविवरणं श्रीजयतीर्थभिक्षुविरचितं सम्पूर्णम्**

(रा.टि.) अस्य समस्तस्येति मूलस्थेदंशब्दार्थं विवृण्वन् जगदुपादानतया सर्वस्य जन्मादिकर्तृत्वभ्रमं वारयंस्तत्प्रीतिं प्रार्थयते ॥ **पद्मेति** ॥ **पद्मासनो** ब्रह्मा । यदिच्छयेत्यनेनोपादानत्वनिरासः अनायाससाध्यत्वं च सूच्यते। इच्छामात्रं प्रभोस्सृष्टिरित्युक्तेः। तेन फलाभावेऽपि सृष्ट्यादिर्युक्तः। आयाससाध्यकर्मण एव फलापेक्षणादित्युक्तं भवति । मूलोक्तसृष्टिशब्दार्थस्सत्तेति । तेन सापि सर्वविषयेति सूचितम् । देव्या अपि प्रीतिप्रार्थनालाभायोक्तम् ॥ श्रीपतिरिति ॥

**तत्वाभिमानिनो देवा ब्रह्मरुद्रपुरस्सराः।**
**यत्परीवारतामाप्तास्तं वन्दे कमलापतिम् ॥**

**इति श्रीमत्तत्वसङ्ख्यानटीकाभावदीपः श्रीसुधीन्द्रतीर्थश्रीपादशिष्य श्रीराघवेन्द्रतीर्थयतिविरचितः सम्पूर्णः**

(श्री.टि.) समापि तद्ग्रन्थो भगवांष्टीकाकारोऽन्तेऽपि मङ्गलमाचरति ॥ **पद्मेति**। लक्ष्मीः पद्मालयापद्मेत्यभिधानात् । **पद्मा** महालक्ष्मीः । **पद्मासनो** ब्रह्मा । **अनन्तः**शेषः । एतदाद्यं इदं विश्वं यदिच्छया सत्तादिकं लभते । सत्तादीत्यादिपदेन प्रमितिप्रवृत्त्योर्ग्रहणम् । यादृशस्य भगवतः प्रतिपादनमस्मिन् प्रकरणे कृतं तादृशस्यैव प्रीतिराशासनीयेत्याशयेनैव मुक्तम्। **सदेवः श्रीपतिः** श्रीहरिः। कमलाश्रीहरिप्रियेत्यभिधानात्। श्रीर्महालक्ष्मीस्तत्पतिर्भगवान् विष्णुर्मे प्रीयतामित्यर्थ इत्यशेषमतिमङ्गलम् ॥

**यादवाचार्यहृत्पद्मगतश्रीमध्वहृद्गतः।**
**प्रीयतामनया ग्रन्थकृत्या श्रीबादरायणः ॥ १ ॥**

**लौकिकालौकिकफलं दातारं भजतां सदा ।**
**गुर्वनुग्रहरूपं तं मन्दारमहमाश्रये ॥ २ ॥**

**इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितं तत्वसङ्ख्यानविवरणं सम्पूर्णम् ॥**

**(स.टि.)** एवं समापितग्रन्थो भगवांष्टीकाकार एतत्प्रकरणप्रतिपादित-गुणवत्त्वेन भगवन्तं स्तुवन् एतत्प्रकरणविवरणफलत्वेन स्वस्यैकान्तभक्तत्व-मविदुषो जनाञ्जननी तनयमिव बोधयंस्तत्प्रीतिमाशास्ते पद्मेति ॥ **पद्मा** लक्ष्मीः । **पद्मासनो** ब्रह्मा । लक्ष्मीः पद्मालया पद्मा, विरिञ्चः कमलासन इत्युभयतश्चामरः । **अनन्तः** शेषः । शेषोऽनन्त इत्यमरः । त एव प्रभृतयो यस्य तत्तथा । **इदं** विश्वम् । सत्ता असतः कार्यरूपेण भवनस्यैव जनित्वा-ज्जनिः सत्ताशब्देन गृह्यते । तथा च सा आदिर्यस्य सृष्टाद्यष्टकस्य तत्तथा । लभते प्राप्नोति । स देवः क्रीडादिगुणकः श्रीपतिः मे प्रीयतां प्रसीदतु । श्रीहरिप्रिया । श्रीपतिः पुरुषोत्तम इति सोपयुक्तामरामरः । ननु पद्माप्रभृतीत्ये वोक्तौ सर्वलाभे किमर्थं पद्मासनानन्तग्रहणम् । यदि दुःखस्पृष्टतदस्पृष्ट-भेदाख्यावान्तरविशेष सूचनाय तद्ग्रहः तर्हि पद्मापद्मासनप्रभृतीत्येव मुखतो वाच्यं स्यात् । न वाच्यं चानन्तेति । अथ तत्तद्व्यक्तिग्रहोऽपेक्षित इत्युपादानम् । हन्त तर्हि पुरुषायुषादपर्यवसानं स्यात् । तस्मात्कथमेतदिति चेन्न । केचिदनन्तविष्वक्सेनादीन्नित्यादुःखानाचक्षते । तन्मतमतन्द्रितः पराकर्तुमनन्तमानन्तेति समाधिसम्भवात् । तर्हि पूर्वानुपूर्व्यां ''गरुडानन्त-विष्वक्सेनादी''निति गरुडस्यैव प्रथमं ग्रहणादत्र यदि तन्मतततोद आवश्यक स्तर्हि गरुड एवादौ निर्देश्य इति चेन्न । कश्चिदविपश्चिदपश्चिमो बलमल-पद्दशावतार्यां हलं कलयत इति । तन्निराकर्तुमपारमतिर्जग्राह तदात्मकमनन्तं यतोऽत इति । न चाष्टपद्यां हलमित्यादिनोक्तः कृष्ण एव । न च तस्य हलधरत्वं कथमिति वाच्यम् । सहस्रनाम्नि ''वनमाली हलायुध'' इत्युक्त-हलधररूपाभिन्नत्वेन तस्योपपन्नत्वादिति वाच्यम् । दशाकृतिकृते कृष्णाय तुभ्यं नम इति कृष्णस्य पृथग्ग्रहणविरोधापत्तेः ।

अथवा पद्मापद्मासनादयो भवन्तु तदधीना अमुक्ताः । मुक्तस्तु ''निरंजन'' इत्यादिश्रुतेर्न तदधीना इत्यतः प्रायोज्यनन्तेति । ततश्च पद्मापद्मासनौ अनन्तौ अबद्धौ मुक्ताविति यावत् । अनन्तौ पद्मापद्मासनौ । कडाराः कर्मधारय इति विशेषणस्य परनिपातः । तौ प्रभृती यस्य तत्तथा । रमाया नित्यमुक्ताया ब्रह्मादीनामपि मुक्तानां तदधीनत्वे ''उतामृतत्वस्येशानः, सर्वं तत्प्रज्ञानेत्रं द्वावेतौ नित्यमुक्तौ । अव्यक्तात्पुरुषः परः । श्रीर्यत्र रूपिण्युरुगायपादयोः चरणरज उपास्ते यस्य भूतिर्वयं काः ।'' इत्याद्यागमा द्रष्टव्याः । अति बन्धन इति धातोरनन्तेति रूपम् । श्रीपतिः श्रीर्मङ्गलदेवतेत्यशेषमतिमङ्गलम् ॥

**न शाब्दी नाम्नायी न हि मम च मैमांस्यपि**
**मति र्न वा तार्की काष्र्णी किमपि च लपन्वा चपलधीः ।**
**यदात्तर्ते श्रेयोभिधविधिकलत्रोरुकरुणो**
**गुरूणां कारुण्यादभवमिति मान्योऽधिधरणि ॥ १ ॥**
**यथा स्थाली स्वस्थं सरसमरसं वेत्ति न सदा**
**भ्रमन्ती सौदी दर्व्यपि न फललाभास्तदपरे ।**
**तदीयो दाहादिः स्खलनकलितो मन्तुरपि मेऽ**
**प्यनेनाप्तं नैनः फलमलघु यायाद्दतवरः ॥ २ ॥**
**साहंतोऽहं नातनवं न च भूविबुधाबुधः ।**
**तन्नमन्तुः किंतु वित्तचित्तशुद्ध्या इति स्थितिम् ॥ ३ ॥**
**व्यासरामनृसिंहार्ववदनागुरुहृद्गताः ।**
**संस्थानकुलदेवेष्टदेवाः प्रीणंत्विदंकृतेः ॥ ४ ॥**
**यादवार्याराधकश्रीमुद्गलार्यहृदब्जगः ।**
**श्रीनिवासो दाशरथिर्धिनोत्वे तत्सपर्यया ॥ ५ ॥**
**क्व टीकाकारसद्वाणीवाणीड्वाचानुसारिणी ।**
**क्व जाल्मो वाग्दरिद्रोऽहमिति मे साहसं महत् ॥ ६ ॥**

इयं मान्याऽवन्यां सजयजयवाचंयमवचोऽ
नुसारानिःसारा भणितिरपि मे यद्विदभिधैः ।
यथा लाक्षारूक्षामणिगणसमासक्तिसहिता
महीयोभिर्मूर्ध्ना ध्रियत इति सत्संगमहिमा ॥ ७ ॥

इति श्रीमत्सत्यवरचरणौपसदसत्यधर्मयतिकृतं
तत्वसंख्यानटिप्पणं समाप्तम् ॥

(का.टि.) दुरन्तदुर्मतध्वान्तध्वंसकृन्मध्वभास्करः ।
बळित्थेत्यादिवेदोक्तगुणः प्रीतोऽस्तु मे सदा ॥

इति श्रीमदुपाध्यायकृता भगवतः सदा ।
तत्वसङ्ख्यानतात्पर्यचन्द्रिका सुप्रसत्तये ॥

इति महामहोपाध्यायकाशीतिम्मण्णाचार्यविरचिता
तत्वसङ्ख्यानटीकाविवरणटिप्पणी समाप्ता

अथ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# तत्वविवेकः

स्वतन्त्रमस्वतन्त्रं च प्रमेयं द्विविधं मतम् ।
स्वतन्त्रो भगवान् विष्णुर्निर्दोषाखिलसद्गुणः ॥ १ ॥

द्विविधं परतन्त्रं च भावोऽभाव इतीरितः ।
पूर्वापरसदात्वेन त्रिविधोऽभाव इष्यते ॥ २ ॥

भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् ।
चेतनोऽचेतनश्चेति भावोऽपि द्विविधः स्मृतः ॥ ३ ॥

नित्यमुक्तश्च सृतियुक् परतन्त्रोऽपि चेतनः ।
द्विधैव श्रीर्नित्यमुक्ता सृतियुक् च द्विधा मतः ॥ ४ ॥

मुक्तोऽमुक्त इति ह्यत्र ब्रह्मान्ता उत्तरोत्तरम् ।
मुक्ताः शतगुणाः प्रोक्ता रमा तेभ्योऽखिलैर्गुणैः ।
नित्यं बहुगुणोद्रिक्ता ततोऽनन्तगुणो हरिः ॥ ६ ॥

नीचा नित्यतमोयोग्या द्विधैवाचेतनं मतम् ।
नित्यानित्यत्वभेदेन देशः कालः श्रुतिस्तथा ।
भूतेन्द्रियप्राणगुणसूक्ष्मरूपं तु नित्यकम् ॥ ७ ॥

एषां विकारोऽनित्यः स्यान्नित्या एव हि चेतनाः ।
गुणक्रियाजातिपूर्वा धर्माः सर्वेऽपि वस्तुनः ।
रूपमेव द्विधं तच्च यावद्वस्तु च खण्डितम् ॥ ८ ॥

खण्डिते भेद ऐक्यं च यावद्वस्तु न भेदवत् ।
खण्डितं रूपमेवात्र विकारोऽपि विकारिणः ॥ ९ ॥

कार्यकारणयोश्चैव तथैव गुणतद्वतोः ।
क्रियाक्रियावतोश्चैव तथैवांशांशिनोरपि ॥ १० ॥

य एतत् परतन्त्रं च सर्वमेव हरेः सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥ ११ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः तत्वविवेकः

## अथ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# तत्वविवेकः

## श्रीजयतीर्थभिक्षुविरचितया टीकया समलङ्कृतम्

### टीका

प्रणम्य रमणं लक्ष्म्याः पूर्णबोधान्गुरूनपि ।
व्याख्यां तत्वविवेकस्य करिष्यामो यथामति ॥ १ ॥

## बिदरहळ्ळी श्रीनिवासतीर्थविरचितं टीकाविवरणं प्रारभ्यते

आनन्दादिगुणोद्रिक्तं स्वाश्रितानन्ददायकम् ।
आनन्दात्मकसद्देहं भजेहं बादरायणम् ॥ १ ॥
श्रीमदानन्दतीर्थार्यान्जयराजमुनीनपि ।
वेदेशाख्यमुनीन्वन्देगुरूणामपि सद्गुरून् ॥ २ ॥
प्रणम्ययादवाचार्यगुरूणां पादपङ्कजे ।
टीकान्तत्वविवेकस्य व्याकुर्वे तत्कृपाबलात् ॥ ३ ॥

इह हि परमकारुणिकोजयतीर्थ श्रीमच्चरणस्तत्वविवेकव्याख्याङ्कर्तुकामः प्रारिप्सितपरिसमाप्त्यादिप्रयोजनतया शिष्टाचारपरंपरावगतां रमापतिप्रणतिमादिगुरूणां परमगुरूणां च प्रणतिं विधाय शिष्यशिक्षायै ग्रन्थादौतामुपनिबध्नन् श्रोतृबुध्यनुकूलनार्थं स्वचिकीर्षितं प्रतिजानीते ॥ **प्रणम्येति** । प्रणम्येतिल्यपानमस्कारस्य ग्रन्थकरणात्पूर्वभाव कथनात्तयोरङ्गाङ्गिभावस्सूचितोज्ञातव्यः । गुरून् पद्मनाभतीर्थ श्रीमच्चरणान् अक्षोभ्यतीर्थश्रीमच्चरणांश्च ।

ग्रन्थवैयर्थ्यशङ्का तत्परिहारश्च

**ननु परमपुरुषादितत्वानां विवेकः शास्त्र एव कृतः । तत्किमनेन प्रकरणेन । विक्षिप्तसङ्ग्रहार्थमिति चेन्न ।। सङ्ग्रहस्यापि तत्वसङ्ख्याने कृतत्वात् । सत्यम् । तथापि तत्वसङ्ख्यानोक्तार्थे साक्षित्वेन भगवत्प्रणीत तत्वविवेकगतवाक्यान्येवाचार्यैरुदाहृतानीत्यदोषः ।**

**(श्री.टि.)** अस्य प्रकरणस्य शास्त्रेण तत्वसङ्ख्यानेन च गतार्थतामाशङ्क्य परिहरति ।। **नन्वित्यादिना ।। साक्षित्वेनेति ।** संवादित्वेनेत्यर्थः । तथाच तत्वसङ्ख्यानोक्तप्रकारेण परापरतत्वयोरेव विषयत्वात् ।। तज्ज्ञानमोक्ष योरवान्तरमुख्यप्रयोजनत्वात् । तदर्थं तज्जिज्ञासोरधिकारित्वात् । यथायोग्यं सम्बन्धसद्भावाच्चारम्भणीयमेवेदं प्रकरणमिति न तदभावप्रयुक्तानारम्भणीयता शङ्केति भावः ।।

तत्वस्य सामान्यत उद्देशलक्षणविभागाः

**(टी.) तत्रादौ तावत्सामान्येन तत्वस्य विभागोद्देशं करोति ।**

**स्वतन्त्रं परतन्त्रं च प्रमेयं द्विविधं मतम् ।**

## अथ श्रीव्यासतीर्थयतिविरचिता
## तत्वविवेकटीकाटिप्पणी मन्दारमञ्जरी प्रारभ्यते

**कमलारमणं नत्वा पूर्णबोधेष्टदैवतम् ।**
**व्याख्यां तत्वविवेकस्य करिष्यामो यथामति ।। १ ।।**
**स्पष्टार्थो य इह ग्रन्थस्स न व्याक्रियते मया ।**
**ग्रन्थगौरवभीरुत्वान्न चोद्ग्रन्थं बहूच्यते ।। २ ।।**

**।। तत्रादौ तावदित्यादि ।। तत्र** वक्तव्यत्वेन बुद्धिस्थानां उद्देशलक्षण विभागपरीक्षाणां मध्य इत्यर्थः । **द्विविधं परतन्त्रश्चेत्यादिना** करिष्यमाणयोरुद्देशविभागयोर्विशेषविषयकत्वादत्र कियमाणयोस्सामान्यविषयकत्वाद-

पुनरुक्तिरिति दर्शयितुं **सामान्येने**त्युक्तम् । विशेषोद्देशविभागस्य सामान्योद्देशादिपूर्वकत्वात् अयमेवादौ कर्तव्य इति भावेन **आदा**वित्युक्तम् । न च न्यूनताविशेषोद्धेशविभागस्यापि करिष्यमाणत्वादिति भावेन तावदित्युक्तम् । विभागोद्देशमित समाहारद्वन्द्वः । अत्र **प्रमेय**मिति सामान्योद्देशः । **द्विविध**मिति विभागः। **स्वतन्त्रं परतन्त्रञ्चे**त्यनेन तदेवद्वैविध्यं दर्शितमिति द्रष्टव्यम् ।

यद्वा विभागेनोद्देशो विभागोद्देश इति तृतीयासमासः । अस्मिन्पक्षे प्रमेय मित्यनूद्यावशिष्टेन विभागपूर्वकमुद्देशः कृत इति द्रष्टव्यम् ।

यद्यप्यत्र **प्रमेय**मित्यनुवादेनैव तत्वसामान्यलक्षणं **स्वतन्त्र**मित्यादिना विशेषलक्षणं चार्थादुक्तमेव । तथा मतमित्यनेन प्रमाणं सूचयता परीक्षाप्यर्थात्कृतैव । तथाप्युद्देशविभागवल्लक्षणपरीक्षयोस्साक्षादकृतत्वात् विभागेनोद्देशं करोतीत्युक्तम् ।

तत्वसामान्यलक्षणस्याचार्येणानुक्तत्वान्न्यूनत्वमित्यत आह ।। प्रमेयमित्यनुवादेनेति ।।

**(श्री.टि.) तत्रेति ।** बुद्धिस्थानामुद्देशविभागलक्षणपरीक्षाणां मध्य इत्यर्थः । यद्वा तत्वे सङ्गृह्यनिरूपणीय इत्यर्थः । संगृह्यतत्वनिरूपणस्य प्रकरणावान्तर प्रयोजनत्वेन प्रागुक्तत्वान्निरूपणस्य चोद्देशात्मकत्वेनतादृशेतत्वस्यनिरूपणेकर्तव्येसत्यादौतावत्सामान्यतोविभागोद्देशावाहेत्यर्थः । स्वतन्त्रपरतन्त्वेत्यनेनैवोद्देश विभागयोर्लब्धत्वेन प्रमेयं द्विविधमिति पुनरुक्तिरित्याशङ्कापरिहारायोक्तम् । सामान्येनेति । तथाच प्रमेयमिति सामान्येनोद्देशः । द्विविधमिति सामान्येन विभागः । स्वतन्त्रं परतन्त्रं चेति तद्विवरणम् । तथाच स्वतन्त्रपरतन्त्रं चेति करिष्यमाणोद्देशविभागौ विशेषविषयावित्यपुनरुक्तिरिति भावः । विशेषोद्देशविभागयोस्सामान्योद्देशादि पूर्वकत्वादयमेवादौ कर्तव्य इति भावेनादावित्युक्तम् । तावच्छब्दः क्रमार्थकः । तथा च विशेषोद्देशादिकं च पश्चात्करिष्यत इति न न्यूनता

शङ्कनीयेत्याशयः । द्वन्द्वैकवद्भावं नपुंसकत्वं चाश्रित्यविभागोद्देशमित्युक्तम् । विभागेन सहितमुद्देशमिति वा । ननु तत्वसामान्यलक्षणमनभिधायैवविभागः क्रियत इति न्यूनतेत्यत आह ॥ **प्रमेयमित्यनुवादेनैवेति** । अत्र प्रमेयं स्वतन्त्रं परतन्त्रं चेति द्विविधमिति हि वाक्यवृत्तिः । तथा च तत्र प्रमेयमित्यनुवादांशस्तेनेत्यर्थः । लक्षणं प्रमिति विषयत्वरूपम् ।

**(टी.) तत्र प्रमेयमित्यनुवादेनैव तत्वसामान्यलक्षणं चोक्तम् ।**

**अनारोपितं हि तत्वम् । यदि नाम कूर्मरोमादिकमनारोपितं किं तावता तत्त्वं स्यादित्यतः प्रतीतौ सत्यामिति वाच्यम् । तच्च प्रमेयमिति चैकोऽर्थः ।**

**(मं.मं.)** ननु प्रमेयपदसूचितं प्रमाविषयत्वं न तत्वलक्षणम् । प्रमासम्बन्धात्प्राक् तत्वभावानुपपत्तिप्रसङ्गादित्यत आह ॥ **अनारोपितं हीति** ॥ अनारोपितत्वस्यैव तत्वलक्षणत्वात्प्रमासम्बन्धात्प्रागपि तत्वभावोपपत्तिरिति भावः । ननु तर्ह्याचार्येणाप्यनारोपितत्व रूपलक्षणसूचनार्थमनारोपितपदमेव प्रयोक्तव्यम् । न तु प्रमेयपदमिति चेदुच्यते ।

अत्र हि पक्षद्वयं सम्भवति । अनारोपितमित्यनेन नञः विरुद्धार्थत्वमभ्युपेत्य प्रमितत्वमुच्यत **इत्येकः** । अभावार्थत्वमभ्युपेत्याऽरोपितत्वाभाव उच्यत **इत्यन्यः** । अत्राऽद्ये अनारोपितत्वस्य प्रमाविषयत्वयोग्यत्वात्मकप्रमेयत्वरूपत्वात्प्रमेय पदेनैवानारोपितत्वस्य सूचितत्वादनारोपितपदमेव प्रयोक्तव्यमिति चोद्यानवकाशः । द्वितीयं दूषयति ॥ **य दि नामेति** ॥ अयमर्थः । **आद्यपक्षानुसारेण** कूर्मरोमादावनारोपितत्वाभावेऽपि **द्वितीयपक्षानुसारेण** यदि नाम कूर्मरोमादिकमनारोपितं सत्यकूर्मरोमादेरभावेन तदारोपानुपपत्तेः किं तावता तत्वं स्यादित्यतः प्रतीतौ सत्यामिति वाच्यम् । प्रतीयमानत्वे सत्यनारोपितत्वं च प्रमेयत्वे पर्यवस्यति । प्रमाविषयत्वं चात्यन्ताभावाप्रतियोगित्वरूपप्रमाविषयत्वयोग्यत्वात्मकमिति प्रमासम्बन्धात्प्रागपि तत्वभावोपपत्तिरिति ।

ननु प्रतीतौ सत्यामित्यनेन कथं कूर्मरोमादिव्यावृत्तिः प्रतीतिमात्रस्य कूर्मरोमादावपि सिद्धान्तिना अङ्गीकारात् । अपरोक्षप्रतीतिविवक्षायां च नित्यानुमेयादावव्याप्तिः । न च वाच्यं प्रतीतिरित्यनेनोल्लेखमात्रं न विवक्ष्यते। येनासतोऽपि तदस्तीत्यतिव्याप्तिपरिहारो न स्यात्। किं तु तद्विषयकं ज्ञानम्। तद्विषयकत्वं च तत्सन्निकृष्टकरणजन्यत्वम् । तच्चासतो नास्त्येव । यथोक्तं टीकाकारैः । 'दृग्विषयत्वाभावेऽपि दृग्व्यावर्तकत्वमात्रं असतोपि शुक्तिरजतादेरस्ति' इति । एवं चातिव्याप्तिः परिहृतेति । तथात्वे आरोपितशुक्तिरूप्यादिव्यावृत्तेरपि प्रतीतिपदेनैव सिद्धेरनारोपितपदस्य वैयर्थ्यमिति चेन्नैवम् । प्रतीतिशब्देन सत्वाकारेणोल्लेख्यत्वस्यात्र विवक्षितत्वात् । कूर्मरोमादेरसत उल्लेखमात्रसद्भावेऽपि सत्त्वाकारेण तदभावात् । असतोऽपि तस्य सत्वाकारेणाऽरोपितस्य सत्वोल्लेखे तु शक्तिरूप्यादेरिवानारोपितपदेनैव व्यावृत्तिसिद्धेरिति ।

यद्वा **अनारोपितं हि तत्व**मित्यादेरयमर्थः । नन्वन्यत्राऽचार्यैः **स्वतन्त्रमस्वतन्त्रञ्च द्विविधं तत्वमिष्यते** इति तत्वशब्दं प्रयुञ्जानैरनारोपितत्वं तत्वलक्षणमिति सूचितम् । तत्वशब्दस्यानारोपिते रूढत्वात् तत्कथमित्याशङ्क्याह ॥ **अनारोपितं हीति** ॥ सत्यम् । अन्यत्र सूचितमनारोपितत्वमेव तत्वलक्षणमित्यर्थः । तर्हि तेनास्य विरोध इत्याशङ्क्याह ॥ **यदि नामेति** ॥ अस्य ग्रन्थस्य **तच्च प्रमेयमिति चैकोर्थः** इत्यस्य च ग्रन्थस्य पूर्ववदेवार्थः । **अन्ये तु** अनारोपितं तत्वमित्यादिग्रन्थमेवं व्याचक्षते । **नैयायिकादिमते** हि अनारोपितं तत्वम् । तत्रासदारोपमनङ्गीकुर्वतां तेषां पक्षानुसारेण यदि कूर्मरोमादिकमनारोपितं तदा असत्प्रतीतिमनङ्गीकुर्वाणैस्तैस्तत्रातिव्याप्तिं वारयितुं प्रतीतौ सत्यामिति विशेषणीयम् । तच्च प्रमेयमिति चैकोऽर्थः । तथा च नैयायिकाद्युक्तलक्षणमपि अस्मदुक्तलक्षण एवान्तर्भवतीति ।

**(श्री.टि.)** ननु तत्वशब्दस्यानारोपिते रूढत्वादनारोपितं तत्वमिति सर्ववादिप्रसिद्धं तत्वलक्षणं विहाय प्रमितिविषयत्वं तत्वमिति किमर्थं

लक्षणमुक्तमिति चेत्सत्यम् । न तावन्मात्रं तत्वलक्षणमिति वक्तुं शक्यम् । कूर्मरोमादेरपि प्रधानाभावेनानारोपिततया तत्वताप्रसङ्गात् । अतः प्रतीतत्वे सत्यनारोपितमिति वक्तव्यम् । तथा च प्रमितिविषयत्वमेव लक्षणत्वेन लब्धमित्याशयेनाह ॥ **अनारोपितं हीत्यादिना ।** नन्वत्रयदिकूर्मरोमारोपस्तर्हि प्रधानसद्भावेनारोप सम्भवादनारोपितत्वं न सम्भवति । यदि वा रोम्णि कूर्मीयत्वारोपस्तथाप्यनारोपितत्वासम्भव एव । कूर्मीयकरचरणादेः प्रधानस्य सद्भावेनारोप सम्भवादिति चेत्सत्यम् । कूर्मरोम्णोविशिष्टस्यैवानारोपितत्वमभिप्रेतम् । प्रधानाभावेन तदारोपायोगादित्याशयात् । एवं शशविषाणाद्यारोपासम्भवोपि प्रधानाभावेन द्रष्टव्यम् ।

ननु प्रमिति विषयत्वोक्त्यापि कथं कूर्मरोमादावतिव्याप्तिपरिहारः । तथाहि । कूर्मरोमादिकं ज्ञातं नवा । नचेत्कातिव्याप्तिः । ज्ञातं चेदारोपविषयत्वमेव प्राप्तमिति नातिव्याप्तिः । यदि च नारोपविषयः अथ च ज्ञातं तदा प्रमितिविषयत्वमेव प्राप्तमिति पुनरतिव्याप्तितादवस्थ्यमिति चेन्न । यस्या सद्विशेषस्य कदापिनारोपः किंत्वसत्त्वेनैव ज्ञानं तत्रारोपाविषयत्व सद्भावेनातिव्याप्तिसम्भवात् । न च तत्र प्रमिति विषयत्वमपि प्राप्तमिति वाच्यम् । असत्त्वप्रकारकप्रमितिविषयत्वेपि सत्त्वप्रकारकप्रमितिविषयत्वस्य तत्राभावात् । तल्लक्षणस्य तथाविवक्षितत्वात् । नन्विदं रजतमिति ज्ञानवानहमित्यनुव्यवसायरूप प्रमां प्रति रजतस्यापि व्यवसायावच्छेदकतया प्रतीयमानत्वेन विषयत्वसद्भावादतिव्याप्तिरिति चेन्न । सत्वप्रकारकप्रमां प्रति साक्षाद्विषयत्वस्य विवक्षितत्वात् । तथा च न भ्रमविषयकानुव्यवसायं प्रति व्यवसायद्वारा विषये रजतेऽतिव्याप्तिः । ननु प्रमासम्बन्धात्प्राक् प्रमितिविषयत्वाभावेन तत्वताभावापत्तिरिति चेन्न । प्रमिति विषयत्वात्यन्ताभावानधिकरणत्वरूपयोग्यतागर्भितत्वेन लक्षणस्य विवक्षितत्वान्न कश्चिद्दोष इत्यवधेयम् ।

तत्वसामान्यलक्षणपरीक्षा

**(टी.) यथार्थज्ञानं प्रमा। तद्विषयः प्रमेयम्। नन्वीश्वरज्ञानं तावत्प्रमा। तत्र शुक्तिरजतादिकं तद्विषयो न वा। न चेत्तस्यासार्वज्ञ्यप्रसङ्गः। तद्विषयत्वे तदपि तत्वं स्यादिति मैवम्। परमार्थाशेषार्थज्ञत्वमेव सार्वज्ञ्यमित्यङ्गीकारात्। तथाप्यस्मदादीनां शुक्तिरजतादिविभ्रममीश्वरो वेत्ति न वा। वेत्तीति ब्रूमः। विषयविशेषितज्ञानस्यावगमे विषयस्यापि प्रमेयत्वं स्यादिति चेन्न। यत् प्रमया अस्तीति विधीयते तत् प्रमेयमित्यङ्गीकारात्। न चेश्वरादिप्रमा शुक्तिरजतादिविधिरूपा। किं तु भ्रान्तोऽयं शुक्तिकाशकलं कलधौतया कल्पयतीत्यनुवादरूपैव। ननु भ्रमेऽपि इदमिति ज्ञानं तावत्प्रमा। किं तावताऽपि। न हि तद्विषयः शुक्तिकायां रजतत्वं येन तत् प्रमेयं स्यात्। ननु इदं रजतमित्येकमेव ज्ञानम्। सत्यम्। अत एव विशिष्टोल्लेखीदमप्रमैवेति उल्लिखितं विशिष्टमतत्वमेवेति।**

**(मं.मं.)** ननु प्रमेयं चेतत्वं तर्हि तत्वानुभूतेः प्रमात्वादन्योन्याश्रयस्स्यादित्याशङ्क्याह ॥ **यथार्थज्ञानं प्रमेति** ॥ **तत्र शुक्तिरजतादिकमिति** ग्रन्थे **तत्रे**त्यस्य तथा सतीत्यर्थः ॥ **परमार्थाशेषार्थेति** ॥ अर्यते इति व्युत्पत्त्या अर्थशब्दोक्तस्य ज्ञेयत्वस्य शुक्तिरूप्यादावपि भावात्तद्व्यावृत्त्यर्थमबाधितवाचकस्य परमार्थपदस्य प्रयोगः ॥ **वेत्ति न वेति** ॥ वेत्ति चेद्विषया विशेषितस्य ज्ञानस्य बुद्धावनारोहात्तद्विषयविशेषितस्यावगमे विषयस्यापि प्रमेयत्वं स्यात्। न वेत्ति चेज्ज्ञानस्य परमार्थत्वात्परमार्थाशेषार्थज्ञत्वरूपमपि सर्वज्ञत्वं न स्यादिति वाक्यशेषः। वेत्तीति पक्षे पूर्वोक्तदोषं स्मारयति पूर्वपक्षी ॥ **विषयविशेषितज्ञानस्यावगम इति** ॥ **यत्प्रमयाऽस्तीति विधीयत इति** ॥ अस्तीत्यनेन प्रकारेण यत्प्रमया विधीयते सत्ताविशिष्टतया बोध्यते न तु नास्तीति निषिध्यते न वा अन्येनैवं ज्ञातमित्यनूद्यते तत्प्रमेयम्। न चेश्वरप्रमा शुक्तिरजतस्य स्वयमस्तित्वग्रहणरूपा। शुक्तिरजतमस्तीत्यग्रहणात्। किं तु 'भ्रन्तोऽयं शुक्तिं रजतत्वेन जानाति' इत्यनुवादरूपा। तेन

भ्रान्तनिष्ठज्ञानविषयतया ईश्वरप्रमया विषयीक्रियमाणस्यापि शुक्तिरूप्यस्य ज्ञानान्तरप्रनाडीमन्तरा अस्तीति प्रमीयमाणत्वरूपं प्रमेयत्वं नास्तीति नातिव्याप्तिरित्यर्थः ।

एतेन 'भ्रमो ममासीत्' इत्यस्मदादिनिष्ठस्यानुव्यवसायस्य प्रमात्वात् तस्य चार्थावच्छिन्नभ्रमविषयकत्वात् भ्रमविषयस्य वैशिष्ट्यस्यापि प्रमेयत्वापात इति निरस्तम् । अत एव शुक्तिरूप्यस्य शशशृङ्गादेश्च असत्वाकारेण प्रमाविषयत्वादतिव्याप्तिस्स्यादिति निरस्तम् । अस्तीति प्रमागोचरत्वाभावात् । न चैवमव्याप्तिः अभावस्यापि 'अभावोऽस्ति' इति कदाचित्प्रमया ग्रहणात् । अतीतादावपि वर्तमानदशायां अस्तीति ग्रहणादिति द्रष्टव्यम् । ननु इदं रूप्यमिति विशिष्टविषयकभ्रमे इदमिति धर्म्यंशे ज्ञानं तावत्प्रमा । तच्च इदं रूप्यमित्येवमाकारकमेकं विशिष्टज्ञानं शुक्तिरूप्यमस्तित्वाकारेण गृह्णातीति लक्षणस्य तत्रातिव्याप्तिरिति गूढाभिसन्धिः शङ्कते ।। **ननु भ्रमेऽपीति** ।। यथा एकस्यैव चैत्रस्य पितृत्वपुत्रत्वे पुत्रपितृरूपप्रतिसम्बन्धिभेदेन व्यवस्थिते यथा च चैत्रपुत्रस्य मैत्रस्य न पुत्रजन्यत्वं मैत्रं प्रति चैत्रस्य पितृत्वेन पुत्रत्वा भावात् तथा इदं रजतमिति विशिष्टज्ञानस्यैकत्वेऽपि शुक्तिरजतवैशिष्ट्यविषयकत्वेऽपि प्रमात्वाप्रमात्वे इदमंशवैशिष्ट्यांशरूपप्रतिसम्बन्धिभेदेन व्यवस्थिते वाच्ये । अन्यथा विरोधात् । इदमंशस्याबाधो रजतांशस्य बाध इति व्यवस्थानुपपत्तेश्च । तथा च न वैशिष्ट्यस्य प्रमाविषयत्वम् । वैशिष्ट्यं प्रति इदं रूप्यमिति ज्ञानस्य प्रमात्वाभावात् । एवं च नातिव्यप्तिरिति गूढाभिसन्धि परिहरति ।। **किं तावतापीति** ।। यथा शुक्तिरजतादिभ्रममीश्वरो वेत्तीत्येतावता किम् । न किमपि । तत्प्रयुक्तदोषस्योद्धृतत्वात् । तथा भ्रमस्य धर्म्यंशे प्रमात्वमित्येतावताऽपि किम् । न किमपि । तत्प्रयुक्तदोषस्याप्युद्धर्तुं शक्यत्वादि**त्यपि** शब्दार्थः । अज्ञातसिद्धान्त्याशयः पूर्वपक्षी स्वाभिप्रायमाविष्करोति ।। **नन्विदं रजतमितीति** । सिद्धान्ती तु ज्ञानस्यैकत्वादेव विशिष्टोल्लेखित्वेन अप्रमारूपतया तदुल्लिखितं विशिष्टमतत्वमेव । अन्यथा

ज्ञानद्वयाङ्गीकारे अख्यातिपक्ष इव विशिष्टोल्लेखित्वाभावेन प्रमैव स्यादिति तदुल्लिखितं तत्वमेव स्यात् । ततश्च ज्ञानैकत्वमतिव्याप्तिप्रतिकूलमेव न त्वनुकूलम् । भ्रमस्य धर्म्यंशे प्रमात्वेऽपि वैशिष्ट्यांशे प्रमात्वाभावेनातिव्याप्तेः परिहृतत्वादिति भावेन परिहरति ॥ **सत्यमित्यादिना** ॥

**(श्री.टि.)** एकार्थत्वमुपपादयति ॥ **यथार्थेति** । शुक्तिरजतादिकमीश्वरप्रमाविषयोभवति नवेति विकल्प्य द्वितीयं तावदनूद्यदूषयति ॥ **शुक्तिरजतादिकमिति ॥ असार्वज्ञेति** । शुक्तिरजतविषयकज्ञानाभावादिति भावः। आद्यमनूद्य दूषयति ॥ **तद्विषयत्वमिति** । ईश्वरप्रमायाः शुक्तिरजतविषयकत्व इत्यर्थः । तदपि शुक्तिरजतमपि ॥ **तत्वंस्यादिति** । प्रमितिविषयत्वादिति भावः । द्वितीयपक्षमेवाङ्गीकृत्य तत्रोक्तदोषं परिहरति ॥ **परमार्थेति** । तथाचेश्वरप्रमायाः शुक्तिरजतविषयकत्वाभावेपीश्वरस्य न सर्वज्ञत्वहानिः । परमार्थाशेषार्थविषयकज्ञानवत्त्वस्यैव सार्वज्ञशब्दार्थत्वात् । शुक्तिरजतादेरबाधितत्वापरपर्याय परमार्थत्वाभावादिति भावः । गूढाभिसन्धिः पूर्वपक्षी विकल्पयति ॥ **तथापीति** । अस्मदादीनां जायमानोयश्शुक्तिरजतादिभ्रमस्तमीश्वरो वेत्ति नवेत्यर्थः । विदितपूर्वपक्ष्यभिप्रायः सिद्धान्ती न वेत्तीति पक्षे शुक्तिरजतादिज्ञानस्वरूपस्य स्वमतेपरमार्थत्वेन परमार्थाशेषार्थज्ञत्वरूपमपि सार्वज्ञं नस्यादिति दोषभयात्तं पक्षं परित्यज्य द्वितीयपक्षं प्रतिगृह्णाति ॥ **वेत्तीति ब्रूम इति** । पूर्वपक्षीस्वाशयोद्धाटनेन तत्र दूषणमाह ॥ **विषयविशेषितेति** । विषयाविशेषितज्ञानमात्रस्य बुद्धावनारोहाच्छुक्तिरजतादि विषयावच्छिन्नस्य शुक्तिरजतादिज्ञानस्येश्वरप्रमयाविषयीकरणे शुक्तिरजता-(दावीश्व)देरपीश्वर प्रमाविषयत्वप्राप्त्या प्रमेयत्वं प्राप्तमित्यतिव्याप्तिरित्यर्थः ॥ **यत्प्रमयेति** । अस्तीत्यनेन प्रकारेण यत्प्रमया विधीयते सत्ताविशिष्टतया बोध्यत इति यावत् । न तु नास्तीति निषिध्यते नवानेनैवं ज्ञातमित्यनूद्यते तत्प्रमेयम् । नचेश्वरप्रमाशुक्तिरजतस्य स्वयमस्तित्वविधिरूपा । शुक्तिरजमस्तीत्यग्रहणात् । किं तु भ्रान्तोऽयं शुक्तिकाशकलमेव रजततया

जानातीत्यनुवादरूपैव । तथा च भ्रान्तनिष्ठज्ञानविषयतयेश्वरप्रमया विषयीक्रियमाणस्यापि शुक्तिरजतस्य ज्ञानान्तरद्वारमन्तरेण साक्षादस्तीति प्रतीयमानत्वरूपं प्रमेयत्वं नास्तीति नातिव्याप्तिरित्यर्थः । **कलधौततया** रजततया । कलधौतं सितं गौरं रजतं रूप्यमश्रुजमित्यभिधानम् ।

गूढाभिसन्धिश्शङ्कते ।। **ननु भ्रमेपीति** । इदं रूप्यमिति भ्रमस्यापीदमिति धर्म्यंशे प्रमात्वं तावदस्तीत्यर्थः । सिद्धान्ती अविदिताशय इव पृच्छति ।। **किं तावतापीति** । भ्रमस्य धर्म्यंशेप्रमात्वमस्तीत्येतावतापि किं दूषणं त्वयादत्तमित्यर्थः । ननु भ्रमस्य धर्म्यंशेप्रमात्वेन रजतत्वरूपे प्रकारांशेऽतिव्याप्तिरिति ममाभिप्राय इति पूर्वपक्षिणोक्ते विदिततदभिप्रायः सिद्धान्ती परिहरति ।। **नहीति** । तद्विषयः इदमिति धर्म्यंशप्रमाविषयः । शुक्तिकायां प्रकारत्वेन प्रतीयमानं रजतत्वमित्यर्थः । तथाच यदंशे ज्ञानस्य प्रमितत्वं तदंशविषयत्वमेव विवक्षितम् । भ्रमप्रकारे च रजतत्वैतदंशविषयत्वाभावान्नातिव्याप्तिरिति भावः । ज्ञानद्वयाङ्गीकारेण परिहृतमिति मत्वा पूर्वपक्षीशङ्कते ।। **नन्विति** । तथा च ज्ञानद्वयाङ्गीकारे भवतामख्यातिपक्षपातः स्यादिति भावः । नास्माभिर्ज्ञानेद्वित्वमङ्गीकृत्य परिहृतम् । येनाख्यातिपक्षपातः शङ्केत । किं नामेदं पदार्थविशेष्यकं रजतत्वप्रकारकं विशिष्टज्ञानमेकमेवेत्यङ्गीकृत्यांश भेदेन परिहार उक्त इत्याशयेनाह ।। **सत्यमिति** । अंशभेदाविवक्षायां तु तत्रातिव्याप्तिरेव नास्तीत्याह ।। **अतएवेति** । ज्ञानस्यैकत्वादेवेत्यर्थः । अंशभेदाविवक्षयेति शेषः ।। **विशिष्टोल्लेखीति** । पुरोवर्तिनि रजतवैशिष्ट्योल्लेखीत्यर्थः ।। **उल्लिखितमिति** । अप्रमाभूतेदं रजतमिति ज्ञानविषयीभूतमित्यर्थः ।। **अतत्वमेवेति** । तथाच वैशिष्ट्ये प्रमाविषयत्वप्रसक्तेरेवाभावान्नातिव्याप्तिरिति भावः ।।

## तत्वविशेषविभागः

**(टी.) तत्प्रमेयं द्विविधम् ।। स्वतन्त्रं परतन्त्रं चेतीतिशब्दोऽध्याहार्यः ।**

(मं.मं.) ।। इति शब्दोऽध्याहार्य इति ।। अन्यथा स्वतन्त्रमस्वतन्त्रञ्च प्रत्येकं द्विविधमिति भ्रान्तिस्स्यादिति भावः ।

**(श्री.टि.) इति शब्दोऽध्याहार्य इति** । अन्यथास्वतन्त्रं परतन्त्रं परतन्त्रं च प्रत्येकं द्विविधमिति भ्रान्तिस्स्यादतस्तत्परिहाराय प्रमेयं स्वतन्त्रं परतन्त्रं चेति द्विविधमिति । एवमिति शब्दाध्याहारेण योजनाकार्येति भावः । उत्तरत्र स्वतन्त्रास्वतन्त्रयोर्लक्षणाकथनान्न्यूनतां परिहर्तुं तदधीनाश्चसर्वदा । सत्ता प्रधानपुरुषशक्तीनां च प्रतीतयः । प्रवृत्तयश्चतास्सर्वानित्यं नित्यात्मनायत इत्यनुव्याख्यानं मनसिनिधाय स्वतन्त्रास्वतन्त्रतत्वे क्रमेण लक्षयति ।।

### स्वतन्त्रास्वतन्त्रतत्वलक्षणम्

**(टी.) यत् स्वसत्तादौ स्वाधीनं न तु परापेक्षं तत् स्वतन्त्रम् ।। यत् पुनस्तत्र परायत्तं तत् परतन्त्रमिति सञ्ज्ञानिरुक्तिरेवानयोर्लक्षणम् ।।**

### पूर्वोक्तार्थे प्रमाणसूचनेन तत्परीक्षा

**मतं प्रमितमित्युक्तार्थे प्रमाणसद्भावसूचनेन प्रकारान्तरं निरस्तं भवति । तथा हि । यदि प्रमेयमेव न स्यात् तदा प्रत्यक्षादिविरोधः । तस्य च भ्रान्तित्वे बाधकं वाच्यम् । न च भ्रान्तिबाधावधिष्ठानावधिविधुरौ विद्येते इति तदेव प्रमेयमस्तु । ननु केशोण्डूकादिभ्रमो निरधिष्ठान इति चेन्न । तस्यापि तेजोधिष्ठानत्वाभ्युपगमात् । नास्त्येव प्रमेयमिति ज्ञानस्य प्रमात्वाप्रमात्वयोर्व्याहतिश्च ।**

**(मं.मं.)** स्वसत्तायां स्वाधीनत्वं स्वप्रतीतौ स्वाधीनत्वं स्वप्रवृत्तौ स्वाधीनत्वमित्यनेकलक्षणसूचनाय **स्वसत्तादा**वित्यादिपदप्रयोगः । यद्यपि देशस्य सर्वगत्ववत् कालस्य त्रिकालसम्बन्धित्ववत् ईश्वरस्य स्वाधीनत्वं विशेषबलाद्युक्तं तथापि विशेषे विप्रतिपद्यमानं प्रति परानधीनत्वमेव लक्षण-मस्तु इति भावेन **न तु परापेक्षमित्युक्तम्** । **साञ्ज्ञानिरुत्त्या** लक्षणस्येव **मत**ग्रहणेन प्रमाणस्यापि सूचितत्वात्परीक्षापि अर्थात्कृतेति न न्यूनतेत्याह ।।

**मतं प्रमितमिति** ॥ येन स्वातन्त्र्यपारतन्त्र्याभ्यां प्रमेयद्वैविध्यं नाङ्गीक्रियते स प्रष्टव्यः । किं प्रमेयस्यैवाभावात्तदनङ्गीकारः । भावेऽपि तस्यानेकत्वाभावाद्वा । अनेकत्वेऽपि सर्वस्यापि स्वतन्त्रत्वादिना ऐकविध्येन द्वैविध्यासम्भवाद्वा प्रकरान्तरेण द्वैविध्यसम्भवाद्वा त्रैविध्यादिसम्भवाद्वेति । तत्राऽद्यं दूषयति ॥ **यदि प्रमेयमेव न स्यादिति** ॥ यदि प्रमेयमेव न स्यात्तदा 'अयं घटः' इत्यादिप्रत्यक्षप्रमितिविरोधः । विषयं विना प्रमित्यनुपपत्तेरित्यर्थः । यद्वा 'अयं घटः प्रमेयः' इत्यादि प्रत्यक्षविरोध इत्यर्थः ॥ **बाधकं वाच्यमिति** ॥ न च वक्तुं शक्यम् । अनुमानादेः प्रत्यक्षमूलत्वेन तद्बाधाक्षमत्वादिति शेषः । भ्रान्तिबाधके अङ्गीकुर्वाणेनापि भ्रान्त्यधिष्ठानबाधावधिभूततत्वसिद्धिर्वाच्या । निरधिष्ठानभ्रान्तेर्निरवधिकबाधस्य चाभावात् । न हीत्थमित्येव क्वचिद्भ्रान्तिः । किं तु इदमित्थमिति । नापि किमपि नैवेति क्वचिद्बाधः । किन्तु अत्रेदं नेति भावेनाह ॥ **न चेति** ॥ शङ्कते ॥ **नन्विति** ॥ **तेजोधिष्ठानत्वाभ्युपगमादिति** ॥ निबिडान्धकारे तद्भ्रमाभावादिति भावः । नास्त्येव प्रमेय इतिज्ञानस्य प्रमात्वे तद्विषयस्य प्रमेयाभावरूपस्य प्रमेयस्य सिद्धिः । अप्रमात्वे तद्विषयस्य प्रमेयाभावस्य बाधे प्रमेयसिद्धिरिति तन्निषेधे व्याहतिरित्याह ॥ **नास्त्येवेति** ॥

**(श्री.टि.) यत्स्वसत्तादावित्यादिना** । आदिपदेन प्रमिति प्रवृत्त्योर्ग्रहणम् । तथा च स्वरूपलक्षणसत्तायां स्वप्रमितिलक्षणसत्तायां स्वप्रवृत्ति लक्षण सत्तायां च स्वाधीनमेव नतु परापेक्षं यत्तत्स्वतन्त्रमिति लक्षणत्रयं विवक्षितम् । अतो न वैयर्थ्यशङ्का । केचिन्मन्यन्ते स्वरूपमेव वस्तुनस्सत्वं न ततोतिरिक्तमस्तीति । अपरेतु प्रमाणयोग्यत्वमिति । अन्येतु पुनरर्थक्रियावत्त्वमिति । तदनुसारेण स्वरूपप्रमितिप्रवृत्तीनां सत्वव्यवहार इति ध्येयम् ॥ **तत्रेति** । स्वरूपप्रमिति प्रवृत्तिषु ॥ **संज्ञानिरुक्तिरेवेति** ॥ **स्वस्य तन्त्रं** अधीनं स्वतन्त्रम् । परस्याधीनं परतन्त्रमिति नामनिरुक्तिरेवेत्यर्थः । **देश**स्सर्वत्रास्तिकालस्सर्वदास्तीति वत् ईश्वरस्यापि स्वाधीनत्वं विशेषबला-

द्युक्तम् । विशेषेवि(प्रतिपद्यमा)वदमानं प्रतिपराधीनत्वरूपपरानपेक्षत्वमेव-लक्षणमस्त्विति भावेन नतु परापेक्षमित्युक्तमिति ज्ञातव्यम् ।। **उक्तार्थे-प्रमाणेति ।** प्रमेयं स्वतन्त्रास्वतन्त्रभेदेन द्विविधमित्युक्तार्थे सर्वत्रेत्यर्थः । अनेन परीक्षापि कृतप्रायेति न न्यूनतेत्यपि ज्ञातव्यम् ।

येन स्वतन्त्रं परतन्त्रं चेति प्रमेयद्वैविध्यं नाङ्गीक्रियते स प्रष्टव्यः । किं प्रमेयस्यैवाभावात्तदनङ्गीकारः । भावेपि तस्यैकत्वेनानेक प्रकारत्वभावाद्वै-विध्यं नाङ्गीक्रियते । अथ प्रमेयस्यानेकत्वेपि स्वतन्त्रत्वेन वा अस्वतन्त्रत्वेन वा सर्वस्यैकविधत्वेन द्वैविध्यासम्भवाद्वा । उत प्रकारान्तरेण द्वैविध्य-सम्भवाद्वा । त्रैविध्यादिसम्भवाद्वेति विकल्पपञ्चकं हृदिनिधायाद्य-मनूद्यदूषयति ।। **यदिप्रमेयमेवेति ।। प्रत्यक्षादिविरोध इति ।** घटपटपरात्मेश्वर धर्माधर्मादि प्रमेयाणामस्तितायाः प्रत्यक्षचेष्टाद्यनुमान सिद्धत्वेन तदनङ्गीकारे तद्विरोधः स्यादित्यर्थः । प्रत्यक्षादिप्रत्ययस्य भ्रान्तित्वमाशङ्क्यनिराकरोति ।। **तस्यचेति ।** घटपटादिप्रमेयस्वरूपास्तित्वावगाहिप्रत्यक्षादि प्रत्ययस्येत्यर्थः ।। **बाधकं वाच्यमिति ।** न च तदत्र वक्तुं शक्यते । अनुमानादेः प्रत्यक्षबाधाक्ष-मत्वात् । बलवत्प्रत्यक्षमेव तद्बाधकं वाच्यम् । तदत्र नास्तीति भावः । अस्तुवा अयं घट इत्यादि प्रतीतिभ्रान्तिस्तथापि तदन्यथानुपपत्त्यैव प्रमेय-सिद्धिरित्याह ।। **न च भ्रान्तिबाधाविति ।** भ्रान्तिरधिष्ठानविधुरा न विद्यते बाधश्चावधिविधुरो न विद्यत इति विवेकः । अयमर्थः । सर्वस्याः प्रतीतेः भ्रान्तित्वमभ्युपगच्छताभ्रान्तेः किञ्चिदधिष्ठानमङ्गीकार्यम् । नहीत्थ-मि(त्येवक)तिकचिद्भ्रमः । किं त्विदमित्थमिति । तथा च यदधिष्ठानन्तदेवैकं प्रमेयमङ्गीकार्यम् ।

नन्वस्तुभ्रान्तेर्निरधिष्ठानत्वम् । भ्रमे यावत्प्रतीयते तावत्सर्वमपि असदेवेति स्वीकारादतो नेदं दूषणमित्याशङ्कापरिहारायोक्तम् । बाधोऽवधिविधुरोन विद्यत इति । अवधिराश्रयः । भ्रमप्रतीति निषेधस्य तावत्पर्यन्तत्वात् । सर्वस्या अपि प्रतीतेः भ्रान्तित्वं बाधकैकगम्यम् । बाधश्चेदमित्थं न भवतीति

वा अत्रेदं नास्तीति वा किञ्चिदवधिकोदृष्टः । इत्थं न भवतीदं नास्तीत्येव बाधाभावात् । बाधेन च यदवधित्वेन विषयीक्रियते तदेवप्रमेयमङ्गीकार्यम् । तस्यापि भ्रान्तिसिद्धत्वे तत्रापि बाधो वाच्यः । सोपि पुनस्सावधिक इत्यनवस्थेति । अन्येतु घटादिप्रतीतीनां भ्रमत्वस्य बाधैकगम्यतया बाधोवाच्यः । तथा च तद्विषयस्यैव तत्वतास्यात् । न च बाधोपि भ्रम एव । तस्यापि बाधे तद्विषयस्य तत्वतापत्त्या तस्यापि भ्रमत्वेऽन वस्थाप्रसङ्गात् । इष्टापत्तिरिति चेत्तत्रोक्तं बाधोऽवधिविधुरोन विद्यत इति । अवधिविधुरोनिरवसानः । अप्रामाणिकत्वात् । अप्रामाणिकत्वे च तदेव प्रमेयं स्यादिति भाव इत्यप्याहुः। भ्रान्तिरधिष्ठानविधुरा न विद्यत इति तदन्यथानुपपत्त्या प्रमेयसिद्धेरिति यदुक्तं तत्र शङ्कते ॥ **ननु केशोंड्रकादीति** । आतपव्याप्ते गगने दृष्टिसञ्चारे सति वर्तुलाकाराः पदार्थविशेषाः इतस्तत(स्सर्पन्ती)स्संचरन्तीव दृश्यन्तेतेकेशोऽण्ड्रका इत्याहुः । **तेजोधिष्ठानत्वेनेति** । सौरतेजोरूपाधिष्ठानत्वाभ्युपगमादित्यर्थः । अत एव निबिडान्धकारे तद्भ्रमो न भवतीति भावः । प्रमेयमेवनास्तीत्यङ्गीकारे दूषणान्तरमाह ॥ **नास्त्येवेति** । नास्त्येव प्रमेयमिति ज्ञानस्य प्रमात्वे एतद्विषयस्य प्रमेयाभावस्यैव प्रमेयत्वप्राप्त्या नास्त्येव प्रमेयमित्यनेन व्याहतिः । अप्रमात्वे तु प्रमेयसद्भावस्यैव प्राप्त्या नास्त्येव प्रमेयमित्यनेन व्याहतिरित्यर्थः ।

**(टी.) एके तु एकमेव तत्वमिति मन्यन्ते । तदसत् । प्रत्यक्षादिविरोधात् । भ्रान्तिरियमिति चेन्न । इयमेव प्रतीतिः प्रमा न वा । आद्ये तद्विषयेण तत्वान्तरेण भाव्यम् । द्वितीये प्रत्यक्षादेः प्रमात्वेनोक्त एव दोषः । सर्वस्य स्वतन्त्रत्वे नित्यसुखादिप्रसङ्गः । अस्वातन्त्र्ये न कस्यापि प्रवृत्तिः । अन्धपङ्गुवत्स्यादिति चेन्न । प्रत्यासत्तेरेवानुपपत्तेः ।**

**अपरे तु भावाभावतया चेतनाचेतनत्वेन वा नित्यानित्यतया वा नामरूपभेदेन वा द्वे तत्वे ब्रुवते । अन्ये तु नामरूपकर्मभेदेन त्रयम् । केचिद्द्रव्यगुणकर्मसामान्यात्मना चत्वारि । एके समवायेन सहोक्तानि**

**पञ्च । अपरे रूपविज्ञानवेदनासञ्ज्ञासंस्कारात् पञ्चेत्यादि । तत्सर्व-मनुपपन्नम् । अत्र केषाञ्चित्स्वरूपेणैवाभावात् । परमप्रमेयस्य च अवान्तरत्वापत्त्या परिगणनस्य वैयर्थ्यप्रसङ्गाच्चेति ।**

**(मं.मं.)** तत्वस्यानेकत्वाभावादिति द्वितीयमनुवदति ॥ **एकेत्विति** ॥ **आद्ये तद्विषयेणेति** ॥ घटपटौ भिन्नाविति प्रतीतिर्भ्रान्तिरित्यस्याः प्रतीतेः प्रमात्वे तद्विषयस्य प्रतीतिगतभ्रान्तित्वस्य प्रमेयत्वात् तस्य च विज्ञान वादिमायावादिभ्यां विज्ञानब्रह्मभ्यां भिन्नत्वेनाङ्गीकारात् द्वितीयतत्व-सिद्धिरित्यर्थः ॥ **द्वितीये प्रत्यक्षादेरिति** ॥ भ्रान्तिरिति प्रतीतेरप्रमात्वे तद्विषयस्य प्रत्यक्षादि प्रतीतिगतभ्रान्तित्वस्य बाधावश्यम्भावात् प्रत्यक्षादेः प्रमात्वात् तद्विषयेण विज्ञानब्रह्मव्यतिरिक्तेन घटादिना तत्वान्तरेण भवितव्य मिति पूर्वोक्तदोष एवेत्यर्थः । ऐकविध्येनेति तृतीयं दूषयति ॥ **सर्वस्य स्वतन्त्रत्व इति** ॥ न चाचेतनस्य कथं सुखादिप्रसङ्ग इति वाच्यम् । अचेतनस्यास्वातन्त्र्यानुपपत्त्या सर्वस्य स्वतन्त्रत्वे चैतन्यस्यापि प्रसङ्गेन नित्यसुखादिप्रसङ्गस्य दुर्वारत्वादिति भावेनाऽदिशब्दप्रयोगः । सर्वस्या-स्वातन्त्र्ये 'अनवस्थितेरसम्भवाच्च नेतरः' इति सूत्रोक्तन्यायेन न कस्यापि प्रवृत्तिरित्याह ॥ **अस्वातन्त्र्य इति** ॥ **अन्धपङ्गुवदिति** ॥ यथा गमनक्रियायां प्रत्येकमसमर्थाभ्यां अन्धपङ्गुभ्यां बाह्यवाहकभावमापन्नाभ्यां सा साध्यते तद्वत् अस्वतन्त्रैः प्रत्येकमसमर्थैरपि मिलितैस्तत्तत्कार्यं क्रियत इत्यर्थः । मेलकस्वतन्त्र पुरुषाभावे मेलनमेवानुपपन्नमित्याह ॥ **न प्रत्यासत्तेरिति** ॥ प्रकारान्तरेण द्वैविध्यसम्भवादिति चतुर्थं त्रैविध्यादिसम्भवादिति पञ्चमं दूषयितुमनुवदति ॥ **अपरे त्वित्यादिना** ॥ **नामरूपभेदेनेति** ॥ शब्दार्थ-भेदेनेत्यर्थः ॥ **नामरूपकर्मभेदेनेति** ॥ शब्दार्थतत्सम्बन्ध भेदेनेत्यर्थः ॥ **रूपविज्ञानेत्यादि** ॥ रूपरसगन्धस्पर्शशब्दात्मकाः परमाणवो रूपस्कन्धः । निर्विकल्पकज्ञानं विज्ञानस्कन्धः । दुःखं वेदनास्कन्धः । सविकल्पकज्ञानं सञ्ज्ञास्कन्धः । समनन्तरप्रत्ययः संस्कारस्कन्धः इति विवेकः ॥ **केषा-**

**श्चिदिति** ॥ समवायादीनामित्यर्थः ॥ **परमप्रमेयस्येति** ॥ मुमुक्षुणा स्वतन्त्रतया ज्ञेयस्येश्वरतत्वस्येत्यर्थः ।

**(श्री.टि.)** प्रमेयस्यैकत्वेनानेकत्वाभावाद्वैविध्यं नाङ्गीक्रियत इति द्वितीय मनूद्य दूषयति ॥ **एकेत्विति ॥ प्रत्यक्षेति** । घटपटादिभेदावगाहिप्रत्यक्षादि-प्रतीतिविरोध इत्यर्थः ॥ **इयमेवेति** । घटपटादिभेदविषयकप्रत्यक्षप्रतीतिः भ्रान्तिरिति भ्रान्तिविषयिणीयमेव प्रतीतिरित्यर्थः ॥ **तद्विषयेणेति** । भ्रान्तिरूपविषयेणेत्यर्थः । तथा च घटादिभेदविषयकप्रतीतेर्भ्रान्ति-विषयिण्याः प्रतीतेः प्रमात्वेन तद्विषयीभूतायाः भ्रान्तेरेव प्रमेयत्वापत्तिरिति-भावः ॥ **प्रत्यक्षादेरिति** । प्रत्यक्षादिप्रतीतेरित्यर्थः । घटादिभेदविषयक प्रत्यक्षप्रतीतिः भ्रान्तिरिति प्रतीतेरप्रमात्वे घटादिभेदविषयकप्रत्यक्षप्रतीतेरेव प्रमात्वप्राप्त्याप्रत्यक्षप्रतीति भ्रान्तिरित्यनेन व्याहतिरित्युक्त एव दोष इति भावः । प्रत्यक्षप्रतीति रूपतत्वान्तरेण भवितव्यं इत्युक्त एवदोष इत्यप्याहुः । प्रमेयस्यानेकत्वेपि स्वतन्त्रत्वेन वाऽस्वतन्त्रत्वेन वा सर्वस्यैकविधत्वेन द्वैविध्यासम्भवादितितृतीय पक्षमनूद्य दूषयति ॥ **सर्वस्यस्वतन्त्रत्व इति** । यदि नाम न तस्य वशे सकलं कथमेवतु नित्यसुखं नभवेदिति भगवत्पादीय वचनं मनसि निधायाह ॥ **नित्यसुखादीति** । आदिपदेनेतरव्यपदेशाद्धिता-करणादिदोषप्रसक्तिरिति सूत्रोक्तहिताक्रियादिप्रसक्तिदोषो ग्राह्यः । चेतना-चेतनात्मकस्य सर्वस्य स्वतन्त्रत्वे नित्यसुखं स्यात् । स्वतन्त्रकर्तुरपि हिताक्रियादिदोष प्रसङ्गश्चेत्यर्थः । नचाचेतनस्य कथं नित्यसुखादिप्रसङ्गः । बाधादिति वाच्यम् । नह्यस्माभिरचेतनस्य नित्यं सुखं साध्यते । किंनामा-पाद्यत एव । अत एव प्रसङ्ग इत्युक्तम् । तत्र बाधोऽलङ्कार एवेति नदोषः ।

अन्येतु कथमचेतनस्य नित्यसुखप्रसङ्ग इत्याशङ्क्याचेतनस्य स्वेच्छाधीन-प्रवृत्तिरूपस्वातन्त्र्याङ्गीकारे चेतनत्वस्यापि प्राप्त्यानित्यसुखादिप्रसङ्गस्य दुर्वारत्वादिति भावेनादि शब्दप्रयोग इत्याहुः ॥

**नकस्यापि प्रवृत्तिरिति** । सर्वस्यापि पारतन्त्र्ये परस्यापि पारतन्त्र्यमेव प्राप्तमेवमन्यस्यापीत्यनवस्था स्यात् । अभ्युपगम्य चेदमुदितम् । नियामकजीवस्यापि प्रेर्येण जीवत्वसाम्यात्प्रेरणासम्भवाच्च । ननु भवद्भिरपि उत्तमजीवानामधमजीवनियामकताया अङ्गीकृतत्वात्तत्रापि सममिदं दूषणमिति चेन्न । यथा सति राज्ञि मण्डलेशेऽशेषप्रजानां तच्छक्त्यानियम्यनियामकभावस्सम्भवति नत्वराजके लोके । तथास्मत्पक्षे उत्तमजीवानां स्वतन्त्रेश्वर शक्त्याजीवावान्तरनियामकत्वमुपपद्यते न परपक्षे । तेन स्वतन्त्रवस्त्वनङ्गीकारादिति भावः । उक्तं च सूत्रे अनवस्थितेरसम्भवाच्च नेतर इति । व्याख्यातं चैतद्भाष्ये । जीवस्य जीवान्तरनियामकत्वेऽनवस्थितेस्साम्याद्सम्भवाच्च नजीवः । नियमेप्रमाणाभावादनीश्वरपक्षत्वाच्चेति ॥ **अन्धपङ्गुवत्स्यादिति चेदिति** । प्रवृत्तिरिति वर्तते । यथागमनक्रियां कर्तुं प्रत्येकमसमर्थावन्ध पङ्गूविशकलिततयास्थितौ मिलित्वा वाह्यवाहकभावमापन्नौ सन्तौ प्रवृत्तिं कुरुत एवमस्वतन्त्राः प्रत्येकं प्रवृत्तिं कर्तुमसमर्था अपि जीवाः मिलित्वा प्रवृत्तिं करिष्यन्तीत्यर्थः ॥ **प्रत्यासत्तेरिति** । एकं प्रत्येकस्यासत्तिः । प्राप्तिर्मेलनमिति यावत् । तथाच विशकलिततया स्थितयोरन्धपंग्वोःप्रत्यासत्तिघटकः कश्चिदपेक्षितः । एवमस्वतन्त्राणामपि जीवानां परस्परं प्रत्यासत्तेरपेक्षितत्वेन तद्घटकतयापि स्वतन्त्रः कश्चित्पुरुषोङ्गीकर्तव्य एवेत्यर्थः । प्रकारान्तरेण द्वैविध्यसम्भवाद्वेति चतुर्थपक्षं दूषयितुमनुवदति ॥ **अपरेत्विति** ॥

**नामरूपभेदेनेति** । रूपशब्दोऽर्थपरः । तथा च शब्दात्मकप्रपञ्चार्थात्मक प्रपञ्चभेदेनेत्यर्थः । त्रैविध्यादिसम्भवाद्वेति पञ्चमपक्षं दूषयितुमनुवदति ॥ **अन्येत्वित्यादिना** ॥ **नामरूपकर्मभेदेनेति** । कर्मशब्दस्सम्बन्धपरः । तथा च शब्दार्थ तदुभयसम्बन्धभेदेनेत्यर्थः । केचित् कौमारिलाः । यथोक्तं तार्किकरक्षायां विशेष समवायौ द्वौ नाङ्गीचक्रुःकुमारिला इति । एके गुरवः । उक्तान् द्रव्यादीन् । तथा च तत्वपञ्चकमाहुरित्यर्थः । यथोक्तं तत्रैव ।

पञ्चार्थान् गुरवः प्राहुः विशेषाभाववर्जितानिति । रूपेत्यतः पूर्वं बौद्धा इति शेषः । रूपरसगन्धस्पर्शशब्दात्मकाः परमाणवोरूपस्कन्धः । निर्विकल्पकज्ञानं विज्ञानस्कन्धः । सुखदुःखे वेदनास्कन्धः । सविकल्पकज्ञानं संज्ञास्कन्धः । समनन्तरप्रत्ययः संस्कारस्कन्ध इति विवेकः ।। **केषाञ्चिदिति** । अनुगतसामान्यविशेषसमवायादीनामित्यर्थः ।। **परमप्रमेयस्येति** । मुमुक्षुणास्वतन्त्रतया ज्ञेयस्येश्वरतत्वस्येत्यर्थः । अवान्तरत्वापत्त्येति । अप्रधानत्वापत्त्येत्यर्थः । अस्त्वितिचेत्तत्राह ।। **परिगणनेति** । गङ्गावालुकपरिगणनवदिति शेषः । अयंभावः । भावाभावादिनापरिगणने ईश्वरस्य भाव चेतननित्यान्तर्भावेनान्येषां पक्षेऽर्थप्रपञ्चान्तर्भावेन केषाञ्चित्पक्षे द्रव्यान्तर्भावेनेतरपदार्थसाधारण्येनाप्राधान्यमेव प्राप्तम् । न तु स्वातन्त्र्यम् । अस्त्विति चेन्न । स्वतन्त्र प्रमेयायत्ततयैव विदितं परतन्त्र प्रमेयं निःश्रेयसाय भवति । य एतत्परतन्त्रं तु सर्वमेव हरेः सदा । वशमित्येवजानातिसंसारान्मुच्यतेहि स इति वक्ष्यमाणत्वात् । अन्यथागङ्गावालुकपरिगणनवदिदं तत्वपरिगणनमपार्थकं स्यादिति ।

### स्वतन्त्रतत्वनिरूपणम्

**(टी.) किं तत्स्वतन्त्रप्रमेयमित्यत आह**

**स्वतन्त्रो भगवान्विष्णुर्निर्दोषाखिलसद्गुणः ।। १ ।।**

**भगवानिति पूजार्थम् । निर्दोषेति स्वातन्त्र्योपपादनाय । यस्य तु द्वयमप्यसिद्धं तं प्रत्यागमो दर्शनीयः । अनेन स्वतन्त्रपरतन्त्रभेदमङ्गीकृत्यापि स्वातन्त्र्यं शिवशक्त्यादीनामङ्गीकुर्वाणा निरस्ता भवन्ति । विष्णोरन्यत्परतन्त्रमिति वाक्यशेषः । द्विविधमित्युक्त्या स्वतन्त्रपरतन्त्रप्रमेययोरवान्तरभेदोऽस्तीति सूचितम् । अन्यथा द्वे प्रमेये इत्येव ब्रूयात् ।। तत्र स्वतन्त्रप्रमेयमेकमेवेत्युक्तम् ।**

**(मं.मं.)** ।। **द्विविधमित्युक्त्येति** ।। अयमर्थः । यद्यपि स्वतन्त्रमस्वतन्त्रश्चेति तत्वं द्विविधमित्युक्त्या तत्वस्य स्वातन्त्र्यादिना द्वैविध्य-

मेवोक्तम् । न तु स्वतन्त्रपस्तन्त्रयोर्भावाभावत्वादिना अवान्तरभेदः । तथापि **द्विविध**मित्यनेन स्वातन्त्र्यपारतन्त्र्यरूपप्रकारद्वित्वं न वदता प्रकारयोरेव द्वित्वं तु व्यक्तीनाम् । तत्राप्यनयोरेव प्रकारयोर्द्वित्वम् । अन्येषामवान्तर-प्रकाराणां बहुत्वमस्त्येवेति सूचितम् । अन्यथा स्वतन्त्रमस्वतन्त्रश्चेति द्वे प्रमेये इत्युक्तेऽपि व्यावर्तकप्रकारद्वित्वाभावे व्यावर्त्यप्रकारिद्वित्वानुपपत्त्या प्रकारद्वित्वसिद्धेः 'द्वे प्रमेये' इत्येव ब्रूयात् । तत्र स्वतन्त्रमेकमित्युक्त्या तत्रावान्तरभेदो नास्तीति सूचितम् । परतन्त्रस्यापि भेदाभावे तत्सूचनस्य निर्विषयत्वापत्तेः परतन्त्रस्य भेदमाहेति । यद्वा **द्विविध**मित्यनेन स्वतन्त्रत्व-परतन्त्रत्वयोः प्रकारत्वस्योक्तत्वात्स्वतन्त्रपरतन्त्रयोरवान्तरभेदोऽस्तीति सूचितम् । प्रकारभेदस्य स्वाश्रयव्यक्त्यवान्तरभेदं विना अनुपपत्तेरित्यनेन प्रकारेण **द्विविध**मित्युक्त्येति ग्रन्थो व्याख्येयः ।

**(श्री.टि.)** निर्दोषेत्यादि विशेषणेनैव विष्णोस्स्वातन्त्र्यस्योपपादित-त्वाद्भगवानिति व्यर्थमत आह ।। **भगवानितीति** ।। **स्वातन्त्र्येति** । निर्दोषश्चासावखिल सद्गुणश्चेति विग्रहः । इदं च विशेषणद्वयं विष्णो-स्स्वातन्त्र्योपपादनार्थमित्यर्थः । द्वयमपि विशेषणद्वयमपि ।। **आगम इति** । यआत्माऽपहतपाप्मानिरनिष्ठोनिरवद्यः गुणाश्श्रुतास्सुविरुद्धाश्च देवे सन्तीत्यागमोनिर्दोषत्वाखिलसद्गुणत्वोपपादनाय दर्शनीय इत्यर्थः ।। **अनेनेति** । विष्णोः स्वातन्त्र्यवचनेनेत्यर्थः । शक्त्यादीनामित्यादिपदेन प्रधानस्कन्दसूर्यगणेशादिग्रहणम् । अङ्गीकुर्वाणाः पाशुपतशाक्तसाङ्ख्यादयः। उत्तरत्रपरतन्त्रविभाग एवोच्यते नत्विदं परतन्त्रं प्रमेयमिति निर्दिश्यते । अत आह ।। **विष्णोरन्यदिति** ।। **द्विविधमित्युक्त्येति** । प्रमेयं द्विविधं मतमित्यत्र द्विविधमित्युक्त्यास्वतन्त्रपरतन्त्रत्वयोः प्रमेयविभाजकोपाधित्वरूप प्रकार-त्वस्योक्तत्वात् स्वतन्त्रपरतन्त्रयोरवान्तरभेदोस्तीति सूचितम् । प्रकारत्वस्य स्वाश्रयव्यक्तिभेदं विनाऽनुपपत्तेरित्यर्थः । यद्वा परीक्षकैस्तत्रैव हि प्रकार-पुरस्कारेण विभागः क्रियते । यत्र प्रकारिणां बहुत्वेन विभागः कर्तुं न

शक्यते । यथा तद्विविधं केवलं चतुर्विधमित्यदौ । प्रकृते प्रकारपुरस्कारेण द्वैविध्यकथनेन प्रकारिबहुत्वं प्राप्तमेवेति द्वैविध्यकथनेन प्रकारिबहुत्वं सूच्यत इत्यर्थः । एवमेवपूर्ववत् द्विधाग्रहणेनोत्तर वाक्यमपि व्याख्येयम् ॥ **अन्यथेति** । एवं सूचनस्यानभिप्रेतत्व इत्यर्थः । तर्हिस्वतन्त्रप्रमेयस्यापि अवान्तरभेदवत्त्वस्य सूचितत्वात्सर्वं वक्तव्यमित्याशङ्कां परिहरति ॥ **तत्रेति** । तयोर्मध्य इत्यर्थः ॥ **एकमेवेत्युक्तमिति** । भगवान्विष्णुरित्येक वचनप्रयोगेणेत्यर्थः ।

परतन्त्रतत्वविभागः

(टी.) **परतन्त्रस्य भेदमाह**

**द्विविधं परतन्त्रश्च भावोऽभाव इतीरितः ।**

**भाव इतीरित एका विधा । अभाव इतीरितश्चापरा । एवं परतन्त्रं च द्विविधमिति योज्यम् । ईरितग्रहणाद्ये भावाभावविभागं नेच्छन्ति तेषामागमविरोध उक्तो भवति । किं च भावानभ्युपगमे अभाव एव न स्यात् । प्रतियोगिनोऽभावात् । अभावानभ्युपगतौ प्रतीतिविरोधः । विभागानभ्युपगमे तु प्रतीतिविरोधः इति । अत्रापि भावाभावपदाभ्यामेव विधिनिषेधात्मकत्वं द्वयोर्लक्षणं सूचितं भवति ॥ पूर्ववद्विधाग्रहणेनावान्तरभेदश्च ।**

**(मं.मं.)** ननु न केवलं तत्वं स्वातन्त्र्यादिना द्विविधम् । अपि तु परतन्त्रमपि भावोऽभाव इति द्विविधमीरितमिति ईरितशब्दस्य नपुंसकत्वेन भाव्यम् । पुल्लिङ्गनिर्देशस्तु कथमित्याशङ्क्य भाव इतीरितो भावपदार्थ एका विधा । अभाव इतीरितोऽभावपदार्थोऽपरा विधा एवं द्विविधमिति योज्यम् । एवं च पुल्लिङ्गान्तेनाऽवृत्तेन ईरितशब्देन भावमभावं च विशेषयता आचार्येण तयोरयं भावः तद्विरुद्धोऽयमभाव इति परस्परविरुद्धतया लोकागमयोरीरितत्वेन तद्विभागानङ्गीकारे आगमविरोधस्सूचितो भवतीत्याह ॥ **भाव**

**इतीरित इत्यादिना विभागानभ्युपगमे तु इत्यन्तेन ।। विधिनिषेधात्मकत्व मिति ।।** प्रथमप्रतीतावस्तीत्युपलभ्यमानत्वं विधित्वं तत्र नास्तीत्युपलभ्यमानत्वं निषेधत्वमिति द्रष्टव्यम् । अवान्तरभेदश्चेत्यस्यानुषक्तेन सूचित इत्यनेनान्वयः ।

**(श्री.टि.)** ननु परतन्त्रप्रमेयं भावोभाव इति द्विविधमीरितमिति ईरित शब्दस्य नपुंसकत्वेन भाव्यम् । पुल्लिङ्गनिर्देशस्तु कथमित्याशङ्कायामाह ।। **भाव इतीरित इति ।** भावपदार्थ इति शेषः । एवमभाव इतीरित इत्यनन्तरमभाव पदार्थ इति शेषः ।। **आगमेति ।** सचान्यत्र द्रष्टव्यः । अभावपदार्थमङ्गीकृत्य भावपदार्थानभ्युपगमे युक्तिविरोधं चाह ।। **किञ्चेति ।। प्रतियोगिन इति ।** भावस्येत्यर्थः । सञ्ज्ञामधिकरण प्रतियोगिभ्यामभावोनिरूप्यत इति वचनादिति ज्ञेयम् । ननु शशविषाणादेः प्रतियोगिनः सत्वाभावेपि ज्ञानमात्रेणाभावप्रतीति दर्शनादिहापि तथैवास्त्विति चेत् । अस्त्यत्राभिप्रायविशेषः । प्रतियोगिभावस्याभावे तदभावो न स्यादित्यस्य प्रतियोग्यारोप पूर्वकप्रतीतिविषयो न स्यादित्यर्थः । प्रतियोगिभूतंभावमारोप्य तन्निषेधः कर्तव्यः । सतु न सम्भवति । भावारोपे प्रधानभूतस्य वास्तवस्य भावस्याभावादिति भाव पदार्थमङ्गीकृत्याभावपदार्थानभ्युपगमे इह भूतले घटोनास्तीति विरोधस्स्यादित्याह ।। **अभावानभ्युपगताविति ।** भावाभावभेदेन परतन्त्रविभागानभ्युपगमेत्वन्यत्रोदाहृतागमविरोध इत्याशयेनाह ।। **विभागेति ।** ननु भावाभावयोर्लक्षणाकथनान्न्यूनतेत्यत आह ।। **भावाभावपदाभ्यामेवेति ।**

विधिनिषेधात्मकत्वंनामास्तित्वनास्तित्वात्मकत्वम् । प्रथमप्रतीतौ योऽस्तीत्युपलभ्यते स भावः । यश्चप्रथमप्रतीतौनास्तीति प्रतीयते सोऽभावः। कुत एतद्वैचित्र्यमिति चेदुच्यते । स्वरूपेण हि भावाभावौ विधिनिषेधात्मानौ रूपान्तरेण निषेधविधिरूपौ । तत्रापातजायां संविदि स्वरूपमात्रमवभासते । द्वितीयादिप्रतीतौ रूपान्तरम् । सामग्रीभेदस्य कार्यगम्यत्वात् । तथाहि

प्रतीतिः । अस्त्यत्र घटस्सनशुक्ल इति । इदं च ज्ञानं न प्राथमिकम् । प्रतियोगिज्ञानादिविलम्बनात् । एवं नास्त्यत्र घटः । अस्तिघटाभाव इति । अभावविशेषणकं सत्ताविशेष्यकं ज्ञानमेतत् । इदमपि न प्रथमभावि । विशेषणीभूतस्याभावस्य पूर्वमज्ञानात् । नास्त्यत्रघट इति ज्ञानेतु घटाभावस्य विशेष्यत्वात् तज्ज्ञानस्य चाकारणत्वान्न विलम्ब इत्याशयः ॥ **विधाग्रहणेनेति** । प्रकारवचने धालित्युक्तत्वेन द्विविधमित्यत्र प्रकारार्थकविधाग्रहणेनेत्यर्थः ।

### अभावविभागः

**(टी.) तत्र भावनिरूपणस्य बहुत्वात्पश्चादुद्दिष्टस्याप्यभावस्य प्रभेदमादावाह ।**

## पूर्वापरसदात्वेन त्रिविधोऽभाव इष्यते ॥ २ ॥

**पूर्वत्वेनापरत्वेन सदात्वेन व्यावर्तकेन त्रिविध इत्यनेनैषां लक्षणान्यप्युक्तानि । योऽभावो वस्तूत्पत्तेः प्रागेवास्ति स पूर्वाभावः । यस्तु वस्तुप्रध्वंसात्परत एवास्ति सोऽपराभावः । यस्तु सदाऽस्ति स सदाभाव इति ।**

**(मं.मं.)** व्यावर्तकेनेत्यनेन मूलग्रन्थे पूर्वापरसदात्वेनेति तृतीया न हेतौ । किं तु इत्थं भूतलक्षण इति दर्शितम् ॥ **योऽभाव इत्यादि** ॥ घटसामग्र्यादावतिव्याप्तिवारणायाभाव पदम् । घटप्रागभावस्य मृदाद्युत्पत्त्यनन्तरमपि सत्त्वेनासम्भवो मा भूदिति प्रतियोगिवाचकवस्तुपदम् । उत्पत्तिपदं तु प्रागभावस्योत्पत्तिपर्यन्तमनुवृत्तिः न तु ततः प्राङ्निवृत्तिरिति दर्शयितुम् । न तु लक्षणान्तर्गतम् । न हि घटात्पूर्वभावी घटोत्पत्त्यनन्तरमभावी घटप्रागभावादन्यः कश्चिदभावोऽस्ति । यद्व्यावृत्त्यर्थं उत्पत्तिपदं लक्षणान्तर्गतं स्यात् । प्राक्पदाभावे तु उत्पत्तेरिति पञ्चमीबलात् परत इत्यापद्येत ततश्च ध्वंसेऽतिव्याप्तिः तन्निवृत्त्यर्थं **प्रागिति** । घटप्रतियोगिकान्योन्याभावरूपे

घटध्वंसे घटोत्पत्तेः पूर्वमपि विद्यमानेऽतिव्याप्तिपरिहारार्थ**मेवे**ति । ध्वंस-लक्षणेऽपि प्रागभावेऽतिव्याप्तिं परिहर्तुं **परत** इति पदम् । घटप्रतियोगिका-न्योन्याभावात्मके पटप्रागभावे घटोत्पत्तेः परतोऽपि विद्यमानेऽतिव्याप्तिं परिहर्तु**मेवे**ति । विनाशसामग्र्युत्तरकालादावतिव्याप्तिं परिहर्तुमभावपदमनु-षञ्जनीयम् । पूर्ववदसम्भवपरिहाराय **वस्तु**पदम् । प्रध्वंसादित्यनेन तु विनाशसामग्री लक्ष्यते । तच्च विनाशसामग्रीसमवधानानन्तरमेव प्रध्वंस इति दर्शयितुम् । न तु लक्षणान्तर्गतम् ।

**(श्री. टि.)** पूर्वोद्दिष्टभाव प्रभेदमनिरूप्यपश्चादुद्दिष्टाभाव भेदस्यादौ निरूपणे निमित्तमाह ॥ **तत्राभावनिरूपणस्येति** । तत्र भावाभावयोर्मध्य इत्यर्थः ॥ **आदावाहेति** । सूचीकटाहन्यायेनेति भावः । द्वन्द्वान्तेश्रूय-माणस्त्वप्रत्ययस्सर्वत्र सम्बध्यत इत्याशयेनाह ॥ **पूर्वत्वेनेति** ॥ **व्यावर्तके-नेति** । पूर्वत्वादिनाव्यावर्तकेन धर्मेणोपलक्षितोभावस्त्रिविध इत्यर्थः । अनेन पूर्वापरसदात्वेनेति तृतीया न हेतौ । किंत्वित्थं भूतलक्षण इति दर्शितं भवतीति ज्ञातव्यम् ॥ **वस्तूत्पत्तेरिति** । वस्तुशब्दः प्रतियोगिपरः । पूर्वाभावः प्रागभावः । अत्रयोवस्तूत्पत्तेः प्रागेवास्ति स प्रागभाव इत्युक्तेऽ-सम्भवः । घटप्रागभावस्य तंत्वाद्युत्पत्त्यनन्तरमपि सत्त्वात् । अतः प्रतियोगिवाचकवस्तुपदम् । तथा च नासम्भवः । योऽभावोवस्तूत्पत्तेरस्तिस प्रागभाव इत्युक्ते उत्पत्तेरिति पञ्चमीबलात्परत इत्याद्यापद्यते । तथाच घटध्वंसेऽतिव्याप्तिस्स्यात्तदर्थं प्रागित्युक्तम् । योऽभावोवस्तूत्पत्तेः प्रागस्ति सप्रागभाव इत्युक्ते घटप्रतियोगिकान्योन्याभावरूपेपटध्वंसे घटोत्पत्तेः प्रागपि विद्यमानेऽतिव्याप्तिस्स्यात्तदर्थमेवेत्युक्तम् । तस्य घटोत्पत्तेः पश्चादपि विद्यमानत्वान्नातिव्याप्तिरिति द्रष्टव्यम् ।

ननु प्राक्त्वं नाम प्रागभावावच्छिन्नसमयवृत्तित्वम् । तथा चात्माश्रय इति चेन्न । प्राक्त्वस्य स्वाभाविककालविशेषनिष्ठस्य तत्स्वभावतया घटत्वादिवद खण्डधर्मत्वाङ्गीकारात् । उक्तं च भगवत्पादैस्स्वत एव काले विशेषाङ्गी-कृतेश्चेति । यस्त्वित्यनन्तरमभाव इति शेषः ॥

**वस्तुप्रध्वंसात्परत एवेति** । प्रतियोगिप्रध्वंसानन्तरमेवेत्यर्थः । अपराभावः प्रध्वंसः । अत्र प्रध्वंसादित्यनेन विनाशसामग्रीलक्ष्यते । विनाशसामग्रीसमवधानानन्तरमेव विनाश इति दर्शयितुमेव तथोक्तम् । न लक्षणान्तर्गतम् । येनात्माश्रयः स्यात् । लक्षणं तु योऽभावः प्रतियोगिकालापेक्षयोत्तरकाल एवास्ति स प्रध्वंस इति । अत्र प्रतियोगिकालापेक्षयोत्तरकाल एव विद्यमाने उत्तरकालेऽति व्याप्तिः स्यात् । तदर्थमभाव इत्युक्तम् । योऽभाव उत्तरकाल एवास्ति स प्रध्वंस इत्युक्तेऽसम्भवस्स्यात् । घटप्रध्वंसस्य तंत्वाद्युत्पत्तिकालात्प्रागपि सत्त्वात् अतः प्रतियोगिकालापेक्षयेत्युक्तम् । तथाच नासम्भवः । योऽभावः काल एवास्ति स प्रध्वंस इत्युक्ते प्रतियोगिकालापेक्षया प्राक्काले विद्यमाने प्रागभावेऽतिव्याप्तिस्स्यात्तदर्थमुत्तरेत्युक्तम् । योऽभावः प्रतियोगिकालापेक्षयोत्तरकालेऽस्ति स प्रध्वंस इत्युक्तेघटप्रतियोगिका- न्योन्याभावात्मके पटप्रागभावे घटापेक्षया परतोपि विद्यमानेऽति व्याप्तिस्स्यात्तदर्थमेवेत्युक्तम् । तस्य प्रागपि सत्त्वान्नातिव्याप्तिरिति ज्ञेयम् ॥ **यस्तुसदास्तीति** । योऽभावस्सदास्ति । निरवधिक इत्यर्थः । प्रतियोगिकालावधिकपूर्वत्वापरत्वरहितोऽभाव इति यावत् । तथा च योऽभावः कालत्रयेऽस्ति सोऽत्यन्ताभाव इति निर्गलितोऽर्थः । नित्ये भावपदार्थे गगनादावतिव्याप्तिवारणायाभाव इत्युक्तम् । अभाव इत्येवोक्ते कादाचित्के प्रागभावे प्रध्वंसे चाति व्याप्तिस्स्यात्तदर्थं कालत्रयेऽस्तीत्युक्तमिति द्रष्टव्यम् ॥

## अभावपरीक्षा

**(टी.) ननु यदपेक्षया पूर्वमपरं चेत्युच्यते स एव प्रागभावप्रध्वंसाभावयोः प्रतियोगी । अत्यन्ताभावस्य तु कः प्रतियोगीति । मैवम् । तथा सति प्रागभावप्रध्वंसाभावयोः प्रतियोगिनियमो न स्यात् ॥ तस्माद्यस्यासौ स एव प्रतियोगीति वाच्यम् । शशविषाणादीनां चाभावोऽत्यन्ताभाव इति स एव प्रतियोगी । अप्रामाणिकस्य कथं प्रतियोगित्व-**

मिति चेत् किमिह तस्य सत्तया कृत्यमस्ति । न हि प्रतियोगित्वं रूपादिवद्धर्मिसत्तासापेक्षम् । प्रतीतिमात्रं तूपयुक्तम् । तदसतोऽप्यस्तीति । इष्यते प्रामाणिकैरिति शेषः ॥ एतेन ये सर्वोप्ययं संसर्गाभाव एक एवेति मन्यन्ते तन्मतमपास्तं भवति । यथा च न कार्यकारणयोः संसर्गस्तथा वक्ष्यते । अत्यन्तासत्प्रतियोगिकस्य तथात्वानुपपत्तेरिति ।

अन्योन्याभावस्य धर्मिस्वरूपत्वसमर्थनम्

तथापि नाभावस्त्रिविधः अन्योन्याभावस्य चतुर्थस्य विद्यमानत्वादित्यत आह ।

**भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक् ।**

तादात्म्यप्रतियोगिकोऽभावोऽन्योन्याभावः । भेद इति यावत् । स च यदधिकरणस्तत्स्वरूपमेव ॥ न तु प्रागभावादिवत्पृथक्प्रमेयमिति नाभाव त्रित्वभङ्गः ॥ धर्मिस्वरूपत्वादिति वक्तव्ये यद्भावाभावस्वरूपत्वादित्युक्तं तत्प्रपञ्चनार्थम् । अथ वा यद्यन्योन्याभावो न घटादिभ्यः पृथक् तर्हि तेषामभावत्वं स्यात् । स्यादेवैतत् । सर्वभावानां स्वेन रूपेण भावत्वं रूपान्तरेणाभावत्वमिति भावाभावस्वरूपत्वादित्युक्तम् । नन्वन्योन्या भाव इति वक्तव्ये किं भावप्रत्ययेन । मैवम् । नायं भावशब्दो भावसाधनः किं तु कर्तृसाधनः । भावश्चात्र प्रकृत इति तल्प्रत्ययोपपत्तिः ।

**(मं.मं.)** ननु युक्तौ प्रागभावप्रध्वंसाभावौ तत्प्रतियोगिनोः सम्भवात् । तथा हि, पूर्वाभावः प्रागभावः उत्तराभावः प्रध्वंस इत्युक्तम् । तत्र एतस्मात्पूर्व इति यदपेक्षया प्रागभावस्य पूर्वत्वं एतस्मात्पर इति च यदपेक्षया प्रध्वंसस्य परत्वं स एव परः पूर्वश्च यथाक्रमं प्रागभावस्य प्रध्वंसस्य चावधित्वेन प्रतियोगी । अत्यन्ताभावस्त्रैकालिकत्वेन निरवधिकतया अवधिभूतप्रतियोगिरहित इति न युक्त इति शङ्कते ॥ **ननु यदपेक्षयेत्यादिना** ॥ स्यादेतदेवम् । यद्यवधित्वं प्रतियोगित्वं स्यात् । न चैतदस्ति । तथा सति

युगपदुत्पन्नसव्येतरविषाणप्रागभावयोस्सव्य विषाणप्रागभावं प्रति दक्षिण-विषाणमपि प्रतियोगि स्यात् । सव्यप्रागभावस्य सव्यापेक्षया पूर्वत्ववत्तेन सहैवोत्पन्नदक्षिणापेक्षयापि पूर्वत्वस्य सत्त्वात् । एवं युगपदुत्पन्नयोर्घटध्वंस-योरपि प्रतियोगिनियमो न स्यात् । तस्मादभाव इत्युक्तौ कस्येत्याकाङ्क्षाया-मस्येत्यधिकरणादि विलक्षणतया अभावनिरूपकत्वेन सम्बद्धस्य यस्या-सावभावोऽनुयोगित्वेन सम्बद्ध्यते । स एवाधिकरणादिविलक्षणो निरूपकः प्रतियोगी । एवं चात्यन्ताभावोऽपि शशशृङ्गादिनिरूप्य इति तन्निरूपकं शशशृङ्गादिकमेव तत्प्रतियोगीत्याह ॥ **मैवमित्यादिना स एव प्रतियोगी-त्यन्तेन ॥**

शशविषाणादीनां चाभाव इत्यत्र ग्रन्थे अभाव इति जातावेकवचनं विवक्षित्वा सर्वात्यन्ताभावेष्वप्रामाणिकप्रतियोगिकत्वानुगतिप्रदर्शनाय शश-विषाणादीनामिति बहुवचनं प्रयुक्तम् । स एव च प्रतियोगीत्यत्र ग्रन्थे शशविषाणमेव तदभावप्रतियोगि नान्यदनिरूपकत्वात् । तथा चास्मिन्पक्षे न प्रतियोग्यनियम इति दर्शयितुं स एव प्रतियोगीत्येकवचनं प्रयुक्तमित्यविरोधः॥

**न हि प्रतियोगित्वमित्यादि ॥** रूपादिकं यथा धर्मिसत्तासापेक्षं न तथा प्रतियोगित्वम् । प्रागभावादिदशायां असतोऽपि घटादेस्तत्प्रतियोगित्व दर्शनात् । कालान्तरे सत्वस्य चेदानीमनुपयोगात् । तज्ज्ञानहेतुभूतज्ञान-विषयत्वविशेषरूपप्रतियोगित्वे प्रतीतिमात्रमुपयुक्तम् । तच्चासतोप्यस्ति । अन्यथा असदवच्छिन्नप्रतीतिनिषेधानुपपत्तेरिति भावः ॥ **सर्वोऽप्ययमिति ॥** अन्योन्याभावस्य संसर्गाभावत्वानुपपत्तेः प्रकृतप्रागभावादित्रये एव सर्वशब्द मुपसंहर्तुं प्रकृतपरामर्शी अयं शब्दः प्रयुक्तः ॥ **यथा चेति ॥** सति ह्युपादानोपादेययोस्संसर्गे उपादेयपूर्वकालसम्बद्धः संसर्गाभावः प्रागभावः । तदुत्तरकालसम्बद्धस्तु प्रध्वंस इति तयोस्संसर्गाभावान्तर्भावः स्यात् । स एव नास्ति । उपादानोपादेययोरभेदस्य वक्ष्यमाणत्वात् । तस्मान्न तयोस्संसर्गा-भावेऽन्तर्भाव इत्यर्थः ॥ **अत्यन्तासदिति ॥** शशशृङ्गादिप्रतियोगिकस्य

संसर्गाभावत्वानुपपत्तेरत्यन्ताभावस्यापि न तदन्तर्भाव इत्यर्थः ।। **प्रपञ्चनार्थ-मिति ।।** अभावप्रतियोगिकस्यान्योन्याभावस्य भावस्वरूपत्वं भावप्रति-योगिकस्य त्वभावस्वरूपत्वमिति प्रपञ्चनार्थमित्यर्थः । प्रपञ्चो न कर्तव्यः निष्प्रयोजनत्वात् । अन्यथा द्रव्यगुणादिस्वरूपत्वादित्यपि वक्तव्यं स्यादिति पूर्वत्रारुच्या अन्यथा व्याचष्टे ।। **अथ वेति ।। स्यादेवैतदिति ।।** एतत् घटादीनामभावत्वं स्यादेव । तथा चेष्टापत्तिरित्यर्थः ।।

**नायं भावशब्द इति ।।** यद्ययं भावशब्दो भवनं भाव इति भावसाधन-स्स्यात्तदाऽभावशब्देन नास्तित्वापरपर्यायाभवनरूपस्याभावस्योक्तत्वा-त्तल्प्रत्ययो व्यर्थः स्यात् । अयं तु न भावसाधनः । किं तु भवतीति भाव इति कर्तृसाधनः । तथा चाभावशब्देनासदपरपर्यायस्याभाववत एवोक्तत्वेन अन्योन्याभावशब्देन तादात्म्यरहितस्यैवोक्ततया राहित्योक्तिसिद्ध्यर्थं तल्प्रत्ययः । तादात्म्यरहितत्वरूपान्योन्याभावस्यैव परेण चतुर्थप्रकाराश्रय-तया शङ्कितत्वेन तस्यैव प्रकृतत्वादित्यर्थः । यद्यपि अकर्तरि च कारके सञ्ज्ञायामिति प्रतिषेधान्न कर्तरि घञ् । तथापि श्रिणीभुवोऽनुपसर्ग इत्यने-नैव भवतेः कर्तर्यपि घञ् भविष्यति । कृत्यल्युटो बहुलमिति बहुलग्रहणात् अकर्तरीति प्रतिषेधस्य मिषत्यसौ मेष इत्यादौ घञः प्रतिषेधार्थकत्वेन सावकाशत्वात् । दारयन्तीति दाराः जरयन्तीति जारा इति कर्तर्यपि घञो विधानाच्च । यद्वा अन्योन्याभावस्य भावाभावस्वरूपत्वादन्योन्याभावता न पृथक् । प्रागभावत्वादिवत्प्रकारान्तरं न भवति । येन त्रिधा विभागोऽपि विरुद्ध्येतेति मूलग्रन्थो योज्यः । टीकाऽपि अयं समासान्तर्गतो भावशब्दो भावत्वरूपभाववाचको न भवति । किं तु तदाश्रयस्य भेदस्यैव वाचकः । तथा चान्योन्याभावशब्दोऽपि भेदात्मकस्यान्योन्याभावस्यैव वाचकस्स्यात् । अन्योन्याभावत्वं च परेण चतुर्थप्रकारत्वेन शङ्कितमिति तदर्थं तल्प्रत्यय इति योज्या ।

**(श्री.टि.) यदपेक्षयेति** । पूर्वाभावः प्रागभावः । अपराभावः

प्रध्वंसाभाव इत्युक्तम् । तत्रैतस्मात्पूर्व इति यदपेक्षया प्रागभावस्य पूर्वत्वमेतस्मात्परत इति यदपेक्षया प्रध्वंसस्य परत्वम् । स एव प्रागभावस्य प्रध्वंसाभावस्यावधित्वेन प्रतियोगीति वक्तुं युक्तमित्यर्थः ॥ **कः प्रतियोगीति** । अत्यन्ताभावस्तु त्रैकालिकतया निरवधिक इति अवधिभूत-प्रतियोगिरहित इति भावः ॥ **तथासतीति** । स्यादेतदेवम् । यदि यदपेक्षया-पूर्वोऽपरश्च स एवप्रतियोगीत्येवमवधित्वं प्रतियोगित्वं स्यात् । नचैतदस्ति । तथासतिपटापेक्षयाघटप्रागभावस्यापि कदाचित्पूर्वत्वेन पटोपि घट-प्रागभावस्य प्रतियोगी स्यात् । तथा पटापेक्षया कदाचिद्धटध्वंसस्यापि पश्चात्तनत्वेन पटोपि घटध्वंसस्य प्रतियोगीस्यात् । इत्येवं घटप्रागभाव-घटप्रध्वंसयोर्घट एवप्रतियोगीति नियमोनस्यादित्यर्थः ॥ **यस्यासौस एवेति** । अभाव इत्युक्ते कस्येत्याकाङ्क्षायां घटस्येत्यभावनिरूपकस्य यस्य घटस्या-सावभावोऽनु- योगित्वेन सम्बध्यते स एव निरूपकः प्रतियोगी । एवं च शशविषाणादीनामत्यन्ताभावोपि शशविषाणादिनिरूप्य इति शश-विषाणादीनामेवात्यन्ताभाव प्रतियोगित्वमित्यर्थः । स एवेति जात्येक-वचनम् । शशविषाणादय एव प्रतियोगिन इत्यर्थः । यद्वा शशविषाणा-दीनामिति बहुवचनमेकवचनार्थे । शशविषाणादेरित्यर्थः । अप्रामाणिकस्य शशविषाणादेःप्रतियोगित्वमत्यन्ताभावप्रतियोगित्वम् । प्रतियोगित्वं नामा-भावज्ञानजनकत्वम् । तच्चसत्तागर्भम् । अप्रामाणिकस्य शशविषाणादेश्चा-प्रामाणिकत्वेन सत्त्वाभावात्कथमत्यन्ताभावप्रतियोगित्वमित्यर्थः । इहाभावे । तस्य प्रतियोगिनः । कुत इत्यत आह ॥ **नहीत्यादिना** । रूपादिकं यथा धर्मिसत्तासापेक्षं तथा प्रतियोगित्वं स्वधर्मिभूतस्य प्रतियोगिनस्सत्व सापेक्षं न भवति । तथा सति प्रागभाववादिदशायामसतोपि घटादेस्तत्प्रतियोगित्वं न स्यात् ।

ननु प्रागभावादिप्रतियोगिभूतो घटादिः कालान्तरे सन् न तथात्यन्ता-भावप्रतियोगीति चेन्न । कालान्तरे सत्त्वस्येदानीं प्रतीतिसमयेऽनुपयोगात् ।

प्रतियोगित्वं च नाभावज्ञानजनकत्वम् । येन तत्सत्वमपेक्षितं स्यात् । किं नामाभाव ज्ञानजनकज्ञानविषयत्वमेव । तच्च ज्ञानविषयत्वमसतोपि सम्भवत्येव । अन्यथाऽसद्वैलक्षण्यज्ञानमसन्नप्रतीयत इत्यसत्प्रतीतिनिराकरणं च नस्यादिति भावः ।। **एतेनेति** । प्रागभावत्वादित्रितयेऽभावविभाजकोपाधित्वस्यैव प्रामाणिकत्व कथनेनेत्यर्थः ।। **सर्वोप्ययमिति** । प्रागभावादिरित्यर्थः । अभावोद्विविधः । संसर्गाभावोऽन्योन्याभावश्चेति । संसर्गाभावस्त्रिविधः । प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावश्चेति । तथा च प्रागभावत्वादीनां संसर्गाभाव विभाजकोपाधित्वमेव नाभावविभाजकोपाधित्वम् । अभावविभाजकोपाधिस्तु संसर्गाभावत्वादिरेवेति मन्यन्त इति भावः । कथमपास्तं भवतीत्यत आह ।। **यथाचेति ।। कार्यकारणयोरिति ।** उपादानोपादेययोरित्यर्थः ।। **संसर्ग इति ।** सम्बन्ध्यतिरिक्तसमवायरूपसंसर्ग इत्यर्थः ।। **वक्ष्यत इति ।** कार्यकारणयोश्चैवेत्यादिनोत्तरत्रेत्यर्थः । इदमुक्तं भवति । संसर्गाभावत्वं नाम संसर्गप्रतियोगिकाभावत्वं वा संसर्गारोपपूर्वकप्रमितिविषयाभावत्वं वा । नाद्यः । सति ह्युपादानोपादेय योस्संसर्गे उपादाने पूर्वकाल सम्बद्धोय उपादेय संसर्गप्रतियोगिकोऽभावस्सप्रागभावः । तथोपादाने उत्तरकालसम्बद्धो य उपादेय संसर्गप्रतियोगिकाभावः सप्रध्वंसा भाव इति स्यात् । न चैवम् । उपादानोपादेययोरभेदाङ्गीकारेण उपादाने उपादेयसंसर्गस्यैवाभावात् । प्रागभावादीनां घटप्रतियोगिकतयैवोप लम्भेन संसर्गप्रतियोगिकत्वस्यायुक्तत्वाच्च । नापि द्वितीयः । मृत्पिण्डे आरोप्यनिषिध्यमानो घटसंसर्गस्समवाय एवेति वक्तव्यम् । स चान्यत्रनिरस्त इति ।। **तथात्वानुपपत्तेरिति** । अत्यन्ताभाव प्रतियोगिनः शशविषाणादेरत्यन्तासत्वेन तत्संसर्गस्य कुत्राप्यभावप्रतियोगिनः शशविषाणादेरत्यन्तासत्वेन तत्संसर्गस्य कुत्राप्यभावेन तत्प्रतियोगिकाभावस्य संसर्गाभावत्वानुपपत्तेरित्यर्थः । भेदस्य प्रतियोगिस्वरूपत्वे घटः पटोनेति प्रतीत्यापत्तेः । अतो न प्रतियोगिस्वरूपं भेदः । किंत्वित्यत आह ।। **यदधिकरण इति ।** यद्धर्मिक

इत्यर्थः ।। **प्रपं(चनार्थ)चार्थमिति ।** अभावप्रतियोगिकोन्योन्याभावो भावस्वरूपम् । भावप्रतियोगिकोन्योन्याभावोऽभावस्वरूपमित्येवं धर्मिस्वरूपत्व प्रपञ्चनार्थमेव भावाभावस्वरूपत्वादित्युक्तमित्यर्थः।। **अभावत्वं स्यादिति ।** अभावाभिन्नत्वादित्यर्थः । इष्टापत्तिरित्याशयेनाह ।। **स्यादेवेति ।** भावाभावस्वरूपत्वादित्यस्यार्थमाह ।। **सर्वभावानामित्यादिना ।** स्वेन रूपेण घटत्वादिना । रूपान्तरेण अन्योन्याभावात्मकत्वरूपधर्मान्तरेण । इतीत्यनन्तरमाशयेनेति शेषः ।। **किं भावप्रत्ययेनेति ।** तस्य भावस्त्वतलाविति सूत्रादन्योन्याभावस्य धर्मोऽन्योन्याभावत्वमिति भावार्थकतल्प्रत्ययेन किं प्रयोजनं न किमपि । तथा च स व्यर्थ इति भावः ।। **नायं भावशब्द इति ।** अन्योन्याभावशब्दे विद्यमानोभावशब्द इत्यर्थः ।। **भावसाधन इति ।** भावोधात्वर्थः तं साधयति प्रतिपादयतीति भावसाधनः । धात्वर्थप्रतिपादक इत्यर्थः । तथाहि । अन्योन्याभाव शब्दान्तर्गताभाव शब्दो यदि भवनं भाव इति धात्वर्थ प्रतिपादकः स्यात् तर्हि अन्योन्यमभवनमन्योन्याभाव इति प्राप्त्याऽन्योन्यतादात्म्याभावत्वार्थकस्तल्प्रत्ययोव्यर्थस्स्यात् । किं तु भवतीति भाव इति कर्तृसाधनः । कर्तृत्वप्रतिपादक इति यावत् । तथा चान्योन्यं न भवतीत्यन्योन्याभावः । घटः पटात्मकत्वेन पटोघटात्मकत्वेनेत्यन्योन्यं भवनवन्नभवतीत्यन्योन्यतादात्म्यवन्न भवतीति यावत् । तथाचान्योन्यमभवनवतोऽन्योन्यतादात्म्यरहितस्येति यावत् । भावोधर्मोऽन्योन्याभावता । अन्योन्यमभवनम् । अन्योन्यतादात्म्याभाव इति यावत् । इति लभ्यते । अतोन तल्प्रत्ययोव्यर्थः । ननु कुत एवं व्याख्यायते । अन्योन्याभाव शब्दान्तर्गत भाव शब्दस्य भाव साधनत्वमेवाङ्गीकृत्यान्योन्याभावत्वमेवार्थः किं न स्यादिति चेन्न । अन्योन्याभावस्य चतुर्थस्य विद्यमानत्वादिति तादात्म्याभावरूपान्योन्याभाववत्त्वस्यैव चतुर्थप्रकारत्वेन परेण शङ्किततया तस्यैव प्रकृतत्वात् । अतः कर्तृसाधनत्वमेवाङ्गीकृत्य व्याख्येयमिति भावः । भावोपि द्विविधस्स्मृत इति मूलेन केवलमभावोभेदवान् किं तु भावोपीत्यपि शब्दार्थो द्रष्टव्यः ।

भावविभागः

**(टी.) भावं विभज्य दर्शयति ।**

**चेतनोऽचेतनश्चेति भावश्च द्विविधः स्मृतः ॥ ३ ॥**

**चेतयतीति चेतनः । अनेवंविधोऽचेतनः । स्मृत इति सर्वं चैतन्यमेवेति मतमपवदति ॥**

**(मं.मं.) चेतयतीति ॥** जानातीत्यर्थः ।

**(श्री.टि.)** लक्षणाकथनान्न्यूनताशङ्कां परिहरन् संज्ञानिरुक्त्यैव द्वयोर्लक्षणे लब्धे इत्याह ॥ **चेतयतीति** । जानातीत्यर्थः । ज्ञानाधिकरणमिति यावत् । तथा च ज्ञानाधिकरणत्वं चेतनस्य लक्षणम् । तदनधिकरणत्वमचेतनलक्षणमिति भावः । **सर्वं चैतन्यमेवेति मतमिति** । मृदब्रवीदापोऽब्रुवन् ओषधयः संवदन्त इत्यादिवचनैर्मृदादीनां वाग्व्यवहारावगमनान्मृदादिकं सर्वं चेतनमेवेति मतमित्यर्थः ॥ **अपवदतीति** । अभिमानिव्यपदेशस्तुविशेषानुगतिभ्यामित्यभिमान्यधिकरणन्यायेन मृदादि शब्दानां तदभिमानिदेवतापरतया प्रसिद्धजडमृदादिपरत्वाभावेन न तद्बलान्मृदादीनां चेतनत्वमिति भावः ।

चेतनविभागः

**(टी.) चेतनविभागमाह**

**नित्यमुक्तश्च सृतियुक् परतन्त्रोऽपि चेतनः ।**
**द्विधैव......... ......... ......... ......॥**

**नित्यमुक्त इति कदापि संसारसम्बन्धो यस्य नास्त्यसावुच्यते । कदाचित्संसारसम्बन्धवान्सृतियुक् ।**

**ननु नित्यमुक्तो विष्णुरेव स्वातन्त्र्यात् । अयं तु परतन्त्रविभागोऽभिधीयते । तत्कथं तदन्तर्गतोऽपि चेतनो नित्यमुक्त इति । अत**

**उक्तं परतन्त्रोऽपीति । तथा प्रमाणादिति भावः । अथ वा नित्यमुक्त-श्चेत्परतन्त्रो न स्यादित्यत इदमुक्तम् । एवकारेण संसारस्य मिथ्यात्वा-न्नित्यमुक्त एव चेतन इति मतमपाकरोति ॥**

नित्यमुक्तपरतन्त्रचेतननिर्देशः

**परतन्त्रोऽपि नित्यमुक्तः क इत्यत आह ।**

**...... श्रीर्नित्यमुक्ता.... ।**

**अन्ये तु सृतियुज इति प्रसिद्धमेव ।**

**(मं.मं.) ॥ कदापि संसारेति ॥** यस्य न कदापि संसारसम्बन्धः असौ नित्यमुक्त उच्यत इत्यन्वयः ॥ **कदाचित्संसारेति ॥** संसारसंसर्गात्यन्ता भावानधिकरणत्वं सृतियुग्लक्षणम् । तेन कदाचित्संसारी भूत्वा मुक्तोऽपि सृतियुगेवेति वक्ष्यमाणो मुक्तामुक्तत्वेन सृतियुग्भेद उपपन्न इति भावः ।

ननु नित्यमुक्त इत्यादिना पूर्वं पारतन्त्र्ये नित्यमुक्तत्वानुपपत्तिरिति चोद्योत्तरत्वेन **परतन्त्रोऽपीति** मूलग्रन्थो व्याख्यातः । इदानीं नित्यमुक्तत्वे पारतन्त्र्यानुपपत्तिरिति चोद्योत्तरत्वेन **परतन्त्रोऽपीत्ये**तमेव मूलग्रन्थमन्यथा व्याचष्टे ॥ **अथ वेति ॥**

**(श्री.टि.)** यस्य न कदापि संसार सम्बन्धः असौ नित्यमुक्त इत्युच्यत इत्यन्वयः । मुक्तेष्वतिव्याप्तिपरिहाराय कदापीत्युक्तमिति ज्ञातव्यम् । उत्तरत्र सृतियुक्त्वद्विधामतः । मुक्तोमुक्त इतीति मुक्तस्यापि सृतियुक्प्रभेदत्वमुच्यते । तत्र मुक्तस्य कथं सृतियुक्त्वमित्याशङ्कायां सृतियुक् शब्दार्थमाह ॥ **कदा-चिदिति** । तथा च संसारसंसर्गात्यन्ताभावानधिकरणत्वं सृतियुग्लक्षण-मित्यर्थः । संसारोनामलिङ्ग शरीराख्य प्रकृतिबन्धः । एवं च मुक्तस्यापि पूर्वं संसारसंसर्गवत्त्वात्सृतियुक्प्रभेदत्वं युक्तमिति भावः ॥ **स्वातन्त्र्यादिति** । तथा च स्वतन्त्रतत्वभूतोविष्णुरेव नित्यमुक्तोनान्य इत्यर्थः॥ **तदन्तर्गतोपीति** ।

परतन्त्रप्रभेदान्तर्गतोपि चेतनोनित्यमुक्तः कथं स्यात् । विष्णोःपरतन्त्र-भेदत्वाभावात् । तदतिरिक्तश्चान्योनित्यमुक्तोनास्ति । यःपरं तत्रप्रभेदान्तर्गतः स्यादिति भावः । तथा च पारतन्त्र्ये नित्यमुक्तत्वानुपपत्तिरिति शङ्काभिप्रायः ।। **तथाप्रमाणादिति ।** स्वतन्त्रोविष्णुरेव नित्यमुक्त इति । सत्यम् । परतन्त्रोपि चेतनो नित्यमुक्तोऽस्ति । तथा प्रमाणसद्भावादिति भावः । पूर्वं पारतन्त्र्ये नित्यमुक्तत्वानुपपत्तिरिति चोद्योत्तरत्वेन परतन्त्रोपि नित्यमुक्तोऽस्तीत्येवं व्याख्याय नित्यमुक्तत्वे पारतन्त्र्यानुपपत्तिरिति शङ्कोत्तरत्वेनापि तदेववाक्यं व्याचष्टे ।। **अथवेति ।। इदमुक्तमिति ।** तथाचनित्यमुक्तोपि परतन्त्र इत्यन्वयः। तथा प्रमाणसद्भावादित्यर्थ इति भावः ।। **नित्यमुक्त एवेति ।** न तु सृति-युक्कश्चिदस्ति । अतोद्विधेत्युक्तमसदेवेति भावः ।। **अपाकरोतीति ।** मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधत इत्यादिनानुव्याख्याने संसाराख्य-बन्धमिथ्यात्वस्य दूषितत्वान्नित्यमुक्त एव चेतन इति मतमसदेवेति भावः । श्रीर्नित्यमुक्तेतिमूलम् । तथाचास्वतन्त्रचेतनप्रभेदभूते नित्यमुक्ते श्रीतत्वेऽ-वान्तरभेदाभावात्सृतियुगपेयोक्तोधाल्प्रत्ययोज्ञातव्यः । अन्येतु । स्पृष्टदुःखा-स्स्मस्तश इति तत्वसङ्ख्यानानुसारेण न्यूनतां परिहर्तुमाह ।। **अन्य इति ।** अन्ये श्रीव्यतिरिक्ताश्चेतना इत्यर्थः ।।

### सृतियुक्चेतनविभागः

**(टी.) तत्प्रभेदमाह**

**... ... ... सृतियुक् च द्विधा मतः ।। ४ ।।**
**मुक्तोऽमुक्त इति ... ... ... ।**

**(श्री.टि.) तत्प्रभेदमाहेति ।** धाल्प्रत्ययस्य सृतियुगपेक्षयैवतत्प्रयुक्त-त्वादवान्तरभेदमाहेत्यर्थः । मुक्तोऽमुक्त इति मूले संसारप्रध्वंसाधिकरणत्वं मुक्तत्वम् । वर्तमानसंसारवत्वममुक्तत्वमिति द्रष्टव्यम् ।।

(टी.) मुक्तेष्वपि प्रभेदमाह

... ... ... ... ह्यत्र ब्रह्मान्ता उत्तरोत्तरम् ।

मुक्ताः शतगुणाः प्रोक्ताः ... ... ... ॥

अत्र मुक्तामुक्तयोर्मध्ये । हि शब्देन युवा स्यादित्यादि श्रुतिप्रसिद्धिं सूचयति ।

(मं.मं.) मुक्तोऽमुक्त इति मूलग्रन्थे संसारध्वंसाधिकरणत्वं मुक्तत्वम् । वर्तमानसंसारत्वममुक्तत्वमिति भेदो द्रष्टव्यः ।

(श्री.टि.) युवास्यादित्यादिश्रुतीति । युवास्यात्साधुयुवाऽध्यायक आशिष्ठोद्दढिष्ठोबलिष्ठस्तस्येयं पृथिवीसर्वावित्तस्य पूर्णास्यात्स एकोमानुष आनन्द इत्यारभ्य तेयेशतं प्रजापतेरानन्दास्स एकोब्रह्मण आनन्द इत्यन्त-श्रुतीत्यर्थः । तत्रक्षितिपानारभ्य ब्रह्मपर्यन्तं शतगुणानन्दत्वस्योक्तत्वादिति भावः ॥

रमाया ब्रह्मादिमुक्तसाम्याभावः

(टी.) सृतियुग्भ्यो ब्रह्मादिभ्यः श्रीर्नित्यमुक्ता व्यावृत्तेत्युक्तम् । यदा तु ब्रह्मादयो विमुच्यन्ते तदा साम्यप्राप्तावाह

... ... ... ...रमा तेभ्योऽखिलैर्गुणैः ॥ ९ ॥

नित्यं बहुगुणोद्रिक्ता ... ... ... ।

बहुगुणेति गुणशब्दो गणनार्थः ।

विष्णोः सर्वोत्तमत्वम्

स्वातन्त्र्यं मुक्तिरिति केषाञ्चिन्मतम् । अतो मुक्तेभ्यो विष्णोर्न व्यावृत्तिरित्यत आह ।

... ... ... ततोऽनन्तगुणो हरिः ।

**स्वरूपाविर्भाव एव मुक्तिरिति भावः ।**

(मं.मं.) ॥ **गुणशब्दो गणनार्थ इति** ॥ सहस्रगुणमित्यादाविव गणनार्थः । न त्वानन्दादिगुणार्थः । **गुणै**रित्यनेन पौनरुक्त्यादिप्रसङ्गादित्यर्थः ।

(श्री.टि.) **व्यावृत्तेत्युक्तमिति** । संसारसंसर्गतदत्यन्ताभावरूपविरुद्धधर्माधिकरणत्वादिति भावः ॥ **साम्येति** । मुक्तब्रह्मादिभिःश्रियोगुणैस्साम्य प्राप्तिशङ्कायामाहेत्यर्थः । अखिलैर्गुणैरित्यनेन पुनरुक्तिपरिहारमाह ॥ **बहुगुणेति** । शतगुणं सहस्रगुणमित्यादाविव गुणशब्दोगणनार्थोनत्वानन्दादिगुणार्थः । येनपुनरुक्तिस्स्यादिति भावः ॥ **स्वातन्त्र्यमिति** । पराधीनतैव संसारस्तदपगमेन सर्वेषां स्वातन्त्र्यप्राप्तिरेवमुक्तिः । पराधीनत्वापगमेन सर्वेषां साम्यमेव भवतीति रामानुजमतम् । तथा च मुक्तेभ्यस्सकाशाद्विष्णोस्स्वातन्त्र्येणाधिक्यप्रयुक्ताव्यावृत्तिर्भेदोवैलक्षण्यम् । उत्तमत्वमिति यावत् । नास्ति किन्तु साम्यमेवेत्यर्थः । तर्हि का मुक्तिरित्यत आह ॥ **स्वरूपेति** । यथोक्तम् । मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिरिति ॥

## अमुक्तविभागः

(टी.) **अमुक्तानां विभागमाह**

**अमुक्तास्त्रिविधास्तत्र नीचमध्योच्चभेदतः ॥ ६ ॥**

**तत्र मुक्तामुक्तयोः । तान् विविच्य दर्शयति ॥**

**मुक्तियोग्यास्तत्र चोच्चा नित्यावर्तास्तु मध्यमाः ।**
**नीचा नित्यतमोयोग्याः ... .... ... ।**

(श्री. टि.) **तान्विविच्यदर्शयतीति** । लक्षणकथनेन तान्नीचादीन्विविच्येतरेभ्योव्यावृत्ततया बोधयतीत्येवार्थः । न तु विभज्य दर्शयतीति । अमुक्तास्त्रिविधा इत्यनेनैव विभागस्योक्तत्वादित्यवधेयम् । नित्यावर्तास्त्विति

मूलस्य चोष्कूयते विश इन्द्रोमनुष्यान् पुनः पुनर्मनुष्यांस्तु सृतावावर्तयत्यज इत्यादिनोक्तप्रकारेण त्रिदिवनिरयभूगोचरानित्यबद्धा एते मध्यमा इत्यर्थो-द्रष्टव्यः ॥

**(टी.) तु शब्दोऽवधारणे । तेन यः साधनमनुतिष्ठति स सर्वोऽपि मुच्यत इति मतमपाकृतं भवति ।**

**(मं.मं.) विविच्य दर्शयतीति ॥** लक्षणकथनेनेतरेभ्यो व्यावृत्ततया बोधयतीत्यर्थः । न तु विभज्य इत्यर्थो ग्राह्यः । **अमुक्तास्त्रिविधा** इत्यनेनेव विभागसयिक्तत्वात् ॥ **तेनेति ॥** मुक्तियोग्या उच्चा एवेत्यवधारणेनेत्यर्थः ।

**(श्री.टि.) तेनेति ।** च शब्दस्यावधारणार्थत्वेन ये उच्चाः ब्रह्माद्याः मनुष्योत्तमपर्यन्तास्त एव मुक्तियोग्याः नान्य इति पृथक्कथनेनेत्यर्थः । नन्वत्र सृतियुच्कद्विधामतः मुक्तोऽमुक्त इति सृतियुजान्दुःखस्पृष्टचेतनानां मुक्ता-मुक्तभेदेन द्वैविध्यमुक्तम् । तथा वर्तमानसंसाराणाममुक्तानाम् अमुक्ताः द्विविधाः मुक्तियोग्यास्तदयोग्याश्चेति विभागोवक्तव्यः ।

तत्वसङ्ख्यानेस्पृष्ट दुःखाविमुक्ताश्च दुःखसंस्था इति द्विधेति विभाग-मुक्त्वा दुःखसंस्थामुक्ति- योग्या अयोग्या इति च द्विधेत्युक्तत्वादित्यत आह ॥ **दुःखसंस्था इति ।** मुक्तियोग्यास्तत्रचोच्चा इति उच्चानां मुक्ति-योग्यत्वोत्त्यामध्यमनीचयोस्तदयोग्यत्वस्य लब्धत्वात्सृतियुजाम मुक्तानां मुक्तियोग्यायोग्यविभागोप्यनेन संगृहीत एवेत्यर्थः । आदिपदेनायोग्या अपि-द्विविधाः नित्यसंसारिणस्तमोयोग्याश्चेति विभागग्रहणम् । न तु तत्वसङ्ख्याने देव ऋषिपितृपनरा इति मुक्तप्रभेदः एवं विमुक्तियोग्याश्चेति मुक्तियोग्येष्वतिदिष्टः । तदनुसारेणात्रापि ह्यत्र ब्रह्मान्ता उत्तरोत्तरमित्युक्त प्रभेदोमुक्तियोग्येष्वतिदेष्टव्यः । सकस्मान्नातिदिष्ट इत्यत आह ॥ **यत इत्यादिना ॥ आगन्तुकलाभ इति ।** आगन्तुकस्य स्वरूपाननुबन्धिनो-नूतनस्य कस्यचिद्धर्मस्य लाभ इत्यर्थः । यद्यागन्तुकलाभोमुक्तिस्तर्हिमुक्त

प्रभेदोमुक्तियोग्येष्वतिदेष्टुमशक्यस्स्यात् । न चैवम् । किन्तु पूर्वं विद्यमानस्य स्वरूपस्याविर्भाव एवमुक्तिर्नान्या । तथा च मनुष्योत्तमक्षितिपानारभ्य ब्रह्मपर्यन्तं शतगुणानन्दत्वेनोच्चनीचभावेन तारतम्यरूपप्रभेदोक्तौ मुक्तियोग्येष्वपि संसारावस्थायां तद्वदेव प्रभेदोस्तीति स्पष्टत्वादत्र तदतिदेशो न कृत इत्यर्थः । दैत्यरक्षः पिशाचकाः । मर्त्याधमाश्चतुर्धैवतमोयोग्याः प्रकीर्तिताः । ते च प्राप्तान्धतमसस्सृतिसंस्था इति द्विधेति तत्वसङ्ख्यानोक्तोऽन्योपि विभागोद्रष्टव्य इत्याह ॥ **नित्यतमोयोग्या अपीति** ॥ **प्रत्येकमिति** । प्राप्ततमसः सृतिसंस्थाश्चतमोयोग्याः दैत्यादिभेदेन प्रत्येकं चतुर्विधा इत्यर्थः ॥

**(टी.) दुःखसंस्थामुक्तियोग्या इत्यादिविभागोऽप्यनेन सङ्गृहीतो भवति । यतः स्वरूपाविर्भावमात्रं मुक्तिर्नागन्तुको लाभोऽतो मुक्तानां भेदवत्त्वे मुक्तियोग्या अपि भेदवन्त इति स्फुटमेवेति नोक्तम् ।**

**नित्यतमोयोग्या अपि द्वेधा । प्राप्ततमसः सृतिसंस्थाश्चेति । ते च प्रत्येकं दैत्यादिभेदेन चतुर्धा इत्यपि द्रष्टव्यम् ॥**

**(मं.मं.)** ननु तत्वसङ्ख्याने वर्तमानसंसाररूपाणां दुःखसंस्थानां **दुःखसंस्था मुक्तियोग्या अयोग्या इति च द्विधेति** द्वैविध्यमुक्तम् । अत्र तत्कस्मान्नोक्तं इत्याशङ्क्याह ॥ **इत्यादि विभागोप्यनेन सङ्गृहीत इति** ॥ उच्चानां मुक्तियोग्यत्वोक्त्या मध्यनीचयोस्तदयोग्यत्वमुक्तमेव । अयोग्येष्वपि नित्यसंसारित्वतमोयोग्यत्व लक्षणद्वैविध्यप्रदर्शनार्थं तूत्तमत्वादिना त्रैविध्यमुक्तमिति भावः । ननु तत्वसङ्ख्याने एवं **विमुक्तियोग्याश्चेति** मुक्तप्रभेदो मुक्तियोग्येष्वतिदिष्टः । स कस्मादिह नोक्त इत्याशङ्क्यानुक्तसिद्धत्वान्नोक्त इत्यत आह ॥ **यत इत्यादिनोक्तमित्यन्तेन** ॥

अन्यदपि तत्वसङ्ख्यानोक्तमत्र ग्राह्यं अविरोधादित्याह ॥ **नित्यतमोयोग्या इत्यादिना द्रष्टव्यमित्यन्तेन** ॥

### अचेतनविभागः

(टी.) एवं चेतनविभागमभिधायाचेतनविभागमाह ।

**..... द्विधैवाचेतनं मतम् ॥ ७ ॥**
**नित्यानित्यत्वभेदेन ..... ।**

**एवकारेण सर्वनित्यत्वं सर्वानित्यत्वं च व्यावर्तयति । सर्वनित्यत्वे कारकवैयर्थ्यम् । अभिव्यक्त्यर्थमिति चेत् । तदाऽभिव्यक्तेरप्यसत्या एवोत्पत्तिः । न चेदुक्तवैयर्थ्यानिस्तारः । व्यक्तेरपि व्यक्त्यङ्गीकृतावनवस्था ।**

(श्री.टि.) **सर्वनित्यत्व इति ।** सर्वनित्यत्वमङ्गीकृत्यात्यन्त(ता)तस्य तस्यात्यन्तासत्कार्यवादाङ्गीकारत्यन्तासत्कार्यवादाङ्गीकारे सत्कार्यवादाङ्गीकार इत्यर्थः ॥ **कारकेति ।** घटादेस्सर्वस्य नित्यत्वे दण्डचक्रादिरूपकारकसमूहस्य वैयर्थ्यं स्यादित्यर्थः । पूर्वं मृत्पिण्डे विद्यमानस्यैव घटादेरभिव्यक्त्यर्थं कारकचक्रमुपयुज्यते । अतोन वैयर्थ्यमित्याशङ्कते ॥ **अभिव्यक्त्यर्थमिति चेदिति ।** तत्र प्रष्टव्यम् । साभिव्यक्तिरपि किं पूर्वमसत्येवोत्पद्यते उत सती । नाद्यः । अत्यन्तसत्कार्यवादभङ्गापत्त्यासर्वनित्यत्वभङ्गापत्तेः । व्यक्तेरसत्या एवोत्पत्त्यङ्गीकारादित्याह ॥ **तदाव्यक्तेरिति ।** द्वितीयेतुकारक चक्रवैयर्थ्यमित्याह ॥ **नचेदिति ।** ननु पूर्वं सत्या एव व्यक्तेरुत्त्यङ्गीकारेपि न कारक चक्रवैयर्थ्यम् । व्यक्त्यभिव्यक्त्यर्थत्वात् कारकचक्रस्येत्याशङ्क्यनिषेधति ॥ **व्यक्तेरपीति** ॥ **अनवस्थेति ।** व्यक्तिनिष्ठाव्यक्तिरपि यद्यपि सत्येवोत्पद्यते । तर्ह्यत्यन्तसत्कार्यवादभङ्गापत्त्या सर्वनित्यत्वभङ्गः । सतीचेत्कारकचक्रवैयर्थ्यम् । तस्या अपि व्यक्तेः पुनर्व्यक्त्यन्तराङ्गीकारेऽनवस्थेत्यर्थः ॥

**(टी.) सर्वानित्यत्वे चोपादानाद्यभावेन सृष्ट्यनुपपत्तिः । क्षणभङ्गस्तु प्रत्यभिज्ञादिना परास्त इति । नित्यत्वानित्यत्वाभ्यां भेदो नित्यानित्यत्व भेदः ।**

**(मं.मं.)** अभिव्यक्तिः किं सती उतासती । अन्त्ये सर्वनित्यत्वभङ्गः । व्यक्तेरसत्या एवोत्पत्तेरित्याह ।। **तदा व्यक्तेरिति** ।। आद्ये कारक-वैयर्थ्यमित्याह ।। **न चेदिति** ।। ननु व्यक्तेस्सत्त्वेऽपि न कारकवैयर्थ्यम् । व्यक्त्यर्थत्वात्कारकाणमित्यत आह ।। **व्यक्तेरिति** ।।

**(श्री.टि.) सृष्ट्यनुपपत्तिरिति** । प्रलये सर्वेषामपि नष्टत्वेनोपादानाद्य-भावेनादिकालीनसृष्ट्यनुपपत्तिरित्यर्थः । येतु सर्वं क्षणिकमिति मन्यमानाः परमाणुपुञ्जवादिनोबौद्धाः उपादेयमवयविनमङ्गीकृत्योपादानाद्य भावेपि प्रतिक्षणं सृष्टिं मन्यन्ते । तान्प्रति कारकचक्रवैयर्थ्यमिष्टमेवेत्यत आह ।। **क्षणभङ्गस्त्विति** । सर्वक्षणिकत्वाङ्गीकारे तदेवेदमिति पूर्वोत्तरकाल-योस्स्थितस्य घटादेरैक्यावगाहि प्रत्यभिज्ञाविरोधोऽनुस्मृतेश्चेति सूत्रोक्तो-द्रष्टव्यः । आदिपदेनासति प्रतिज्ञा विरोधः । पूर्वभावभवंकार्यमुततन्नाश-सम्भवमिति सूत्रानुव्याख्यानोक्तक्षणिकत्वनिराकरणयुक्तिर्ग्राह्या । मूले नित्यानित्यत्वभेदेनेति प्रकारैक्यमेवप्रतीयतेऽतोव्याख्याति ।। **नित्यत्वा-नित्यत्वाभ्यां भेद इति** ।।

**(टी.) नित्यानित्यत्वं नाम विधान्तरं तत्वसङ्ख्याने कथितम् ।। तत्कथं द्विविधमेवाचेतनमुच्यत इति । नैष दोषः । पुराणादि येनांशेन नित्यं तमंशं नित्यवर्गे निधाय येनांशेनानित्यं तमंशमनित्यवर्गे निधायायं विभाग इत्यङ्गीकारात् । तर्हि नित्यानित्यं कास्तीति चेन्न । अंशांश्या-देरत्यन्तभेदा भावेन तृतीयराशिसम्भवात् । अत्र तु बुद्ध्यैव विवेक इत्यविरोधः । अत एव संसृष्टासंसृष्टविभागोऽत्र नोक्तः । सूक्ष्मभागस्य नित्येषूपचयभागस्यानित्येष्वन्तर्भावादिति ।**

**(मं.मं.) पुराणादि येनांशेनेत्यादि** ।। पुराणादिपौरुषेयं वाक्यं कालः प्रकृतिश्च येनांशेन वर्णपदादिरूपेण प्रवाहरूपेणोपादानरूपेण च यथाक्रमं नित्यं तमंशं नित्ये निधाय येनांशेन सन्दर्भरूपेण निमेषाद्यवयवरूपेण विकाररूपेण च यथाक्रममनित्यं तमंशमनित्ये निधाय द्वैराश्येन विभाग

इत्यङ्गीकारान्न तत्वसङ्ख्यानोक्तत्रैराश्यविरोध इत्यर्थः । यदि विकारादेः प्रकृत्यादिनाऽत्यन्तभेदः स्यात्तदा विकारादेरनित्ये प्रकृत्यादेश्च नित्येऽन्तर्भावात् नित्यानित्यस्यासिद्धिः । तस्य त्वत्यन्ताभेदस्याभावेनैकस्यैव वस्तुन उपादानात्मना नित्यत्वं कार्यात्मनाऽनित्यत्वमिति नित्यानित्यत्वयोरेकत्र निवेशान्नित्यानित्यरूपतृतीयराशिसम्भवात्तत्वसङ्ख्याने पृथगुक्तिर्युक्तेत्याह ॥ **अंशांश्यादेरिति** ॥ अत्र तर्हि कस्मात्तृतीयराशिर्नोक्त इत्यत आह ॥ **अत्र तु बुद्ध्यैवेति** । यथा धूमवदग्निमतोरत्यन्तभेदाभावेऽपि घटकलशवदत्यन्तमभेदाभावाद्धूमाश्रयत्वं धूमवत्त्वं वह्न्याश्रयत्वं वह्निमत्त्वमिति बुद्ध्या विवेकः क्रियते तथा विकारविकार्यादेरत्यन्तभेदाभावेऽपि अत्यन्तमभेदाभावात्कार्यद्रव्यत्वं विकारत्वमुपादानद्रव्यत्वं विकारित्वमिति बुद्ध्यैव विवेकः क्रियते । तथा च नित्यत्वानित्यत्वयोरत्यन्ताभिन्नैकवस्तुनि निवेशाभावेन तृतीयराश्यभावस्य विवक्षितत्वात् द्वैराश्योक्तिविरोधो नेत्यर्थः । अत एव तत्वसङ्ख्यानोक्तः अनित्यस्य संसृष्टासंसृष्टविभागोऽप्यत्र नोक्त इत्याह ॥ **अत एवेति** ॥ अत एवेत्येतद्विशदयति ॥ **सूक्ष्मभागस्येति** ॥ अत्र त्वण्डतदन्तर्गतोपादानवन्महदाद्युपादानस्यानित्यत्वाभावात् सूक्ष्मभागोपचितभाग योरत्यन्तभेदाभावाच्चोपादानरूपेण नित्यानां महदादीनां प्राकृताद्यंशैरुपचयमात्रं क्रियत इति तान्यसंसृष्टानि । ब्रह्माण्ड तदन्तर्गतानि त्वनित्योपादानकत्वात्संसृष्टानीत्युक्तमेवेति भावः ।

(श्री.टि.) **नित्यानित्यत्वं नाम विधान्तरमिति** । तृतीयमित्यर्थः । नित्यानित्यविभागेन त्रिधैवाचेतनं मतमिति नित्यानित्यत्वेन नित्यमनित्यंचेति विभागेन च त्रिधेत्युक्तत्वात् । पुराणाद्या:काल:प्रकृतिरेव च । नित्यानित्यं त्रिधाप्रोक्तमिति पुराणादीनां नित्यानित्यत्व प्रभेदस्योक्तत्वात्तद्विरोध इति भावः ॥ **पुराणादीति** । पुराणशब्देन पौरुषेय ग्रन्थाग्राह्याः । आदिपदेन कालः प्रकृतिश्च ॥ **येनांशेनेति** । येन भागेन । तथा च पुराणानां वर्णपदादि रूपेण कालप्रवाहरूपेण प्रकृतेरुपादान भूतसूक्ष्मरूपेण च नित्यत्वात्तमंशं

भागं नित्यवर्गेनिधायेत्यर्थः ॥ **येनांशेनानित्यमिति ।** पुराणानामन्यथारचनमेवानित्यत्व मित्युक्तत्वात्पुराणानां पूर्वकल्पापेक्षयाऽन्यथापदवाक्यादिनिबन्धनरूपेण कालस्य निमेषक्षणलवादिरूपप्रवाहि रूपेण प्रकृतेर्विकाररूपेणानित्यत्वात्तमंशं भागमनित्यय वर्गे निधायेत्यर्थः । नन्वेवं विवक्षयानित्यानित्य(त्व)स्यैवाभावेन तत्वसङ्ख्यानोक्तत्रैविध्यमयुक्तं स्यादित्याशङ्कते ॥ **तर्हीति ॥ अंशांश्यादेरिति ।** एकदेशैकदेश्यादेरित्यर्थः । यदि क्षणलवनिमेषादिरूपैकदेशप्रवाहरूपैकदेशिनोर्महदादि रूपविकारप्रकृत्यादिरूपविकारिणोश्चात्यन्तभेदस्स्यात् । नचैवम् । अंशांशिनोर्विकारविकारिणोरभेदस्यापि विद्यमानत्वेनांशस्यानित्यत्वे तदभिन्नस्यांशिनो नित्यस्य प्रवाहस्याप्यनित्यत्वं प्राप्तमेव । तथा विकारस्यानित्यत्वे तदभिन्नस्य नित्यस्य विकारिणस्सूक्ष्मभागस्याप्यनित्यत्वमेव । तथा भेदेनैकस्यैव वस्तुनोंशरूपेणानित्यत्वमंशिरूपेण नित्यत्वं कार्यात्मनाऽनित्यत्वमुपादानात्मनानित्यत्वमिति नित्यत्वानित्यत्वयोरेकत्रैव समावेशेन नित्या नित्यरूपतृतीयवस्तुसिद्धेस्तत्वसङ्ख्याने पृथगुक्तिर्यूक्तैवेति । नन्वेवमंशांश्यादेरभेदस्यापि विद्यमानत्वेन नित्यभागस्य नित्यवर्गेऽनित्यभागस्यानित्यवर्गे विविच्य कथं निधानमित्यत आह ॥ **अत्र तु बुद्ध्यैवविवेक इति ।** स्यादेतदेवम् । यदिघटकलशवदत्यन्ताभेदस्स्यान्नचैवम् । भेदस्याप्यङ्गीकारेण बुध्यैव नित्यानित्यभागं विविच्य नित्यानित्यवर्गयोः निधानं युक्तमेव । तथा च नित्यत्वानित्यत्वयोरत्यन्ताभिन्नैक वस्तुनिष्ठत्वाभावेन तृतीयराश्यभावस्य विवक्षितत्वाद्द्वैराश्योक्तिर्युक्तेति न तत्वसङ्ख्यानविरोध इत्यर्थः । नन्वनित्यं द्विविधं मतम् । असंसृष्टंच संसृष्टमसंसृष्टं महानहम् । संसृष्टमण्डन्तद्गं चेत्येवं तत्वसंख्यानोक्तप्रकारेणानित्यविभागोप्यत्र वक्तव्यः । स कस्मान्नोक्त इत्यत आह ॥ **अत एवेति ।** अत एवेत्यनेनातिदिष्टं पूर्वोपपादनमेव दर्शयति ॥ **सूक्ष्मभागस्येति ।** संसृष्टरूपाण्डतदन्तर्गतपदार्थमूलोपादानभूतसूक्ष्मप्रकृति भागस्य तथाऽसंसृष्टरूपमहदाद्युपादानभूतसूक्ष्मप्रकृतिभागस्य च

नित्येष्वन्तर्भावमुपचयभागस्य चानित्येष्वन्तर्भावमभिप्रेत्य संसृष्टासंसृष्ट-विभागोप्यत्र नोक्त इति भावः ॥

**(टी.) अत्र नित्यं निर्दिशति ।**

**... ... ... देशः कालः श्रुतिस्तथा ।**
**भूतेन्द्रियप्राणगुणसूक्ष्मरूपं च नित्यकम् ॥ ८ ॥**

**देशशब्देनाव्याकृताकाश उच्यते । काल इति तत्प्रवाहः । श्रुतिर्वेदः । भूतान्याकाशादीनि । इन्द्रियाण्येकादश । प्राणोऽहंकारकार्यविशेषः । गुणाः सत्वादयो मात्राश्च । उपलक्षणं चैतत् । महदहङ्काराद्यपि ग्राह्यम् ।**

**(मं.मं.) ॥ अव्याकृताकाश इति ॥** न तु भूताकाशस्तस्यानित्यत्वा-दित्यर्थः ॥ **तत्प्रवाह** इति ॥ न तु निमेषादिस्तस्याप्यनित्यत्वादित्यर्थः ॥ **श्रुतिर्वेद** इति ॥ न तु श्रुतिलिङ्गेत्यादाविव समानपदोपादानलक्षणा श्रुतिः । न वा श्रुत्यर्थाभ्यामित्यादाविवाभिधावृत्तिलक्षणा श्रुतिरित्यर्थः ॥ **एकादशेति** ॥ कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि पञ्च मनश्चैकमित्येकादश ॥ **प्राणोऽहङ्कारकार्यविशेष इति ॥** मुख्यप्राणेनाभिमन्यमानषोडशकलानां मध्ये आद्यकला । न तु मुख्यप्राणादिः । तस्य चेतनत्वेनाचेतनप्रभेदत्वानु-पपत्तेरित्यर्थः । मात्राः शब्दस्पर्शरूपरसगन्धाः ।

**(श्री.टि.) अव्याकृतेति ।** भूताकाशस्यानित्यत्वेनात्र तद्ग्रहणायोगादिति भावः । क्षणलवादिरूपकालस्यानित्यत्वादाह ॥ **तत्प्रवाह इति ।** कालप्रवाह एवैकोनित्योन तु विशेषवानित्यनुव्याख्यानोक्तेरिति भावः । श्रुतिःश्रवण-मित्यन्यथाप्रतीतेः श्रुतिशब्दार्थमाह ॥ **श्रुतिर्वेद इति ।** ननु तत्तद्बुद्ध्युपाधिक क्रमविशिष्टवर्णानां वेदत्वात्तेषां च जन्यत्वात्कथं नित्यत्वेन निर्देश इति चेदुच्यते । वेदशब्देन जहल्लक्षणया पञ्चाशद्वर्णानां ग्रहणात् । अत एवोक्तं तत्वसङ्ख्यानटीकायाम् । वेदा इत्युपलक्षणम् । पञ्चाशद्वर्णानां तथा भावादिति ॥ **आकाशादीनीति ।** आदिपदेन पृथिव्यप्तेजोवायूनां ग्रहणम् ।

तथा च पञ्चभूतानीत्यर्थः । प्राणशब्देन मुख्यप्राणाहङ्कारिकप्राणयोर्ग्रहणे तयोश्चेतनत्वेनाचेतनप्रभेदत्वानुपपत्तेः प्राणशब्द विवक्षितार्थमाह ॥ **प्राणोऽहङ्कारकार्यविशेष इति ।** नासाद्वाराबहिर्यातिप्राणोऽहङ्कारनामवानिति विष्णुरहस्यवचनादाहङ्कारिकप्राणाभिमन्यमानोनासा पुटाद्बहिर्गच्छमान-श्श्वासविशेष इति संप्रदायः ॥ **सत्वादयः** । सत्वं रजस्तम इति त्रयोगुणा इत्यर्थः ॥ **मात्रा इति** । शब्दस्पर्शरूपरसगन्धाः पञ्चेत्यर्थः ॥ **महदहङ्कारा-दीति** । अत्रादिपदेन बुद्धिर्मनः खानिदशेति तत्वसङ्ख्यानोक्तं बुद्धितत्वं ग्राह्यम् । तथाच तेषां(सूक्ष्मरू)मूलरूपं नित्यमितिभावः ॥

अनित्यनिर्देशः

(टी.) अनित्यं निर्दिशति ।

**एषां विकारोऽनित्यः स्यात् ... .... .... ।**

**एषां यथासम्भवं कालादीनां विकार उपचितादिभागः । तत्र कालस्य क्षणाद्यवयवाः । महदादीनामुपचयांशः । एवमेषां महदादीनां विकारं कार्यं ब्रह्माण्डं तदन्तर्गतं सर्वमनित्यमिति ।**

**ननु चेतना नित्या अनित्या बहिर्भूता वा । नाद्यद्वितीयौ । नित्यत्वा-नित्यत्वयोरचेतनप्रभेदत्वेनोक्तत्वात् । न तृतीयः । नित्यानित्यत्वयोः परस्परविरुद्धत्वेन तृतीयप्रकारासम्भवादित्यत आह**

**... ... ... ... नित्या एव हि चेतनाः ।**

**हि शब्दस्तत्र प्रमाणं सूचयति । यथोक्तं जीवो नित्यो हेतुरस्य त्वनित्यः । इति ।**

**न चैवं नित्यत्वानित्यत्वयोरचेतनविभागत्वोक्तिविरोधः । अचेतनं नित्यानित्यभेदाद् द्विधैव । न तु नित्यमेव नाप्यनित्यमेवेत्येवं परा सा । न त्वचेतनमेवैवं विधामिति व्याख्येयत्वात् । उपलक्षणं चैतत् । अन्यदप्येवं**

**प्रामाणिकं ग्राह्यम्। यथा स्वतन्त्रतत्वस्य भावत्वं चेतनत्वं नित्यमुक्तत्वं नित्यत्वं वा अभावस्याचेतनत्वं तत्रापि प्रागभावस्यानादित्वे सत्य-नित्यत्वं प्रध्वंसाभावस्य सादित्वे सति नित्यत्वं अत्यन्ता-भावस्या-नादिनित्यत्वमिति। विभागस्यान्यनिषेधार्थत्वाभावात्।**

**(मं.मं.) ॥ नित्यत्वानित्यत्वयोः परस्परविरुद्धत्वेनेति ॥** आकारभेदं विनेति शेषः ॥ **अनादिनित्यत्वमिति ॥** अनादित्वं प्रागभावाप्रतियोगित्वम्। नित्यत्वं ध्वंसाप्रतियोगित्वमिति भेदः।

**(श्री.टि.) एषामिति।** नित्यत्वेन निर्दिष्टानामित्यर्थः। काले महदादौ तत्कार्यब्रह्माण्डादौ च विकारशब्दस्यैकार्थत्वाभावाद्यथा सम्भवमित्युक्तम्। तदेवविवृणोति ॥ **उपचितादि भाग इत्यादिना।** इदमसंसृष्टम्। एव-मित्यादिना संसृष्टं दर्शितम् ॥ **उक्तत्वादिति।** द्विधैवाचेतनंमतं नित्या-नित्यत्वभेदेनेत्युक्तत्वादित्यर्थः ॥ **धातुरिति।** शरीरमित्यर्थः ॥ **नचैवमिति।** जीवानां चेतनत्वात्तेषां च नित्यत्वाङ्गीकारादित्यर्थः ॥ **एवंपरासेति।** द्विधैवाचेतनं मतं नित्यानित्यत्वभेदेनेत्युक्तिः एवं परा एवमर्थे तात्पर्य-वतीत्यर्थः। तदर्थविशदन प्रकारोचेतनमित्यादिनाकृतः ॥ **द्विधैवेति।** नत्वेकप्रकारमेवेत्यर्थः। तदेव विशदयति ॥ **नतुनित्यमेवेति ॥ नत्वचेतन-मेवेति।** तथा च द्विधैवेत्येवकारस्य द्विधेत्यनेन सम्बन्धोनत्वचेतनमित्य-नेनेत्यर्थः ॥ **एवं विधमिति।** नित्यमनित्यश्चेत्यर्थः। अचेतनं द्विविध-मित्यस्य यद्यचेतनमेव नित्यानित्यप्रभेदेन द्विविधमित्यर्थस्स्यात्। तदैव चेतनानां नित्यत्वोक्तिर्विरुद्धा स्यादिति भावः ॥ **एतदिति।** जीवानां नित्यत्ववचनमित्यर्थः। एतदेव दर्शयति ॥ **यथास्वतन्त्रस्येति।** स्वतन्त्रस्य विष्णोरित्यर्थः ॥ **प्रागभावस्यानादित्वेसत्यनित्यत्वमिति।** घटादावति व्याप्तिवारणायानादित्वेसतीत्युक्तं। तावत्येवोक्तौ गगनादावति व्याप्ति-स्स्यादतोऽनित्यत्वमित्युक्तम्। ननु समग्रस्यापि लक्षणस्यानादि प्रकृति-बन्धात्मकलिङ्गशरीरेऽतिव्याप्तिः। तस्याप्यनादित्वे सति अनित्यत्वादिति

चेन्न । अनादित्वे सत्यनित्याभावत्वमिति विशेषणस्याभिप्रेतत्वाददोषः ।। **सादित्वे सतीति** । अत्रापि गगनादावति व्याप्तिवारणाय सादित्वे सतीति । घटादावतिव्याप्तिवारणाय नित्यत्वमित्युक्तम् । नन्वेवं पुराणेष्वतिव्याप्तिस्स्यात् । तेषामपि सादित्वे सति नित्यत्वादिति चेन्न । पुराणानामन्यथा शब्दरचनमेवानित्यत्वमित्युक्तत्वेन नित्यपदेनैव तद्व्यावृत्तिसिद्धेः । सादित्वे सति नित्याभावत्वमित्यभावपदं वा देयमित्यदोषः।। **अनादिनित्यत्वमिति ।** नित्यत्वमात्रं ध्वंसेऽतिव्याप्तम् । अनादित्वमात्रं प्रागभावे । समग्रं गगनादौ । अतोऽनादिनित्याभावत्वमिति तत्राप्यभावपदं देयमित्यदोषः । ननु द्विविधं परतन्त्रं च भावोऽभाव इतीरित इत्यादिना भावत्वचेतनत्वादेः परतन्त्रप्रभेदत्वेनोक्तत्वात्कथं स्वतन्त्रस्य विष्णोर्भावत्वादिकम् । तथा कथमभावस्याचेतनत्वं चेतनोऽचेतनश्चेति भावोपि द्विविधस्स्मृत इति अचेतनस्य भावप्रभेदत्वेनोक्तत्वादित्यत आह ।।

**विभागस्येति ।। अन्यनिषेधेति ।** स्वतन्त्रस्य भावत्वादिनिषेधार्थत्वस्या भावस्याचेतनत्वनिषेधार्थत्वस्य चाभावादित्यर्थः । द्विविधं परतन्त्रमिति विभागोक्तिः परतन्त्रं भावोऽभाव इति द्विविधमेव नत्वेक विधमित्येवं परा । न तु परतन्त्रमेवैवं द्विविधमिति । तथा चेतनश्चेति विभागोक्तिरपि भावश्चेतनोऽचेतनश्चेति द्विविध एवनत्वेकविध इत्येवं परा । न तु भाव एवैवं द्विविध इत्यर्थाङ्गीकारान्नस्वतन्त्रतत्वस्य भावत्वादिकं अभावस्याचेतनत्वं च विरुद्धमितिभावः ।।

### गुणादीनां विवेचनाभावे कारणोक्तिः

**(टी.) स्यादेतत्, सर्वेणाप्यनेन प्रबन्धेन द्रव्याणामभावानां च विवेकः सिद्धः । नैतावता सर्वं तत्वं विविक्तं भवति । गुणादीनामविचारितत्वात् । न च ते न सन्त्येव । प्रत्यक्षादिसिद्धत्वादित्यत आह**

**गुणक्रियाजातिपूर्वा धर्माः सर्वेऽपि वस्तुनः ।। ९ ।।**

**रूपमेव ... .... ... ... ।**

**गुणा रूपाद्याः । क्रिया उत्क्षेपणाद्याः ॥ जातिः सत्ताद्या ॥ पूर्वपदेन शक्तिसादृश्यविशिष्टादिग्रहणम् । वस्तुनो द्रव्यस्य । सत्यं, सन्ति गुणादयः । किं नाम । यथा भावादयोऽत्यन्तभिन्नाः न तथा गुणादयः । अपि तु स्वाश्रयद्रव्यस्वरूपभूता एव । अतो न ते पृथक्कथ्यन्ते । यदा तु बुद्ध्या विविच्यन्ते तदा विवेकोऽपि कर्तव्य इति ॥**

**(मं.मं.) ॥ यदा तु बुद्ध्या विविच्यन्त** इति ॥ यथा प्रमेयाभिधेययोरभेदेऽपि घटकलशवन्निर्विशेषाभेदाभावात् प्रमाविषयः प्रमेयं अभिधाविषयोऽभिधेय इति बुद्ध्या विवेकः क्रियते तथा द्रव्यगुणादेरपि निर्विशेषाभेदाभावाद्बुद्ध्या विवेकः क्रियत इत्यर्थः ।

**(श्री.टि.) विविक्तं भवतीति** । विवेकेन निरूपितं भवतीत्यर्थः । सर्वस्य तत्वस्य विवेकोविचारोनकृतोभवतीति यावत् । गुणादीनामित्यादि पदेन कर्मसामान्यादेर्ग्रहणम् । ते गुणाद्याः ॥ **प्रत्यक्षादीति** । इह पटेशौक्ल्यं इहपटे चलनं इहपटे पटत्वमिति प्रत्यक्ष(प्रतीति)सिद्धत्वादित्यर्थः ॥ **सत्ताद्येति** । आद्यपदेन द्रव्यत्वगुणत्वकर्मत्वानान्तदवान्तर जातीनां पृथिवीत्वादिरूपत्वाद्युत्क्षेपणत्वादीनां च ग्रहणम् । नन्वेवं गुणादीनां स्वाश्रयद्रव्यस्वरूपत्वे शुक्लरूपवान्पट इत्यादिभेदप्रतीतेः कागतिरित्यत आह ॥ **यदात्विति** । गुणादेर्द्रव्यादिना भेदोयदाबुद्ध्या विविच्य विवेकं कृत्वा रूपवान्पट इत्यादिरूपेण व्यवह्रियते । तदात्यन्ताभेदस्थले विशेषाङ्गीकारेण भेदाभेदस्थले भेदाभेदाङ्गीकारेण विवेकोभेदव्यवहारोपि कर्तव्य इत्यर्थः । शङ्कते ॥

### गुणादीनां स्वाश्रयद्रव्येण भेदाभेदादिकम्

**(टी.) किं गुणादयो द्रव्येणात्यन्ताभिन्न । एव । अवान्तरभेदं च वक्ष्यामीति भावेनाह ।**

**... ... द्विधं तच्च .... .... ।**

तच्च गुणादिकं द्रव्यरूपं द्विधं द्विविधम् । तत्कथमिति । तत्राह ।

**... ... ... यावद्वस्तु च खण्डितम् ।**

किञ्चिद्गुणादिकं यावद्वस्तु यावत्कालं द्रव्यं भवति तावत्तिष्ठति । किञ्चित्खण्डितं सत्यपि द्रव्ये स्वयं नश्यतीत्येवं द्विविधम् । किं ततः प्रकृते । तत्राह

**खण्डिते भेद ऐक्यं च यावद्वस्तु न भेदवत् ॥ १० ॥**

**(श्री.टि.) किं गुणादय इति ।** अत्यन्ताभिन्ना एवेत्यनन्तरं किं नाम भिन्नाभिन्नाश्च सन्तीति वाक्यशेषः । द्रव्यस्वरूपं गुणादिकमित्यन्वयः ।

**(टी.) तत्र यत्खण्डितं गुणादिकं तत्र भेदाभेदौ प्रतिपत्तव्यौ । यत्पुनर्यावद्द्रव्यभावि तत्र भेदो नास्ति । किं तु अत्यन्ताभेद एवेति । गुणादिभेदाभेदचिन्ताप्रसङ्गादुपादानोपादेययोरपि दर्शयति ।**

**खण्डितं रूपमेवात्र विकारोऽपि विकारिणः ।**

**अत्र तत्वे । विकारः कार्यद्रव्यम् । विकारिणः स्वोपादानद्रव्यस्य । खण्डितमेव रूपम् । ततो भिन्नाभिन्नमेवेति ।**

**(मं.मं.) द्विधं द्विविधमिति ॥** अर्शआदिभ्योऽच् इति सूत्रे आकृतिगणश्चायमिति वार्तिककारेणार्शआदेराकृतिगणत्वोक्तेः द्विधाशब्दस्याप्यर्श आदिगणस्थत्वेन मत्वर्थीयाच्प्रत्यये कृते निष्पन्नस्य द्विधशब्दस्य द्विविधशब्दार्थवाचकत्वं युक्तमिति द्रष्टव्यम् ।

**(श्री. टि.)** अर्शआदिभ्योऽजिति सूत्रे आकृतिगणश्चायमिति वृत्तिकारेणार्श आदेराकृतिगणत्वोक्तेर्द्विधा शब्दस्याप्यर्श आदिगणस्थत्वेन मत्वर्थीयेऽच् प्रत्यये सति निष्पन्नस्य द्विविधवाचित्वं युक्तमित्यभिप्रेत्य

द्विधमित्यस्यार्थमाह ॥ **द्विविधमिति** । प्रकारद्वयोपेतमित्यर्थः । भवति विद्यते ॥ **प्रसङ्गादिति** । स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । तथा च गुणादि-भेदाभेदचिन्तया स्मृतत्वादित्यर्थः । कार्यं द्रव्यमुपादेयमित्यर्थः ॥ **खण्डित-मेव रूपमिति** । खण्डितस्वरूपमेवेत्यर्थः । तदभिप्रायमाह ॥ **तत इति** । उपादानद्रव्याद्भिन्नाभिन्नं रूपं स्वरूपमित्यर्थः ।

**(टी.) एवं चात्यन्ताभेदस्य भेदाभेदयोश्च कानि स्थलानीत्याकाङ्क्षायां सङ्कलय्याह**

**कार्यकारणयोश्चैव तथैव गुणतद्वतोः ॥ ११ ॥**
**क्रियाक्रियावतोस्तद्वत्तथा जातिविशेषयोः ।**
**विशिष्टशुद्धयोश्चैव तथैवांशांशिनोरपि ॥ १२ ॥**

**कार्यमुपादेयं पटादि । कारणमुपादानं तन्त्वादि । तयोर्भेद ऐक्यं चेति योज्यम् ॥ च शब्दो वक्ष्यमाणैः सह समुच्चयार्थः । केचित्परमाणव एव तथा तथा सन्निविष्टाः पटादिबुद्धिविषयाः । न तु पटो नामास्तीति ब्रुवते । अन्ये तु कार्यकारणयोरत्यन्तभेदं ब्रुवते ॥ तदुभयनिरासाय एवकारः ॥ खण्डितमेवेत्युक्तत्वान्नात्रात्यन्ताभेदोऽस्ति । प्रागूर्ध्वं सत्स्वपि तन्तुषु पटाभावात् खण्डितत्वम् ।**

**तथा शब्द उपमायां समुच्चये वा । गुणगुणिनोरपि कार्यकारण-वद्भेदाभेदौ प्रतिपत्तव्यौ । यदि गुणोऽयावद्द्रव्यभावी स्यात् यथा चूत-फलस्य श्यामत्वादयः ॥ यावद्द्रव्यभावी त्वत्यन्ताभिन्न एवेति ।**

**परमाणवो रूपादिस्वभावाः । न तु गुणगुणिभावोस्तीत्येके । गुण-गुणिनोरत्यन्तभेद इत्यपरे ॥ तदेवकारेणापाकरोति ॥**

**(मं.मं.) ॥ सत्स्वपि तन्तुषु पटस्याभावात्खण्डितत्वमिति ॥** अयं भावः । तेन सहात्यन्ताभिन्नस्य तस्मिन् सत्यसत्त्वानुपपत्तेस्तन्तुपटयो-

भेदोऽङ्गीकार्यः । न च भेदप्रतिनिधिविशेषबलादेव तदुपपत्तिः । घटपटादौ त्वेकस्मिन्सत्यन्यस्यासत्त्वं प्रति भेदस्य कारणत्वेन क्लृप्तत्वात् । क्लृप्तहेतुं विना कार्याङ्गीकारे चातिप्रसङ्गात् । न च घटपटादावपि तस्मिन् सत्यसत्त्वं प्रति विशेष एव हेतुरस्तु । तेनानुगतहेतुतेति जगति भेद एव मास्त्विति वाच्यम् । तद्भेदस्य घटः पटो नेत्यादिप्रत्यक्षसिद्धतया भेदहीने त्वपर्यायशब्दान्तर-नियामकस्य विशेषस्य तत्रासम्भवात् । घटः पटो नेत्यस्य च तादात्म्याभाव रूपभेद विषयकतयोक्तरूपविशेषविषयकत्वानुपपत्तेः । न च तर्हि तत्सम्बद्ध त्वादेरपि दण्डचैत्रादौ भेदहेतुकत्वदर्शनात् पटस्य शौक्ल्यमिति सम्बद्धतया प्रतीयमानस्य यावद्द्रव्यभाविगुणगुण्यादेर्भेद एवावश्यक इत्यत्यन्ताभेदो न स्यात् । किं तु सर्वत्र गुणगुण्यादौ भेदाभेदावेव स्यातामिति वाच्यम् । अनवस्थादिदोषपरिहारार्थं सर्वैरत्यन्ताभिन्नत्वेनाङ्गीकृते भेदादौ घटो भिन्नः, घटस्य स्वरूपं आनन्दो ब्रह्मणोऽभिन्नः ब्रह्मसमवायः सम्बन्ध इत्यादौ अबाधितसम्बन्धव्यवहारदर्शनेन व्यतिरेकव्यभिचारितया भेदस्य तत्सम्बद्ध-त्वादिकं प्रत्यहेतुत्वात् न च घटपटादौ तस्मिन्सत्यसत्त्वस्याभेदासहिष्णु-भेदहेतुकत्वेन क्लृप्तत्वात् तन्तुपटादावपि शुद्धभेदेनैव भाव्यमिति वाच्यम् । लाघवेन भेदमात्रस्यैव तत्र हेतुत्वात् । अन्यथा गौरवात् । न च तर्हि तन्तु-पटयोर्भेद एवास्तु न त्वभेद इति वाच्यम् । आतानवितानात्मकास्तन्तव एव पट इत्यनुभवेनाभेदस्यापि सिद्धेः । न च भेदाभेदौ विरुद्धौ । उक्तप्रमाणेन तयोः सहोपलम्भे सिद्धे वैयधिकरण्य नियमोपलम्भे प्रमाणस्याभावेन विरोधस्यासिद्धेः । अन्यथा घटत्वपृथिवीत्वयोरपि विरोधः स्तात् । तस्मात्तन्तुपटयोरपि भेदाभेदौ । एवं चूतफलश्यामत्वादेरपि भेदाभेदादिक-मुपपादनीयम् । तस्माद्धटपटादौ शुद्धभेदः । अयावद्द्रव्यभाविगुणगुण्यादौ भेदाभेदौ । यावद्द्रव्यभाविगुणगुण्यादौ सविशेषाभेदः । हस्तकरादौ निर्विशेषाभेद इति व्यवस्था । अत्रोपपत्तिरन्यत्रोक्ताऽनुसन्धेयेति ।

(श्री. टि.) खण्डितेभेद ऐक्यंचेत्यस्यात्रानुवृत्तिमभिप्रेत्याह ।। **तयोर्भेद ऐक्यंचेति ।। सङ्कलय्येति ।** कार्यकारणयोर्भेदाभेदावेव । तदरिरिक्तानि यानि गुणगुण्यादीनितान्येव खण्डितत्वाखण्डिताभ्यां भेदाभेदयोरत्यन्ताभेदस्य च स्थलानीत्येवं संकलय्येत्यर्थः ।। **वक्ष्यमाणैर्गुणगुण्यादिभिः ।** एवकाराभिप्रायमाह ।। **केचिदित्यादिना ।। तथा तथेति ।** गोघटाद्यात्मना ।। **पटोनामेति ।** अवयवीत्यर्थः ।। **इति ब्रुवत इति ।** परमाणु पुञ्जवादिनोबौद्धा इत्यर्थः । अन्येतार्किकाः । अत्र कार्यकारणयोः । कुतोनात्रात्यन्ताभेद इत्यत उक्तम् । खण्डितं रूपमेवेति । विकारोपि विकारिणः । खण्डितमेवरूपमित्यवधारणे न सत्यपि तस्मिन्नसत्वरूपखण्डितत्वस्यैवावधारणाद्भेदाभेदावेव प्रतिपत्तव्यौ । नात्यन्ताभेद इत्यर्थः । कथमत्र खण्डितत्वम् । येनभेदाभेदौस्यातामित्यतस्तदुपपादयति ।। **प्रागूर्ध्वमिति ।** घटोत्पत्तेः प्राक् तन्नाशादूर्ध्वंचेत्यर्थः । ऊर्ध्वमिति असमवायिकारणनाशेन कार्यनाशाभिप्रायेण गुणगुणिनोरपीत्यनेन समुच्चय इत्युक्तं प्रदर्शितम् । कार्यकारणवदित्यनेनोपमायामित्युक्तं प्रदर्शितमिति ज्ञेयम् । तदुदाहरति ।। **यथा चूतफलेति ।** सत्यपि फले आतपेन श्यामत्वस्यापनयेनायावद्द्रव्यभावित्वेन खण्डितत्वादित्यर्थः । पटगतशौक्ल्यादीनां गुणानां यावद्द्रव्यभावित्वेन गुणिना पटेनात्यन्ताभेद इत्यत आह ।। **यावद्द्रव्यभावीत्विति ।। रूपादिस्वभावा इति ।** रूपरसगन्धस्पर्शशब्दात्मकाः परमाणवोरूपस्कन्ध इति बौद्धैरुक्तत्वादित्यर्थः । अपरे तार्किकाः ।।

(टी.) **क्रियाक्रियावतोरपि गुणगुणिवद्भेदाभेदौ अत्यन्ताभेदश्च ज्ञातव्यः । तत्र पटचलनयोर्भेदाभेदौ । सत्यपि पटे चलनाभावात् । चेतनक्रिययोरत्यन्ताभेदः । क्रियाया अपि नित्यत्वात् ।**

(मं.मं.) ।। **क्रियाया अपि नित्यत्वादिति ।।** चेतनक्रियाया नित्यत्वोपपादनं न्यायसुधायां टीकाकारैः कृतमनुसन्धेयम् ।

**(श्री.टि.) नित्यत्वादिति ।** अनित्यत्वात्क्रियाणान्तुकथमेव स्वरूपतेत्या शङ्क्य सविशेषोपि क्रियाशक्त्यात्मना स्थिर इत्यादिनेश्वरक्रियाया नित्यत्व समर्थनेन तदतिरिक्तचेतनक्रियाया अपि नित्यत्वस्य समर्थितप्रायत्वादि-तिद्रष्टव्यम् ।

**(टी.) जातिविशेषयोर्जातिव्यक्त्योरपि भेदाभेदावभेदश्च यथासम्भवं ज्ञातव्यम् । तत्र ब्राह्मणत्वपिण्डयोर्भेदाभेदौ । महापातकेन जातेरपायात् । घटत्वघटयोरत्यन्ताभेद एव ।**

**विशिष्टशुद्धयोर्विशिष्टस्य विशेष्यस्वरूपस्य च भेदाभेदावभेदश्चेति ज्ञातव्यम् । तत्र पर्वतस्याग्निमतश्च भेदाभेदौ । पर्वतसद्भावेप्यग्नि-मतोऽ-भावात् । विष्णोः सर्वज्ञस्य चात्यन्ताभेद एव । एवकारेण विशिष्टस्यैवा-नभ्युपगमं सर्वत्र भेदाभेदाभ्युपगमं च व्यावर्तयति ।**

**(मं.मं.)** ।। जातेरपायादिति ।।

मासेन शूद्रो भवति ब्राह्मणो रसविक्रयात् ।

इत्यादिस्मृत्या तदपायस्मरणादित्यर्थः । नन्वेतानि कर्मनिन्दावचनानि वर्णत्रयकर्महानिप्रतिपादनार्थानीति **भाट्टैरुक्तमिति** चेन्न । शूद्रादिशब्दस्य बाधकं विना जातिरूपस्वार्थपरित्यागेनान्यपरत्वायोगात् । किं च कर्म-निन्दापरत्वे 'तस्माद्ब्राह्मणं नावगुरेत्' इत्यवगुरणादिनिषेधशेषभूतानां 'योऽवगुरेत्तं शतेन यातयेत्' इति शतयातनादिवाक्यानामपि कर्मनिन्दा-परत्वेन फलपरत्वाभावप्रसङ्गेनावगोरणनयभङ्गप्रसङ्गात् । वर्णत्रयकर्महानि-प्रतिपादनार्थत्वे च 'वसन्ते ब्रह्माणोऽग्नीनादधीत' इत्यादावपि ब्राह्मण-शब्दस्य क्षत्रियवैश्यकर्मरहितपरत्वस्यापि वक्तुं शक्यत्वेन शूद्रस्याप्यग्नि-विद्यासद्भावेन वैदिककर्माधिकारापत्त्या अपशूद्राधिकरणभङ्गप्रसङ्गाच्च । विश्वामित्रत्रिशङ्क्वादीनां वरशापादिना क्षत्रियत्वाद्यपायेन ब्राह्मणत्वादि-प्राप्तिस्मरणाच्च । न च तान्यपि ब्राह्मणकर्मयोग्यत्वप्रतिपादनार्थानीति

युक्तम्। ब्राह्मणत्वजातेरभावे ब्राह्मणोद्देशेन विहितकर्मयोग्यताया एवासम्भवादित्यलम्।

(श्री. टि.) तदेव दर्शयति ॥ **तत्र ब्राह्मणत्वेति।** ब्राह्मणव्यक्तिःपिण्ड शब्दार्थः ॥ **महापातकेनेति।** मासेन शूद्रोभवति ब्राह्मणोरसविक्रयादित्यादिस्मृत्या घृततैललवणादि रसविक्रयादि पातकेन ब्राह्मणत्वापायश्रवणादित्यर्थः। इदमुपलक्षणम्। अयसस्स्पर्शमणि सम्बन्धेन स्वर्णत्वप्राप्त्याऽयस्त्वजात्यपायदर्शनादित्यपि ग्राह्यम् ॥ **अग्निमत इति।** अग्निमत्त्वरूपविशिष्टस्येत्यर्थः। सर्वज्ञस्य सर्वज्ञत्वविशिष्टस्य ॥ **विशिष्टस्यैवेति।** विशिष्टं विशेषणविशेष्यतत्सम्बन्धात्मकमेवेत्यङ्गीकुर्वद्भिर्वैशेषिकैर्विशेषणाद्यतिरिक्तस्य विशिष्टस्यानङ्गीकारादिति भावः ॥ **सर्वत्रेति।** अग्निमत्त्वस्य पर्वतेन भेदाभेदवत्सर्वज्ञत्वरूपविशिष्टस्यापि विष्णुना भेदाभेद एवेत्यभ्युपगम इत्यर्थः। सर्वत्र यावद्द्रव्यभाविगुणगुण्यादावपीत्यर्थ इत्यप्याहुः ॥

(टी.) **तथा शब्द उपमायाम्। अपि शब्दः समुच्चये ॥ अंशांशिनोरत्यन्ताभेदो भेदाभेदौ च ज्ञातव्यौ। तत्रैकांशेन भेदाभेदौ। तस्मिन्नपगतेऽप्यंशिनोऽवस्थानात्। सर्वैस्त्वत्यन्ताभेद एवेति। एवकारः कारणातिरिक्तांशाभावात्किमस्य पृथग्ग्रहणेनेत्यस्यापाकरणार्थः। प्रत्यक्षत एव पटाद्यंशिनां तन्त्वाद्यतिरिक्तांशप्रतीतेः।**

(मं.मं.) ॥ **तत्रैकांशेन भेदाभेदाविति** ॥ भेदस्तावदङ्गीकार्यः। अंशापगमे अंश्यवस्थानात्। अभेदोऽपि। घटव्यतिरेकेण पटवत् खण्डव्यतिरेकेण महापटस्यादर्शनात् ॥ **सर्वैस्त्वत्यन्ताभेद एवेति** ॥ एते मिलिता वृक्षा वनं, एते गजादयो मिलितास्सेना, एते मिलितास्तन्तवः पटः, एते खण्डपटा मिलिता महापटो नान्य इत्यनुभवादित्यर्थः ॥ तन्त्वाद्यतिरिक्तेति ॥ हस्तवितस्त्याद्यवच्छेद्यानां ततो न्यूनपरिमाणेभ्यस्तन्तुभ्योऽधिकपरिमाणमहापटाच्चातिरेकप्रतीतेरित्यर्थः।

(**श्री. टि.) उपमायामिति** । तथाचांशांशिनोश्च गुणगुण्यादिवदित्यर्थः । एकांशेन । एकैकतन्तुनापटस्येति शेषः ।। **तस्मिन्निति** । एकैकस्मिन् तन्तु-रूपांश इत्यर्थः । अंशिन:पटस्य ।। **सर्वैरिति** । व्यतिषङ्गविशेषविशिष्टैस्सर्वैस्तंतुरूपांशैरत्यन्ताभेद एव । तद्व्यतिरेकेण पटस्यैवाभावात् । यथोक्तम् । तन्तुभ्योन्य:पटस्साक्षात्कस्य दृष्टिपथंगत इति ।। **कारणातिरिक्तेति** । उपादानातिरिक्तेत्यर्थः । तथा च पटस्योपादानातिरिक्तांशाभावेन कार्य-कारणयोरित्यनेनैवांशांशिनोरपि गृहीतत्वादंशांशिनोरिति पुनः पृथग्ग्रहणं व्यर्थमिति भावः । तमेवापाकरणप्रकारं दर्शयति ।। **प्रत्यक्षत एवेति** ।। **तन्त्वाद्यतिरिक्तांशेति** । उपादानभूततन्त्वाद्यतिरिक्तहस्तवितस्त्यादिरूप-खण्डपटरूपेत्यर्थः ।

**(टी.) किञ्चाकाशस्य तावदंशाः सन्तीत्यङ्गीकार्यम् । अन्यथा आकाशे विहगशरीरभावाभावौ न स्याताम् । संयोगः स्वात्यन्ताभाव-समानाश्रय इति चेन्न । विरोधात् । अन्यथा सर्वत्र भावाभावविरोधा-भावप्रसङ्गात् । न चोपाधिकृतांशसद्भावादविरोधः । उपाधेरपि विहग-शरीरसमानयोगक्षेमत्वात् । न चाकाशस्योपादानकारणमस्ति । तस्मात्कार्यकारणातिरिक्तांशांशिनौ अङ्गीकार्यौ । अत्र सर्वत्रोपपत्तिः शास्त्रोक्ताऽनुसन्धेया ।**

**(मं.मं.) ।। न स्यातामिति ।।** अंशभेदाभावे एकत्र भावाभावयो-र्विरोधादित्यर्थः । अन्यत्र भावाभावयोर्विरोधेऽपि संयोगतदत्यन्ताभावौ न विरुद्धौ । एकत्र प्रतीतेरिति चोदयति ।। **संयोग इति** ।। देशभेदेनैव संयोग-तदत्यन्ताभावयोः प्रतीतेरेकत्र प्रतीतिरसिद्धा । तस्मात्संयोगतदत्यन्ता-भावावपि एकत्र विरुद्धाविति परिहरति ।। **न विरोधादिति** ।।

**(श्री.टि.)** उपादानातिरिक्ता अप्यंशास्सन्तीत्येतद्युक्त्याप्युपपादयति ।। **किञ्चेति** । सन्तीत्यनन्तरं तावदिति शेषः । अन्यथा अंशानङ्गीकारे ।

विहग:पक्षी । पतत्रीविहग:पक्षी(त्यमर:) ॥ **विहगशरीरभावाभावौ ।** पक्षीशरीरसंयोगभावाभावौ । तथा च यद्यकाशेंशा न स्युस्तर्हि इह पतत्री पतति नेहेति आकाशे युगपद्विहगशरीरभावाभावौ नस्याताम् । अतस्तद्भावाभावावच्छेदकत्वेनाकाशेंऽशभेदाङ्गीकार आवश्यक इत्यर्थः । ननु पक्षिशरीरसंयोगभावाभावावच्छेदकत्वेनाकाशेंशभेदोनाङ्गीकार्यः । संयोगस्य स्वात्यन्ता भावसमानाधिकरणत्वादित्याशङ्कते ॥ **संयोग इति** ॥ **विरोधादिति ।** प्रतियोगितदत्ययन्ताभावयोस्सामानाधिकरण्यस्य विरुद्धत्वादित्यर्थः ॥ **अन्यथेति ।** विरोधानङ्गीकार इत्यर्थः ॥ **सर्वत्रेति ।** घटतदभावयोस्तज्ज्ञानयोरित्यर्थः । भावाभावयोर्हि साक्षाद्विरोधस्तद्द्वारा तज्ज्ञानयोरिति हि स्थितिः। घटतदत्यन्ताभावयोरविरोधे तज्ज्ञानयोरप्यविरोधापत्त्या सर्वत्रविरोधवार्तैवोच्छिद्येतेति भावः । ननु विहगशरीरसंयोगस्य स्वात्यन्ताभावसामानाधिकरण्यमस्त्येव । न च विरोधः । अंशभेदेनाविरोधात् । नचांशाङ्गीकारेऽस्मदभीष्ट सिद्धिरिति वाच्यम् । अंशानां स्वाभाविकत्वे हि भवदभीष्टसिद्धिस्स्यात् । नचैवमौपाधिकत्वाङ्गीकारादित्याशङ्कते ॥ **नचेति** ॥ **विहगशरीरेति ।** विहगशरीरवदुपाधिसम्बन्धोप्येकदेश एव वक्तव्यः । तथा च सांशत्वसिद्धिरित्यर्थः । अयंभावः । अंशस्यौपाधिकत्वपक्षे प्रष्टव्यम् । असम्बध्यवा । न द्वितीयः । अतिप्रसङ्गात् । आद्ये स किं सर्वाकाशसम्बन्धी उतैकदेशसम्बन्धी । नाद्यः । कृत्स्नस्याप्युपाधिनाग्रस्तत्वेनांशभेदकारित्वानुपपत्तेः । द्वितीये तस्यैकदेशस्यौपाधिकत्वेऽनवस्था प्रसङ्गात् । स्वाभाविकत्वमेव वक्तव्यमिति स्वाभाविकांशसिद्धिरिति भावः । संत्वाकाशांशास्ततः किं प्रकृत इत्यत आह ॥ **नचेति ।** नहीत्यर्थः । तथाचोपादानातिरिक्तांशसिद्धिरिति भावः । उपसंहरति ॥ **तस्मादिति ।** ननु कार्यकारणयोर्भेदाभेदौ गुणगुण्यादीनां भेदावत्यन्ताभेदश्चेत्युक्तम् । नहि वाङ्मात्रेणार्थसिद्धिरिति तत्रोपपत्तिर्वक्तव्या । तथाकार्यकारणादीनामत्यन्ताभेदवादिनां सर्वत्र भेदाभेदवादिनां परमाणुपुञ्जवादिनां विशिष्टानभ्युपगमवादिनां च

निराकरणमेवकारेण कृतमित्युक्तम् । वाङ्मात्रेण तन्निराकरणायोगात्तत्राप्युपपत्तिर्वक्तव्येति चेत्तत्राह ॥ **अत्र सर्वत्रेति** ॥

**(टी.) अनेन कार्यकारणादीनां समवायो नास्तीत्युक्तं भवति । तथा गुणादीनामनेकाश्रितत्वं जातेर्नित्यत्वं च निरस्तं भवति । अन्यथा सर्वाभेदादिप्रसङ्गात् ।**

**(मं.मं.) ॥ अन्यथा सर्वाभेदादिप्रसङ्गादिति ॥** यदि संयोगादीनां जातेश्चानेकाश्रितत्वं स्यात्तदा गुणिगुणादेरभेदात् घटाभिन्नसंयोगाभिन्नस्य पटस्यापि घटाभेदः प्रसज्येत । तथा घटाभिन्नद्रव्यत्वाभिन्नपटस्यापि घटाभेदः स्यात् । स बाधितः । तस्मान्नानेकाश्रितत्वमित्यर्थः । जातेर्नित्यत्वनिराकरणोक्तिस्तु 'न चैवं जातेरेकाश्रितत्वे निराश्रयजातेरसम्भवेनाश्रयनाशे नाशः स्यादिति वाच्यम् । जातेर्नित्यत्वाभावेनेष्टापत्तेः' इत्यभिप्रायेण व्याख्येया ।

यद्वा **यावद्वस्तु न भेद**वदिति घटघटत्वयोरत्यन्ताभेद उक्तः । स न युक्तः । जातेर्नित्यत्वेन घटनाशेप्यनष्टायाः घटेन सहात्यन्ताभेदा-योगादित्याशङ्कापरिहाराय जातिनित्यत्वनिराकरणोक्तिर्व्याख्येया ।

**(श्री. टि.) अनेनेति** । उपादानोपादेययोर्भेदाभेदवचनेनेत्यर्थः ॥ **समवायोनास्तीत्युक्तं भवतीति** । उपादानोपादेययोरभेदेनोपादानस्यैवोपादेयात्मना परिणामाङ्गीकारेण समवायिकारणे समवेततयोत्पत्त्यनङ्गीकारादिति भावः ॥ **तथा गुणादीनामिति** । संयोगविभागरूपगुणयोरादिपदेन द्रव्यत्वादिजातीनां चेत्यर्थः । अनेकाश्रितत्वमेकस्यैव संयोगादेर्द्विष्ठत्वमेकस्या एवजातेरनेकाश्रितत्वं चेत्यर्थः ॥ **जातेर्नित्यत्वं चेति** । यदि जातिर्नित्या स्यात्तदा यावद्वस्तुन भवेदितिघटघटत्वयोरत्यन्ताभेद उक्तः । सोऽयुक्तस्स्यात् । जातेर्नित्यत्वेन घटनाशेप्यनष्टायास्तस्याः घटेन सहात्यन्ताभेदानुपपत्तेः । अतोजातेर्नित्यत्वं नास्तीत्यर्थः । कथं निरस्तमित्यत आह ॥ **अन्यथेति** । अयमर्थः । यदिसंयोगादेर्जातिश्चानेकाश्रितत्वं स्यात्तदा गुणगुणिनोर्जातिव्यक्त्योश्चाभेदाद्यद्यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्ति-

बलाद्धटाभिन्नसंयोगाभिन्नस्य पटस्यापि घटेनाभेदः प्रसज्ज्येत । तथा घटाभिन्न द्रव्यत्वजात्यभिन्नस्य पटस्यापि घटेनाभेदः प्रसज्ज्येत । तथा घटाभिन्न द्रव्यत्वजात्यभिन्नस्य पटस्यापि घटेनाभेदः प्रसज्ज्येत । किञ्चपटोघटेन संयुक्तोघटाद्विभक्त इति पटधर्मसंयोगादिर्घटप्रतियोगिकतया प्रतीयते । यश्च यत्प्रतियोगिकोनासौ तद्धर्मः । यथास्थविरप्रतियोगिकमपरत्वं न स्थविरधर्मः। तस्मान्नायं संयोगादिर्घटधर्मः । एवं घटधर्मः संयोगादिः पटप्रतियोगिकतयोपलभ्यमानो न पटधर्मोभवितुमर्हति । तथा च पृथक्संयोगादिरनेकधर्मोऽवगम्यत इत्येवम् । संयोगश्चविभागश्चभेदश्चैव पृथक्पृथक् । अन्योन्यप्रतियोगेनह्युभयोरपि दृश्यत इत्यनुव्याख्याने संयोगादेरेकैकवृत्तित्वेऽनुमानरूपप्रमाणणस्योक्तत्वात्संयोगादेर्गुणस्यानेक वृत्तित्वाङ्गीकारे तद्विरोधप्रसङ्गः । तथा नरत्वादिकमप्येवं तत्तद्धर्मतये यत इत्यनेन जातेरनेकाश्रितत्वे प्रत्यक्षस्य एकस्मिन् सविनष्टेपि यतोन्यत्रैव दृश्यत इत्यनेन नष्टानष्टवृत्तिनरत्वं भेदवद्विरुद्धधर्माश्रयत्वात् । छायातपवदित्याद्यनुमानस्योक्तत्वात्तद्विरोध प्रसङ्गश्चादिशब्दार्थः ॥

**(टी.) नन्वेतत्सर्वं परतन्त्रमित्युक्तम् । कोऽसौ परो यत्तन्त्रमेतत् । किं च विष्णुज्ञानमेव मोक्षसाधनमवगतम् । तत्किमनेन ज्ञातेनेत्यत आह ।**

**य एतत्परतन्त्रं तु सर्वमेव हरेः सदा ।**
**वशमित्येव जानाति संसारान्मुच्यते हि सः ॥ १३ ॥**

**यद्यपि केवलस्यास्य ज्ञानं न पुरुषार्थोपयोगि तथापि परमपुरुषाधीनतयाऽवगतं भवत्येव मोक्षसाधनमिति । 'द्वे विद्ये वेदितव्ये' इत्यादिश्रुतिसिद्धमिति हि शब्देन सूचयति ।**

**करतलमिलितामलकप्रख्यं यस्याखिलं विश्वम् ।**
**कमलापरिवृढममलं वन्दे तं वन्द्यपादाब्जम् ॥ १ ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्वविवेकविवरणं श्रीजयतीर्थभिक्षुरचितं सम्पूर्णम् ॥**

**(मं.मं.) ॥ द्वे विद्ये वेदितव्ये इति ॥** अयमर्थः । 'द्वे विद्ये वेदितव्ये' इति श्रुत्या परापररूपविद्याद्वयं वेद्यत्वेन प्रतिज्ञाय 'तत्रापरा ऋग्वेदो यजुर्वेद' इत्यादिना ऋगादेरेव परतन्त्रतत्वभूतदेवतादि प्रतिपादकत्वेनापरविद्यात्वमुक्त्वा 'अथ परा यया तदक्षरमधिगम्यते' इति विष्णुवाचकत्वेन परत्वस्याप्युक्तत्वादपरविद्यार्थोऽस्वतन्त्र तत्वमपि विष्ण्वधीनत्वेन ज्ञेयमेव । 'अन्या वाचो विमुञ्चथ' इत्यादि श्रुतिस्तु स्वरूपेण आकारान्तरेण वा परतन्त्रतत्वज्ञाननिषेधपरा । अन्यथाऽस्यामेव श्रुतौ यस्मिन्द्यौरित्यादिनोक्तद्युभ्वाद्यायनत्वेन विशिष्टस्य ब्रह्मणः 'तमेवैकं जानथ' इति ज्ञानं न विधीयीतेत्यर्थः इति ॥

**इन्दिरातटिदाश्लिष्ट इन्द्रनीलसमद्युतिः ।**
**तापं हरतु मे कृष्णजीमूतोऽमृतवर्षणात् ॥ १ ॥**

**इति श्रीब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासतीर्थमुनिना विरचिता तत्वविवेकभावप्रकाशिका मन्दारमञ्जरी समाप्ता**

**(श्री. टि.) एतत्सर्वमिति ।** भावाभावादिकं सर्वमित्यर्थः ॥ **अवगतमिति ।** तमेवं विद्वानमृत इह भवति । तमेवैकंजानथ आत्मानमित्यादि श्रुत्येत्यर्थः । अनेन परतन्त्रेण । परतन्त्र ज्ञानस्य मोक्षासाधनत्वेन तज्ज्ञानस्य व्यर्थतायाः अन्यावाचोविमुञ्चथेति श्रुतिसिद्धत्वाद्विवेकेन तन्निरूपणं व्यर्थमित्यर्थः । य एतदिति मूले एतत्सर्वं परतन्त्रम् । तु शब्दोविशेषार्थः । सत्ताप्रतीत्याद्यशेषविषये । हरेरेवेति सम्बन्धः । वशमित्येवजानाति नकदाचिदपि तदनधीनतया स्वातन्त्र्येणसोऽपरोक्षज्ञानी संसारान्मुच्यत इति प्रसिद्धमित्यर्थः । केवलस्यान्यानधीनस्यास्य परतन्त्रस्य । तथा चान्यानधीनतया परतन्त्रज्ञानं न पुरुषार्थोपयोगीत्यर्थः ॥ **द्वेविद्येवेदितव्ये इति ।** अयमर्थः । द्वेविद्ये वेदितव्ये पराचैवापराच । तत्र येवेदा यान्यङ्गानि यान्युपाङ्गानियानिप्रत्यङ्गानि सा परा । अथ पराययातदक्षरमधिगम्यत

इत्यादिना ब्रह्ममीमांसाशास्त्रेव्युत्पादितन्यायानुपकृताः ऋगादयोयदपरतन्त्र-भूतदेवताकर्मादि प्रतिपादकतया योज्यन्ते तदा तेषामपरविद्यात्वमुक्तम् । तदुपकृतानामेव ऋगादीनामक्षर शब्दोक्तविष्ण्वधिगतिकरणत्वेन परविद्यात्व मुक्तम् । यथोक्तम् । ऋगाद्या अपराविद्यायदाविष्णोर्नवाचकाः । ता एव परमाविद्या यदा विष्णोस्तुवाचका इति । तथा चापरविद्याप्रतिपाद्यमपि परतन्त्रतत्वं विष्ण्वधीनत्वेन ज्ञेयमेव । अन्यावाच इति श्रुतिश्चविष्ण्व-नधीनतया स्वातन्त्र्येण ब्रह्मादिपरतन्त्रतत्वज्ञाननिषेधपरा । यथोक्त-मनुव्याख्याने । परिवारतयाग्राह्या अपिहेयाःप्रधानत इति ॥

एवं समापितग्रन्थोभगवांष्टीकाकारोन्तेपि मङ्गलमाचरति ॥ **करतल-कलितेति** । कलबन्धन इति धातोः कर्मणिक्तप्रत्ययः । तथा च करतल-सम्बद्धेत्यर्थः । यस्य समस्तं विश्वं जगत्करतलमिलितं यदामलकं तत्प्रख्यन्तत्समानम् । यथा करस्थितमामलकं रेखोपरेखादिना स्पष्टमव-गम्यते । एवमशेषविशेषाकारेण विश्वं यज्ज्ञानेन विषयीकृतमित्यर्थः । करतलमिलितेति पाठे करतलसम्बद्धेत्यर्थोद्रष्टव्यः । तं अमलं निर्दुष्टम् । ब्रह्मादिवन्द्यपादाब्जम् ॥ कमलायाःपरिवृढं भर्तारम् । भर्तापरिवृढः पतिरित्यभिधानात् । पतिं वन्दे । वदि अभिवादनस्तुत्योः । अभिवादनं करोमि । स्तौमिचेत्यर्थः । अमलाश्रीर्हरिप्रियेत्यभिधानात् । कमलाश्रीमहा-लक्ष्मीरित्यशेषमतिमङ्गलम् ॥

**यादवाचार्यहृत्पद्मगतश्रीमध्ववल्लभः ।**
**प्रीयतामनया ग्रन्थकृत्या श्रीबादरायणः ॥ १ ॥**
**लौकिकालौकिकफललक्षणामृतदोहिनीम् ।**
**गुर्वनुग्रहरूपां तां कामधेनुमुपास्महे ॥ २ ॥**

**इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितं तत्वविवेकटीकाविवरणं संपूर्णम् ॥**

श्री आनन्दतीर्थ भगवत्पादाचार्य विरचितम्

# तत्वसङ्ख्यानम्

श्रीजयतीर्थविरचितटीकया

श्रीराघवेन्द्रतीर्थ–श्रीनिवासतीर्थ–

श्रीसत्यधर्म–श्रीपाण्डुरङ्गी केशवाचार्य–

श्रीकाशी आचार्य विरचितटिप्पणीभिः सहितम्

श्री आनन्दतीर्थबगवत्पादाचार्य विरचितः

# तत्वविवेकः

श्रीजयतीर्थविरचितटीकया

श्री व्यासतीर्थविरचितमन्दारमञ्जर्या

श्रीनिवासतीर्थविरचित विवरणेन च सहितः

*सम्पादकः*

विद्वान् एल्.एस्. वादिराजाचार्यः

2005




प्रकाशकाः

द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानम्, बेङ्गलूरु - ४

**TATVASANKHYĀNA** of Śrī Ānandatīrtha with the commentaries of Śrī Jayatīrtha, Śrī Rāghavendratīrtha, Śrī Śrīnivāsatīrtha, Śrī Satyadharmatīrtha, Śrī Pāṇḍurangi Keśavāchārya & Śrī Kāśī Āchārya.

**TATVAVIVEKA** of Śrī Ānandatīrtha with the commentaries of Śrī Jayatīrtha, Śrī Vyāsatīrtha & Śrī Śrīnivāsatīrtha.

Edited by Vidwan L.S. Vadirajacharya, Published by Dvaita Vedanta Studies and research Foundation, Bangalore - 4.

© : Dvaita Vedanta Studies and research Foundation

First Edition : 2005

No.of Pages : xiv+304

XXXX XXX.XXXX
**Price : Rs. 100/-**

No.of Copies : 1000

**This volume is published with the grant from the Govt. of Karnataka for the Research Project undertaken by Dvaita Vedanta Studies and Research Foundation.**

Typeset and Printed at : SHABDA MUDRANA, Bangalore.

# Preface

Tatvasankhyāna and Tatvaviveka are small treatises in which categories of reality as concieved in Dvaita Vedanta are enumerated. The Tatvas are first classified into two, viz Svatantra ie., Independent and Paratantra ie., dependent. The supreme God alone is Svatantra, ie.,independent category. All other categories are paratantra. The Svatantra is defined as that which is independent in respect of its very essential nature, the functions, and the comprehension. The supreme God only is independent in all these respects. All others are entirely dependent upon the supreme God in all these respects.

The Paratantra is further classified as Bhava, Abhava etc.

Tatvaviveka also enumerates the categories, more or less in the same way. This work contains the verses of a larger work of the same name composed by God himself.

Tatvaviveka is not a repetition but an extract of the source work to support Tatvasankhyāna.

The classification of the categories in these texts is quite different from the pattern followed in the texts of other systems of philosophy such as Nyāyavaiśeṣika. The Nyāya Vaiśeṣikas go by the pattern as dravya, Guṇa etc. This is because the objective of that system is to provide the knowledge of the material world while that of Dvaita Vedanta is to lead to the knowledge of Supreme God. Therefore the Supreme God is first stated as Svatantra bringing out his supremacy and all other categories are brought under Paratantra indicating their dependence on the supreme God. The other categories are to be known only to realise the supremacy and the glory of the God.

Tatva Sankhyāna is edited with five commentaries and Tatvaviveka with two commentaries.

Vidwan L.S. Vadirajachar, a scholar at Dvaita Vedanta foundation has edited these two texts, we record our appreciation for this work.

Mahāmahopādhyāya
**Prof.K.T.Pandurangi**
*Chairman,*
Dvaita Vedanta Foundation

# Introduction

The Prakaraṇagranthas are small treatises on specific issues of philosophy.

Sri Madhvacharya has written ten such Prakaraṇa works which are collectively known as Daśaprakaraṇas. These are neatly planned. Two of them viz., Pramāṇa lakṣaṇa and Kathālakṣaṇa deal with the epistemology and the Art of the Philosophical debate.

Three treatises known as Khandanatraya examine the Advaita concepts of Mithyatva and Upādhi.

Four treatises viz., Tatvasamkhyāna, Tatvaviveka, Tatvodyota and Tatvanirṇaya give an exposition of the central doctrine Viṣṇusarvottamatva and the other doctrines like the reality of the world, the five cordinal differences i.e., Panchabheda, the nature of the Jīva, the nature of the liberation etc. In the course of the presentation of these doctrines, the import of the important Śruti passages is discussed. The interpretations offered by the other Schools of Vedanta are reviewed.

Karmanirṇaya the tenth Prakaraṇa is a unique work. In this work by interpreting the Mahānamnī hymns and by pointing out that Indra etc, all the names convey the Supreme God Viṣṇu only, the philosophical import of even the Karmakāṇḍa portion of the Vedas is brought out. In this way these ten Prakaraṇa works assist the comprehension of the doctrines of Vedanta enshrined in the Prasthāna trayi and elaborated in the Bhāṣyas. A brief account of the contents of the two Prakaraṇas included in this volume is given below.

## 1. TATVASAMKHYĀNA

In Tatvasamkhyāna as the very name suggests the categories of the reality as conceived in Dvaita Vedanta are enumerated. This small text opens with the definition of a Tatva i.e., a real entity : 'That which is not superimposed is a real entity'. It is further

explained as that which is the object of valid knowledge. For instance, when 'A garland of flowers is comprended as 'A garland of flowers' then its object viz., the garland of flowers is a real entity. But when some one mistakes it as a snake from a distance or in a dark place, his comprehension is not valid knowledge. Consequently its object viz., Snake which is superimposed on a flower garland is not a real entity. It is Āropita i.e., superimposed, and hence it is not a Tatva i.e., a real entity. All those that satisfy this definition i.e., Tatvam Anārapitam' are Tatvas.

The Tatvas are first classified into two Svatantra i.e., independent and Paratantra i.e., dependent. The Supreme God alone is Svatantra i.e., independent category. All other categories are Paratantra. The Svatantra is defined as that which is independent in respect of its very essential nature, the functions, and the comprehension. The Supreme God is only independent in all these respects. All others are entirely dependent upon the Supreme God in all these respects. Therefore, all others are Paratantra i.e., Paramātmatantra.

The Paratantra is further classified as Bhāva and Abhāva i.e., the Positive and the Negative. 'That which presents itself as 'Is' in its first cognition is Positive' and 'that which present itself as 'Is not' in its first cogntion is 'Negative'. The Bhāva i.e., the Positive is classified into Chetana and Achetana i.e., sentient and non-sentient. The sentient is further classified as that which is never afflicted by the sorrow and those that are afflicted by the sorrow. Goddess Lakshmi only is never afflected by the sorrow. She is nityamuktā i.e., ever free from the bondage. All other sentient beings are afflicted by the sorrow sometime or the other. Further classification of these is given in the Text.

The non-sentient are classified into Nitya i.e., eternal and Anitya i.e., perishable, Nityānitya i.e., partly eternal and partly modified. Veda, Varṇa and Avyākṛta Ākāśa are eternal. Purāṇa, Kāla and Prakṛti are partly eternal and partly changing.

The negative i.e., Abhāva is classified into three viz., Prāgabhāva i.e., previous negation, Pradhvansābhāva i.e., later negation and Sadābhāva i.e., total negation. In respect of Abhāva two important points have to be noted. (1) Anyonyābhāva is not accepted as a category of Abhāva. This is because, Anyonyabhāva i.e., Bheda, the distinction is considered as Dharmisvarūpa i.e., an internal attribute of every entity. To be distinct from all other entities is the very nature of each entity. Therefore, this fact of being distinct from all other entities is part and parcel of the very nature of each entity. Therefore, it is not negative and hence is not to be considered as a category of Abhāva. (2) The Sadābhāva concept of Dvaita is distinct from the Sansargābhāva or Atyantābhava concept of Nyāya Vaiśeṣikas. The Sansargābhava of Nyāyavaiśeṣika could be easily included under Prāgabhava, the absence before the Sansarga i.e., the contact, and under Pradhvansābhava after the contact is withdrawn, that is to say before the Jar is brought on the ground, it is Sansarga prāgabhāva and after the Jar is withdrawn from the ground it is Sansargapradhvansābhāva. Therefore, there is no need to accept a separate type of Abhāva called Sansargābhāva. In respect of the concept of Atyantābhāva an important difference between the Nyāya concept and the Dvaita Concept is, the Pratiyogin of this Abhāva is elsewhere present according to Nyaya view while according to the Dvaita it is only envisaged and denied. It is not a reference to that which is actually present elsewhere and its denial. Therefore, the Pratiyogin of the Abhāva is apramāṇika i.e., not really existing elsewhere. This Abhāva is an abhāva i.e., absence present at all three times i.e., past, present and future. That is why it is called Sadābhāva.

## 2. TATVAVIVEKA

Tatvaviveka also enumerates the categories more or less in the same way. This work contains the verses of a larger work of the same name composed by the God himself. Thirteen verse are quoted in this small work in supportk of the statements made in

